देवानामभिजयेवेति । तावेतमिन्द्राग्निभ्यां विशाखाभ्यां पुरोडाशमेकादशकपालं निरवपताम् । ततो वै तौ श्रैष्ठ्यं देवानामभ्यजयताम् । श्रैष्ठ्यꣳ ह वै समानानामभिजयति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । इन्द्राग्निभ्याꣳ स्वाहा विशाखाभ्याꣳ स्वाहा । श्रैष्ठ्याय स्वाहाऽभिजित्यै स्वाहेति ॥ ४० ॥ [15]अथैतत्पौर्णमास्या आज्यं निर्वपति । कामो वै पौर्णमासी । काम आज्यम् । कामेनैव कामꣳ समर्धयति । क्षिप्रमेनꣳ स काम उपनमति । येन कामेन यजते । सोऽत्र जुहोति । पौर्णमास्यै स्वाहा कामाय स्वाहाऽऽगत्यै स्वाहेति ॥ ४१ ॥ ४ ॥

---

स्वातेराख्या । गृष्टिस्सकृत्प्रसूता । गतमन्यत् ॥

[15]कामो वा इति ॥ तत्साधनत्वात्तच्छब्दयम् ॥

इति तृतीये प्रथमे चतुर्थोऽनुवाकः.

[1]मित्रो वा अकामयत । मित्रधेयमेषु लोकेष्वभि जयेयमिति । स एतं मित्रायानूराधेभ्यश्चरुं निरवपत् । ततो वै स मित्रधेयमेषु लोकेष्वभ्यजयत् । मित्रधेयꣳ ह वा एषु लोकेष्वभिजयति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । मित्राय स्वाहाऽनूराधेभ्यस्स्वाहा । मित्रधेयाय स्वाहाऽभिजित्यै स्वाहेति ॥ ४२ ॥ [2]इन्द्रो वा अकामयत । ज्यैष्ठ्यं देवानामभिजयेयमिति । स एतमिन्द्राय ज्येष्ठायै पुरोडाशमेकादशकपालं निरवपन्महाव्रीहीणाम् । ततो वै स ज्यैष्ठ्यं देवानामभ्यजयत् । ज्यैष्ठ्यꣳ ह वै समानानामभिजयति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । इन्द्राय स्वाहा ज्येष्ठायै स्वाहा । ज्यैष्ठ्याय स्वाहाऽभिजित्यै स्वाहेति ॥ ४३ ॥ [3]प्रजापतिर्वा अकामयत । मूलं प्रजां विन्देयेति । स

---

[1]मित्रो वा इति ॥ मित्रधेयं मित्रत्वं सर्वस्य । मित्राय वा धातव्यं दातव्यं मित्रधेयम् ॥

[2]महाव्रीहयः महाशालयः ॥

[3]मूलं प्रधानभूताम् ॥

एतं प्रजापतये मूलाय चरुं निरवपत् । ततो वै स मूलं प्रजामविन्दत । मूलꣳ ह वै प्रजां विन्दते । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । प्रजापतये स्वाहा मूलाय स्वाहा । प्रजायै स्वाहेति ॥ ४४ ॥ [4]आपो वा अकामयन्त । समुद्रं काममभिजयेमेति । ता एतमद्भ्योऽषाढाभ्यश्चरुं निरवपन्न् । ततो वै तास्समुद्रं काममभ्यजयन्न् । समुद्रꣳ ह वै काममभिजयति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । अद्भ्यस्स्वाहाऽषाढाभ्यस्स्वाहा । समुद्राय स्वाहा कामाय स्वाहा । अभिजित्यै स्वाहेति ॥ ४५ ॥ [5]विश्वे वै देवा अकामयन्त । अनपजय्यं जयेमेति । त एतं विश्वेभ्यो देवेभ्योऽषाढाभ्यश्चरुं निरवपन्न् । ततो वै तेऽनपजय्यमजयन्न् । अनपजय्यꣳ ह वै जयति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र होजुति । विश्वेभ्यो देवेभ्य-

---

[4]समुद्रं कामं कामानां साधकमभिजयेमेति ॥

[5-6]अनपजय्यं केनचिदप्यपनेतुमशक्यम् । 'क्षय्यजय्यौ शक्यार्थे'

स्स्वाहाऽषाढाभ्यस्स्वाहा । अनपजय्याय स्वाहा जित्यै स्वाहेति ॥ ४६ ॥ [6]ब्रह्म वा अकामयत । ब्रह्मलोकमभिजयेयमिति । तदेतं ब्रह्मणेऽभिजिते चरुं निरवपत् । ततो वै तद्ब्रह्मलोकमभ्यजयत् । ब्रह्मलोकꣳ ह वा अभिजयति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । ब्रह्मणे स्वाहाऽभिजिते स्वाहा । ब्रह्मलोकाय स्वाहाऽभिजित्यै स्वाहेति ॥ ४७ ॥ [7]विष्णुर्वा अकामयत । पुण्यꣳ श्लोकꣳ शृण्वीय । न मा पापी कीर्तिरागच्छेदिति । स एतं विष्णवे श्रोणायै पुरोडाशं त्रिकपालं निरवपत् । ततो वै स पुण्यꣳ श्लोकमशृणुत । नैनं पापी कीर्तिरागच्छत् । पुण्यꣳ ह वै श्लोकꣳ शृणुते । नैनं पापी कीर्तिरागच्छति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । विष्णवे स्वाहा श्रोणायै स्वाहा । श्लो-

---

इति निपात्यते । 'ययतोः' इत्युत्तरपदान्तोदात्तत्वम् । क्रियाविशेषणं चेदम् ॥

[7]पुण्यश्लोकः पावनशब्दः ॥

काय स्वाहा श्रुताय स्वाहेति ॥ ४८ ॥ [8]वसवो वा अकामयन्त । अग्रं देवतानां परीयामेति । त एतं वसुभ्यश्श्रविष्ठाभ्यः पुरोडाशमष्टाकपालं निरवपन् । ततो वै तेऽग्रं देवतानां पर्यायन् । अग्रꣳ ह वै समानानां पर्येति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । वसुभ्यस्स्वाहा श्रविष्ठाभ्यस्स्वाहा । अग्राय स्वाहा परीत्यै स्वाहेति ॥ ४९ ॥ [9]इन्द्रो वा अकामयत । दृढोऽशिथिलस्स्यामिति । स एतं वरुणाय शतभिषजे भेषजेभ्यः पुरोडाशं दशकपालं निरवपत्कृष्णानां व्रीहीणाम् । ततो वै स दृढोऽशिथिलोऽभवत् । दृढो ह वा अशिथिलो भवति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । वरुणाय स्वाहा शतभिषजे स्वाहा । भेषजेभ्यस्स्वाहेति ॥ ५० ॥ [10]अजो वा एकपादकामयत । तेजस्वी ब्रह्मवर्चसी स्यामिति । स एतमजायैकपदे

---

[8]अग्रं प्राधान्यम् ॥

[9-10]दृढः चिरजीवनः अशिथिलः अशिथिलाङ्गः

प्रोष्ठपदेभ्यश्चरुं निरवपत् । ततो वै स तेजस्वी ब्रह्मवर्चस्यभवत् । तेजस्वी ह वै ब्रह्मवर्चसी भवति। य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति। अजायैकपदे स्वाहा प्रोष्ठपदेभ्यस्स्वाहा । तेजसे स्वाहा ब्रह्मवर्चसाय स्वाहेति ॥ ५१ ॥ [11]अहिर्वै बुध्नियोऽकामयत । इमां प्रतिष्ठां विन्देयेति । स एतमहये बुध्नियाय प्रोष्ठपदेभ्यः पुरोडाशं भूमिकपालं निरवपत् । ततो वै स इमां प्रतिष्ठामविन्दत । इमाᳪं ह वै प्रतिष्ठां विन्दते । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति। अहये बुध्नियाय स्वाहा प्रोष्ठपदेभ्यस्स्वाहा । प्रतिष्ठायै स्वाहेति ॥ ५२ ॥ [1]पूषा वा अकामयत। पशुमान्त्स्यामिति । स एतं पूष्णे रेवत्यै चरुं निरवपत् । ततो वै स पशुमानभवत् । पशुमान् ह वै भवति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । पूष्णे स्वाहा रेवत्यै स्वाहा। पशुभ्यस्स्वाहेति ॥ ५३ ॥ [13]अश्विनौ वा अकामयेताम् । श्रोत्रस्विनावबधिरौ स्यावेति । तावेतम-

---

[11—12]इमां पृथिवीमेव प्रतिष्ठां लभेयेति । भूमिकपालः भूमिरेव कपालमस्येति ॥

[13—15]श्रोत्रस्विनौ श्रोत्रवन्तौ प्रशस्तश्रोत्रौ । सकारोपजनः छा-

श्विभ्यामश्वयुग्भ्यां पुरोडाशं द्विकपालं निरवपताम् । ततो वै तौ श्रोत्रस्विनावबधिरावभवताम् । श्रोत्रस्वी ह वा अबधिरो भवति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । अश्विभ्याꣳ स्वाहाऽश्वयुग्भ्याꣳ स्वाहा । श्रोत्राय स्वाहा श्रुत्यै स्वाहेति ॥ ५४ ॥ [14]यमो वा अकामयत । पितृणाꣳ राज्यमभिजयेयमिति । स एतं यमायापभरणीभ्यश्चरुं निरवपत् । ततो वै स पितृणाꣳ राज्यमभ्यजयत् । समानानाꣳ ह वै राज्यमभिजयति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । यमाय स्वाहाऽपभरणीभ्यस्स्वाहा । राज्याय स्वाहाऽभिजित्यै स्वाहेति ॥ ५५ ॥ [15]अथैतदमावास्याया आज्यं निर्वपति । कामो वा अमावास्या । काम आज्यम् । कामेनैव कामꣳ समर्धयति । क्षिप्रमेनꣳ स काम उपनमति । येन कामेन यजते । सोऽत्र जुहोति । अमावास्यायै स्वाहा कामाय स्वाहाऽऽगत्यै स्वाहेति ॥ ५६ ॥ ५ ॥

न्दसः । अबधिरौ श्रवणशक्तिमन्तौ । गतमन्यत् ॥

इति तैत्तिरीयब्राह्मणे तृतीये प्रथमे पञ्चमोऽनुवाकः.

[1]चन्द्रमा वा अंकामयत । अहोरात्रानर्धमासा-न्मासानृतून्थ्संवथ्सरमाप्त्वा । चन्द्रमसस्सायुज्यꣳ सलोकतामाप्नुयामिति । स एतं चन्द्रमसे प्रतीदृश्यायै पुरोडाशं पञ्चदशकपालं निरवपत् । ततो वै सोऽहोरात्रानर्धमासान्मासानृतून्थ्संवथ्सरमाप्त्वा। चन्द्रमसस्सायुज्यꣳ सलोकतामाप्नोत् । अहोरात्रान् ह वा अर्धमासान्मासानृतून्थ्संवथ्सरमाप्त्वा । चन्द्रमसस्सायुज्यꣳ सलोकतामाप्नोति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । चन्द्रमसे स्वाहा प्रतीदृश्यायै स्वाहा । अहोरात्रेभ्यस्स्वाहाऽर्धमासेभ्यस्स्वाहा । मासेभ्यस्स्वाहर्तुभ्यस्स्वाहा। संवथ्सराय स्वाहेति ॥५७॥ [2]अहोरात्रे वा अंकामयेताम् । अत्यहोरात्रे मुच्येवहि। न नावहोरात्रे आप्नुयातामिति । ते एतमहोरात्रा-

---

[1]चन्द्रमा वा इति ॥ सायुज्यं समानयोगता । सालोक्यं समानलोकता । प्रतीदृश्या तिथिः प्रतिदिनं चन्द्रमसो गत्या पृथक्त्वेन दृश्यमानत्वात् ॥

[2]अहोरात्रे इति ॥ अतिक्रम्य मुच्येवहि अहोरात्रनिबन्धनदुःखसंस्पर्शात् । न च पुनरहोरात्रे आवामाप्नुताम् । सवात्योः गवोः

भ्यां चरुं निरवपताम् । द्वयानां व्रीहीणाम् । शु- क्लानां च कृष्णानां च । सवात्योर्दुग्धे । श्वेतायै च कृष्णायै च । ततो वै ते अत्यहोरात्रे अमुच्येते । नैनें अहोरात्रे आप्नुताम् । अतिं ह वा अहोरात्रे मुच्यते । नैनमहोरात्रे आप्नुतः । य एतेनं हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । अह्ने स्वाहा रात्रियै स्वाहा । अतिमुक्त्यै स्वाहेति ॥ ५८

[3]उषा वा अकामयत । प्रियाऽऽदित्यस्यं सुभगा स्यामिति । सैतमुषसे चरुं निरवपत् । ततो वै सा प्रियाऽऽदित्यस्यं सुभगाऽभवत् । प्रियो ह वै समा- नानाꣳ सुभगो भवति । य एतेनं हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । उषसे स्वाहा व्युष्ट्यै स्वाहा । व्यूषुष्यै स्वाहा व्युच्छन्त्यै स्वाहा । व्युष्टायै स्वाहेति ॥ ५९ ॥ [1]अथैतस्मै नक्षत्राय चरुं

---

दुग्धे । वत्सान्तरदोह्या मृतवत्सा, तदीया च माता सवात्यौ; समानमेकं वत्सं वात इति कृत्वा ॥

[3]व्युष्टिः, व्यूषुषी, व्युच्छन्ती, व्युष्टा इति उषसोऽवस्थावि- शेषाख्या एताः ॥

[1]उदेष्यते उद्यते उदितायेति नक्षत्रावस्थाविशेषाख्याः । हरः हर-

निर्वपति । यथा त्वं देवानामसि । एवमहं मनुष्याणां भूयासमिति । यथा ह वा एतद्देवानाम् । एवꣳ ह वा एष मनुष्याणां भवति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति। नक्षत्राय स्वाहोदेष्यते स्वाहा । उद्यते स्वाहोदिताय स्वाहा । हरसे स्वाहा भरसे स्वाहा । भ्राजसे स्वाहा तेजसे स्वाहा । तपसे स्वाहा ब्रह्मवर्चसाय स्वाहेति ॥ ६० ॥ [5]सूर्यो वा अकामयत । नक्षत्राणां प्रतिष्ठा स्यामिति । स एतꣳ सूर्याय नक्षत्रेभ्यश्चरुं निरवपत् । ततो वै स नक्षत्राणां प्रतिष्ठाऽभवत् । प्रतिष्ठा ह वै समानानां भवति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । सूर्याय स्वाहा नक्षत्रेभ्यस्स्वाहा । प्रतिष्ठायै स्वाहेति ॥ ६१ ॥ [6]अथैतमदित्यै चरुं निर्वपति । इयं वा अदितिः । अस्यामेव प्रति तिष्ठति। सोऽत्र जुहोति । अदित्यै स्वाहा प्रतिष्ठायै स्वाहे-

---

णसामर्थ्यं, भरः भरणशक्तिः, भ्राजः दीप्तिः, तेजः प्रकाशः, तप ऐश्वर्यं, ब्रह्मवर्चसं ब्राह्मणबलम् ॥

त्ति ॥ ६२ ॥ [7]अथैतं विष्णवे चरुं निर्वपति । यज्ञो वै विष्णुः । यज्ञ एवान्ततः प्रति तिष्ठति । सोऽत्र जुहोति । विष्णवे स्वाहा यज्ञाय स्वाहा । प्रतिष्ठायै स्वाहेति ॥ ६३ ॥ ६ ॥

अग्निर्नः ऋध्यास्म नवोनवोऽग्नि-
मित्रश्चन्द्रमाष्षट् ॥ ६ ॥

अग्निर्नस्तन्नो वायुरहिर्बुध्नियं ऋक्षा वा इयमथै-तत्पौर्णमास्या अजो वा एकपात्सूर्यस्त्रिषष्टिः॥६३

अग्निर्नः—प्रतिष्ठायै स्वाहेति ॥

हरिः ओं ॥ श्रीकृष्णार्पणमस्तु.

---

[5-7]सूर्यो नक्षत्राणां प्रतिष्ठा प्रतितिष्ठत्यस्यामिति प्रतिष्ठा ॥

इति तैत्तिरीयब्राह्मणे तृतीये प्रथमे षष्ठोऽनुवाकः
प्रथमप्रश्नः समाप्तः.

अग्निः पञ्चदश प्रजापतिष्षोडश सोम एकादश रुद्रो दशाक्षैकादश बृहस्पतिर्दश देवासुरा नव पितर एकादशार्यमा भगो दशदश सविता चतुर्दश त्वष्टा वायुरिन्द्राग्नी दशदशाथैतत्पौर्णमास्या अष्टौ पञ्चदश ॥ मित्र इन्द्रः प्रजापतिर्दशदशाप एकादश विश्वे ब्रह्म दशदश विष्णुस्त्रयोदश वसव इन्द्रोऽजोऽहिर्बुध्नियः पूषाऽश्विनौ यमो दशदशाथैतदमावास्याया अष्टौ पञ्चदश ॥ चन्द्रमाः पञ्चदशाहोरात्रे सप्तदशोषा एकादशाथैतस्मै नक्षत्राय त्रयोदश सूर्यो दशाथैतमदित्यै पञ्चाथैतं विष्णवे षट्थ्सप्त ॥

सविताऽऽशूनां व्रीहीणामिन्द्रो महाव्रीहीणामिन्द्रः कृष्णानां व्रीहीणामहोरात्रे द्वयानां व्रीहीणाम् ॥ पितरष्षट्कपालश्सविता द्वादशकपालमिन्द्राग्नी एकादशकपालमिन्द्र एकादशकपालमिन्द्रो दशकपालं विष्णुस्त्रिकपालमहिर्भूमिकपालमश्विनौ द्विकपालं चन्द्रमाः पञ्चदशकपालमग्निस्त्वष्टा वसवोऽष्टाकपालमन्यत्र चरुम् ॥ रुद्रोऽर्यमा पूषा

पशुमान्थ्स्याᳪ सोमो रुद्रो बृहस्पतिः पयसि वायुः पयस्सोमो वायुरिन्द्राग्नी मित्र इन्द्र आपो ब्रह्म यमोऽभिजित्यै त्वष्टा प्रजापतिः प्रजायै पौर्णमास्या अमावास्याया आगत्यै विश्वे जित्या अश्विनौ श्रुत्यै ॥ ब्रह्म तदेतं विष्णुस्स एतं वायुस्सएतदापस्ताः ॥ पितरो विश्वे वसवोऽकामयन्त मेति त एतं निरवपन्न् । आपोऽकामयन्त मेति ता एतं निरवपन्न् । इन्द्राग्नी अश्विनावकामयेतां वेति तावेतं निरवपताम् । अहोरात्रे वा अकामयेतामिति ते एतं निरवपताम् । अन्यत्राकामयतमिति स एतं निरवपत् ॥ इन्द्राग्नी श्रैष्ठ्यमिन्द्रो ज्यैष्ठ्यमिन्द्रो हृढः । अहिस्सूर्योऽदित्यै विष्णवे प्रतिष्ठायै । सोमो यमस्समानानाम् । अग्निर्नो रीरिषदन्यत्र रीरिषः ॥

प्रथमप्रपाठकस्समाप्तः.

# अथ द्वितीयप्रपाठकः.

हरिः ओम् ॥ [1]तृतीयस्यामितो दिवि सोम आसीत्। तं गायत्र्याऽहरत्। तस्य पर्णमच्छिद्यत। तत्पर्णोऽभवत् । तत्पर्णस्य पर्णत्वम् । ब्रह्म वै पर्णः । यत्पर्णशाखया वत्सानपाकरोति । ब्रह्मणैवैनानपाकरोति । [2]गायत्रो वै पर्णः । गायत्राः पशवः ॥ १ ॥ तस्मात्त्रीणित्रीणि पर्णस्य पलाशानि । त्रिपदा गायत्री । यत्पर्णशाखया गाः प्रार्पयति । स्वयैवैना देवतया प्रार्पयति । यं कामये-

[1]अथ पौरोडाशिकं ब्राह्मणं प्राजापत्यं काण्डमारभ्यते—तृतीयस्यामितो दिवि सोम इत्यादि ॥ इतो लोकादारभ्य तृतीयस्मिन् द्युसंज्ञिके सोम आसीत् । द्युलोकाभिप्रायेण स्त्रीत्वम् । लोकत्रयवचनो वा द्युशब्दः । पर्णं पत्रं श्येनरूपाया गायत्र्याः । तत् पर्णः पलाशोऽभवत् । तस्मात्पतनात् पर्णत्वं पतितृत्वाद्वा सर्वोत्कृष्टत्वाद्ब्रह्मत्वं पर्णस्य । अपाकरणं मातृभ्यः पृथक्करणम् ॥

[2]त्रिपदेति ॥ 'सङ्ख्यासुपूर्वस्य' इति लोपः समासान्तः, 'टाबृचि' इति टाप् । 'पादः पत्' इति पद्भावः । 'द्वित्रिभ्यां

तापशुस्स्यादिति । अपर्णां तस्मै शुष्काग्रामाहरेत् । अपशुरेव भवति । यं कामयेत पशुमान्थ्स्यादिति । बहुपर्णां तस्मै बहुशाखामाहरेत् । पशुमन्तमेवैनं करोति ॥ २ ॥ [3]यत्प्राचीमाहरेत् । देवलोकमभिजयेत् । यदुदीचीं मनुष्यलोकम् । प्राचीमुदीचीमाहरति । उभयोर्लोकयोरभिजित्यै । [4]इषे त्वोर्जे त्वेत्याह । इषमेवोर्जं यजमाने दधाति । [5]वायवस्स्थेत्याह । वायुर्वा अन्तरिक्षस्याध्यक्षाः । अन्तरिक्षदेवत्याः खलु वै पशवः ॥ ३ ॥

---

पाद्न्' इत्युत्तरपदान्तोदात्तत्वम् । प्रार्पणा गोचराय प्रस्थापना। अर्तेर्णौ पुगागमः ॥

[3]प्राचीमुदीचीमिति ॥ पूर्वोत्तरदिगञ्चिताम् ॥

[4]'इषे त्वोर्जे त्वा'[1] इति शाखाच्छेदनमन्त्रः ॥ इषमेवेति । सान्नाय्यस्य इष्टत्वेन ऊर्क्त्वेन च अभिधानात् तदुभयं यजमाने दधात्येव ॥

[5]वायवस्स्थेति वत्सापाकरणमन्त्रः ॥ वायुरन्तरिक्षस्याध्यक्षाः अधिपतिः । वचनव्यत्ययः । अक्षेर्वा 'गतिकारकयोरपि' इत्यसुन्, पूर्वपदप्रकृतिस्वरत्वं च । पशुदेवताधिदेवतां वायुं संकीर्त्य

---

[1] सं. १-१-१.

वायवं एवैनान्परि ददाति । प्र वा एनानेतदाकरोति । यदाह । वायवस्स्थेत्युपायवस्स्थेत्याह । यजमानायैव पशूनुपह्वयते । [6]देवो वस्सविता प्रार्पयत्वित्याह प्रसूत्यै । [7]श्रेष्ठतमाय कर्मण इत्याह । यज्ञो हि श्रेष्ठतमं कर्म । तस्मादेवमाह । [8]आप्यायध्वमघ्निया देवभागमित्याह ॥ ४ ॥ वथ्सेभ्यश्च वा एताः पुरा मनुष्येभ्यश्चाप्यायन्त । देवेभ्य

---

अपाकरणं कुर्वन् वायव एवैनान् पशून् परिददाति स्वीकरोति, यस्मात् अयं वायवस्स्थेत्याह । किञ्च—यदाह वायवस्स्थेति तेनैवैनान् पशून् प्राकरोति प्रकृष्टाकारवतः करोति वायुदेवत्यत्वप्रकटनात् । प्रकर्षेण वाऽविनष्टानेवाह्वयति । देवताभेदस्याविवक्षितत्वात् ताच्छब्द्यं, मन्त्रे मत्वर्थीयो लुप्यते । अथ उपायवस्स्थेति यदाह उपगन्तृसंकीर्तनात् यजमानायैव पशून् पुनरुपह्वयते समीपे आह्वयति आगमनमनुजानाति ॥

[6]देवो व इति प्रस्थापनमन्त्रः ॥ सवित्रा प्रा(?)माणत्वसंकीर्तनं प्रसूत्यै तदनुज्ञालाभाय ॥

[7]यज्ञो हीति ॥ सर्वकामसिद्धिहेतुत्वात् ॥

[8]अथ 'देवभागम्'[1] इति मन्त्रे देवपदोपादानाभिप्रायमाह—वथ्सेभ्यश्चेत्यादि ॥ देवेभ्य एवैना इन्द्रायेति । सर्वदेवता-

---

[1]सं. १-१-१.

एवैना इन्द्रायाप्यांयति । [9]ऊर्जस्वतीः पयंस्वतीरि-
त्यांह । ऊर्ज॑ हि पयंस्सम्भरन्ति । [10]प्रजावंतीरन-
मीवा अंयक्ष्मा इत्यांह प्रजांत्यै । मा वंस्स्तेन ई-
शत माऽघशꣳस इत्यांह गुप्त्यै । [11]रुद्रस्य हेतिः
परि वो वृणक्त्वित्यांह । रुद्रादेवैनास्त्रायते । [12]ध्रुवा
अस्मिन्गोपंतौ स्यात बह्वीरित्यांह । ध्रुवा एवा-
स्मिन्बह्वीः करोति ॥ ५ ॥ [13]यजंमानस्य पशून्पा-
हीत्यांह । पशूनां गोपीथायं । तस्मांथ्सायं पशव

त्मानं इन्द्रमेव मन्त्रे देवशब्द आचष्ट इति प्रतिपादयति, सा-
क्षाय्यस्यैन्द्रत्वात् ॥

[9]ऊर्जं हीति ॥ स्मर्तव्यत्वाभिधानं संस्तुत्यैव भवतीति यावत् ॥

[10]प्रजातिस्सन्तानाविच्छेदः ॥

[11]रुद्रस्येति प्रस्थितानुमन्त्रणम् ॥

[12]ध्रुवा अस्मिन्निति यजमानगृहेक्षणम् ॥

[13]यजमानस्य पशूनिति शाखोपगूहनम् ॥ गोपीथाय गोपनाय। तस्मादिति । पशूनां पात्र्याः शाखायाः सुरक्षितत्वात्पशवः सा-यमविनष्टा एव गृहमुपागच्छन्ति ॥

उप समावर्तन्ते । [14]अनंधस्सादयति । गर्भाणां धृ-
त्या अप्रंपादाय । तस्माद्गर्भाः प्रजानामप्रंपादुकाः।
उपरींव निर्दधाति । उपरींव हि सुंवर्गो लोकः ।
सुवर्गस्यं लोकस्य समंष्ट्यै ॥ ६ ॥

पशवः करोति पशवों देवभागमित्याह
करोति नवं च ॥ १ ॥

[1]देवस्यं त्वा सवितुः प्रंसव इत्यश्वपरशुमादंत्ते
प्रसूंत्यै । अश्विनोर्बाहुभ्यामित्याह । अश्विनौ हि
देवानांमध्वर्यू आस्ताम् । पूष्णो हस्ताभ्यामित्या-

[14]अनध इति ॥ कस्मिंश्चिदाधारे सादयति, गर्भाणां धा-
रणाय, तदपि अप्रपादाय अप्रच्युतये । उपरीवेति । ऊ-
र्ध्वायामेव दिशि । इवशब्दोऽवधारणे । उपरितनत्वसामान्यात्
तच्छब्दस्य । स्वर्गस्य समष्ट्यै सम्यक् प्राप्त्यै भवति तस्या
उपरिसादनम् ॥

इति तैत्तिरीयब्राह्मणे तृतीये द्वितीये प्रथमोऽनुवाकः.

[1]देवस्य त्वेत्यादि ॥ पर्शुः पार्श्ववक्रः । अध्वर्यू इति ।
अध्वरस्य नेतारौ मणिबन्धादुपरि वा स्तः । यत्यै यमनाय धारणाय ॥

ह यत्यै । [2]यो वा ओषधीः पर्वशो वेद । नैनास्स हिनस्ति । प्रजापतिर्वा ओषधीः पर्वशो वेद । स एना न हिनस्ति । अश्वपर्श्वा बर्हिरच्छैति । प्राजापत्यो वा अश्वस्सयोनित्वाय ॥ ७ ॥ ओषधीनामहिꣳसायै । [3]यज्ञस्य घोषदसीत्याह । यजमान एव रयिं दधाति । प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातय इत्याह । रक्षसामपहत्यै । [4]प्रेयमगाद्धिषणा बर्हिरच्छेत्याह । विद्या वै धिषणा । विद्ययैवैनदच्छै-

---

[2]यो वा इत्यादि अश्वपर्शोस्स्तुति ॥ पर्वशः पर्वणिपर्वणि । 'संख्यैकवचनाच्च' इति शस् । पर्ववेदी पर्वपरिहारेणाच्छिन्दन् एना ओषधीर्न हिनस्ति । प्रजापतिरेव तद्वेदी तथा कर्तुं शक्नोति । ततः किमित्याह—अश्वश्चायं प्राजापत्यः तदक्षिपरिणामत्वात् तस्मात् अश्वपर्श्वा बर्हिरभिप्राप्तुं तदर्था ओषधीः गच्छन् उभयोः सयोनित्वात् तासां हिंसां नोत्पादयेत् ॥

[3]यज्ञस्येति अश्वपर्श्वभिमन्त्रणम् ॥ रयिं दधातीति । यज्ञसाधनत्वाभिधानेन रयिसाधनं यज्ञं यजमाने स्थापयति । घोषदिति धननामेति केचित् ॥

[4]प्रेयमिति गार्हपत्यप्रदेशादाहवनीयप्रदेशगमनम् ॥ विद्या वा इति । अश्वपर्शुं धिषणाशब्देन संकीर्तयन् विद्ययैव बर्हिरभिप्राप्तुं गच्छन् भवति ॥

ति । [5]मनुना कृता स्वधया वितष्टेत्याह । मानवी हि पर्शुस्स्वधाकृता ॥ ८ ॥ त आवहन्ति कवयः पुरस्तादित्याह । शुश्रुवाꣳसो वै कवयः । यज्ञः पुरस्तात् । मुखत एव यज्ञमारंभते । अथो यदेतदुक्त्वा यतः कुतश्चाहरंति । तत्प्राच्या एव दिशो भवति । [6]देवेभ्यो जुष्टमिह बर्हिरासद इत्याह ।

---

[5]मानवी हीति ॥ मनुना प्रजापतिना कृता मानवी पर्शुः, सा खलु स्वधया अन्नेन कृता यागद्वारेण निर्वर्तिता, तस्मात् स्वधया वितष्टेत्युच्यते । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । श्रुतवन्तः क्रान्तदर्शनाः, तस्मात्त एवं कुर्वन्तीत्याह। अयं यज्ञः पुरस्तात् पूर्वस्यां दिशि वर्तते । तस्मात् कवयः पुरस्तात् पूर्वस्यां दिशि आवहन्तीत्युच्यत इति । तस्मात् मुखत एव प्राच्या एवारभ्य यज्ञः निर्वर्तितो भवति । अथो अपि च त एतमुक्त्वा यतः कुतश्चिदपि दिशो यदाहरति तत्प्राच्या एवाहृतं भवति एतन्मन्त्रप्रभावात् ॥

[6]देवेभ्योजुष्टमिति वेद्याः प्रत्यवेक्षणम् ॥ तत्र देवेभ्यो जुष्टं प्रियमस्यां वेद्यां आसादनीयं चेति वचनं बर्हिषस्समृद्ध्यै सम्यक्फलसाधनभावाय भवति । तच्च कर्मणोऽनपराधाय अवैकल्याय भवति । तादृशार्बर्हिरर्थान् दर्भानाहर्तुं इयं अश्वपर्शुः प्राची गच्छतीति भाव इति दर्शितं भवति ॥

बर्हिषस्समृद्ध्यै । कर्मणोऽनपराधाय । [7]देवानां परिषूतमसीत्याह ॥ १ ॥ यद्वा इदं किंच । तद्देवानां परिषूतम् । अथो यथा वस्यंसे प्रतिप्रोच्याहेदं करिष्यामीति । एवमेव तदध्वर्युर्देवेभ्यः प्रतिप्रोच्य बर्हिर्दाति । आत्मनोऽहिंसायै । [8]यावतस्स्तम्बान्परि दिशेत् । यत्तेषामुच्छिꣳष्यात् । अति तद्यज्ञस्य रेचयेत् । एकꣳ स्तम्बं परिदिशेत् । तꣳ सर्वं

---

[7]देवानामिति प्रस्तरार्थदर्भपरिग्रहः ॥ यन्नाम किंचित् दृश्यते तत्सर्वं देवानां परिषूतं देवतार्थमेव प्रागेव परिगृहीतम् । योपि 'देवार्थं परिषूतं परिगृहीतमसि, नात्मार्थं वृथा परिषूयसे' इति अध्वर्युराह तदात्मन अहिंसार्थम् । अथो अपिच यथा खलु लोके कश्चित्स्वाभिमतं कुर्वन् वस्यसे प्रशस्ततराय पुरुषाय प्रतिप्रोच्य प्रार्थितं प्रकटीकृत्य 'अत्र भवत इदं करिष्यामि नात्मार्थम्' इति वसीयांसं प्रत्यर्थितया व्यपदिशन् स्वाभिमतं करोति एवमेवाध्वर्युर्देवेभ्यः प्रतिप्रोच्य स्वाभिमतं बर्हिर्दाति लुनाति आत्मनो लवनापराधनिवृत्तये, तच्चाहिंसायै ॥

[8]यावत इति ॥ परिदेशनं परिषवणं, बर्हिस्स्तम्बपरिग्रहे तेषां मध्ये किंचिद्यदुच्छिष्यात् 'विष्णोस्तूपोसि' इत्युत्सृजेत् । अतः तत् यज्ञस्य अतिरेचयेत् तस्य स्तम्बस्य यज्ञसम्बन्धं निवर्तयेत् । अयुक्तं च परिषूतस्य अतिरिक्तत्वम्, तस्मादयं पक्षो दुष्टः । कथं

दायात् ॥ १० ॥ यज्ञस्यानतिरेकाय । [9]वर्षवृद्धमसीत्याह । वर्षवृद्धा वा ओषधयः । [10]देवबर्हिरित्याह । देवेभ्य एवैनत्करोति । मा त्वाऽन्वङ्मा तिर्यगित्याहाहिंसायै । पर्व ते राध्यासमित्याहर्ध्यै । [11]आच्छेत्ता ते मा रिषमित्याह । नास्यात्मनो मी-

---

तर्हि कर्तव्यमित्याह—एकमिति । एकस्तम्बपरिग्रहे उत्स्रष्टव्याभावात्तस्य च सर्वस्य किंचिदप्यनुच्छेष्यत्ववचनान्नातिरेकदोषः ॥

[9]वर्षवृद्धमसीति स्तम्बोन्मार्जनम् ॥ वर्षवृद्धा इति वर्षेण वर्धिता इति । कर्मणि निष्ठायां 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् ॥

[10]देवबर्हिरिति असिदादिना बर्हिषस्संश्लेषणम् ॥ देवपदविशेषणेन देवार्थं बर्हिः करोति । अहिंसाया इति । हिंसाहेतुमन्वक्छेदादिं न करोमीति वचनात्, बर्हिषोऽहिंसायै भवति । पर्वणो राद्धिवचनं च बर्हिष ऋद्ध्यै भवति ॥

[11]आच्छेत्तेत्याच्छेदनम् ॥ एतद्वचनप्रभावाद्योऽप्येवं वेद, न परं बर्हिरित्येव अस्यापि वेदितुरपि आत्मनस्संबन्धि किंचिदपि न मीयते न हिंस्यते । 'मिञ् हिंसायाम्' । अस्यैवंवक्तुस्संबन्धि किंचिदपि न मीयते, अथ य एवं वेद तस्यापीति शेषः ॥

यते । य एवं वेद ॥ ११ ॥ [12]देवंबर्हिश्शतवल्शं विरोहेत्याह । प्रजा वै बर्हिः । प्रजानां प्रजननाय । [13]सहस्रवल्शा वि वयꣳ रुहेमेत्याह । आशिषमेवैतामाशास्ते । [14]पृथिव्यास्संपृचः पाहीत्याह प्रतिष्ठित्यै । [15]अयुंङ्गाऽयुङ्गान्मुष्टीन्लुंनोति । मिथुनत्वाय प्रजात्यै । [16]सुसंभृता त्वा संभरामीत्याह ।

---

[12]देवबर्हिरित्याच्छिन्नाभिमर्शनम् ॥ तत्र प्रजासाधनस्य बर्हिषो विरोहणं प्रजानामेव प्रजननाय भवति । न दर्भप्ररोहणमात्रमिदमाशास्यते इति मन्तव्यमिति भावः ॥

[13]सहस्रवल्शा इत्यात्मप्रत्यभिमर्शनम् ॥ एतामात्मविरोहणविषयामेवाशिषं आशास्ते नातःपरमाशासनीयमिति भावः ॥

[14]पृथिव्या इति प्रस्तरनिधानम् ॥ आत्मनः पृथिवीसंपृक्तवचनं यजमानस्य प्रतिष्ठित्यै भवति ॥

[15]अयुङ्गायुङ्गानिति ॥ अयुग्मान् अयुग्मान्, नकारमकारयोः स्थानविनिमयः; पूर्वत्र द्वितीयायाः 'सुपां सुलुक्' इत्याकारः । 'अनुदात्तं च' इत्याम्रेडितस्य निघातः । निधनभेदानिबन्धना वीप्सा निधनानामप्ययुग्मत्वं बोधयति । अयुग्मत्वे हि मुष्टीनां प्रस्तरेण सह मिथुनत्वं युग्मता भवति । तच्च प्रजात्यै भवति ॥

[16]सुसंभृतेति शुल्बे निधनसम्भरणम् ॥ ब्रह्मणैवेति । ब्रह्मणा हि सुष्ठु संभ्रियते ॥

ब्रह्मणैवैनथ्संभरति ॥ १२ ॥ [17]अदित्यै रास्नाऽसी-त्याह । इयं वा अदितिः । अस्या एवैनद्रास्नां करोति । [18]इन्द्राण्यै संनहनमित्याह । इन्द्राणी वा अग्रे देवतानाꣳ समनह्यत । साऽऽर्ध्नोत् । ऋद्ध्यै संनह्यति । प्रजा वै बर्हिः । प्रजानामपरावापाय। तस्माथ्स्नावसंतताः प्रजा जायन्ते ॥ १३ ॥ [19]पूषा ते ग्रन्थिं ग्रथ्नात्वित्याह । पुष्टिमेव यजमाने दधाति । [20]स ते माऽऽस्थादित्याहाहिꣳसायै । [21]पश्चात्प्राञ्चमुप गूहति । पश्चाद्वै प्राचीनꣳ रेतो धीयते ।

---

[17]अदित्या इति शुल्बकरणम् ॥ सामर्थ्याच्च सम्भरणात्पूर्वमिदं द्रष्टव्यम् । अस्याः पृथिव्याः एनत् शुल्बं रास्नां रशनां करोति ॥

[18]इन्द्राण्यां इतिं सन्नहनम् ॥ इन्द्रस्य पत्नी इन्द्राणी 'इन्द्रवरुण' इतिं ङीषानुकौ ॥

[19]पूषेति ग्रन्थिकरणम् ॥ पूष्णः पोषयितुः सङ्कीर्तनाद्यजमाने पुष्टिं दधाति ॥

[20]स ते इति शुल्बान्तोपगूहनम् ॥ अन्यत्रास्थानस्य ग्रन्थिकरणस्य निषेधात् प्रजानामहिंसायै भवति ॥

[21]पश्चादिति परत आकृष्य प्राञ्चं ग्रन्थिमुपगूहति ॥ पश्चाद्भागात्प्राचीनं प्राग्देशाश्रितं रेतस्सिच्यते तथैव कृतं भवति ॥

पश्चादेवास्मै प्राचीनꣳ रेतो दधाति । [22]इन्द्रस्य त्वा बाहुभ्यामुद्यच्छ इत्याह । इन्द्रियमेव यजमाने दधाति । [23]बृहस्पतेर्मूर्ध्ना हरामीत्याह । ब्रह्म वै देवानां बृहस्पतिः ॥ १४ ॥ ब्रह्मणैवैनद्धरति । [24]उर्वन्तरिक्षमन्विहीत्याह गत्यै । [25]देवंगममसीत्याह । देवानेवैनद्गमयति । [26]अनधस्सादयति । गर्भाणां धृत्या अप्रपादाय । तस्माद्गर्भाः प्रजानामप्रपादुकाः । उपरीव निदधाति । उपरीव हि सुवर्गो लोकः । सुवर्गस्य लोकस्य समष्ट्यै ॥ १५ ॥

सयोनित्वायं स्वधाकृताऽसीत्याह दायाद्वेदं भरति जायन्ते बृहस्पतिस्समष्ट्यै ॥ २ ॥

[22]इन्द्रस्येत्युद्यमनम् ॥ इन्द्रसंकीर्तनात् इन्द्रदत्तं वीर्यं यजमाने दधाति ॥

[23]बृहस्पतेरिति शीर्ष्णि निधानम् ॥

[24]उर्विति प्रत्यागच्छति ॥ तत्र अन्तरिक्षस्य उरुत्वाभिधानं गत्यै अविहतायै भवति ॥

[25]देवंगममित्युपरिसादनम् ॥

[26]अनध इत्यादि ॥ व्याख्यातम्* ॥

इति तैत्तिरीयब्राह्मणे तृतीये द्वितीये द्वितीयोऽनुवाकः.

---

* ब्रा. ३-२-१.

[1]पूर्वेद्युरिध्माबर्हिः करोति । यज्ञमेवारभ्य गृहीत्वोपवसति । [2]प्रजापतिर्यज्ञमसृजत । तस्योखे अस्रꣳसेताम् । यज्ञो वै प्रजापतिः । यथ्सांन्नाय्योखे भवतः । यज्ञस्यैव तदुखे उपदधात्यप्रस्रꣳसाय । [3]शुन्धध्वं दैव्याय कर्मणे देवयज्याया इत्याह । देवयज्याया एवैनानि शुन्धति । [4]मातरिश्वनो घर्मोऽसीत्याह ॥ १६ ॥ अन्तरिक्षं वै मातरिश्वनो घर्मः । एषां लोकानां विधृत्यै । [5]द्यौरसि पृथिव्यसीत्याह ।

---

[1]पूर्वेद्युरित्यादि ॥ इध्मं च बर्हिश्च इध्माबर्हिः । छान्दस आनङ् । वनस्पत्यादित्वादाद्युदात्तत्वम् ॥

[2]प्रजापतिरित्यादि ॥ सृष्ट्यनन्तरं यज्ञस्य उखे कुम्भ्यौ अस्रंसेतां गळिते अभूताम् । ततो यज्ञ एव स्रस्तस्स्यात् । यज्ञो नाम कः? प्रजापतिरेव । ततश्च प्रजा विनष्टास्स्युः । तत्र सान्नाय्योखे यज्ञस्यैव पूर्वं स्रस्तोखस्य उखे भवतः, तदस्य यज्ञस्य अप्रस्रंसाय भवति सान्नाय्योखे सान्नाय्यकुम्भ्यौ ॥

[3]शुन्धध्वमिति सान्नाय्यपात्रप्रोक्षणम् ॥

[4]मातरिश्वन इति अङ्गारनिरूहणम् ॥ मातरिश्वनः वायोः घर्मः क्षरणाधारः सञ्चारस्थानमन्तरिक्षं, तदेव त्वमसीति अङ्गारस्य विधारणसामर्थ्यख्यापनं एषां लोकानां विधृत्यै भवति ॥

[5]द्यौरसीति सान्नाय्यपात्र्यधिश्रयणम् ॥ द्युप्रभृतीनां कार्यत्वात्, तद्भावेन स्तूयत इति भावः ॥

दिवश्च ह्येषा पृथिव्याश्च संभृता । यदुखा । तस्मा-देवमाह । [6]विश्वधाया असि परमेण धाम्नेत्याह । वृष्टिर्वै विश्वधायाः । वृष्टिमेवावरुन्धे । दृꣳहस्व मा ह्वारित्याह धृत्यै ॥ १७ ॥ [7]वसूनां पवित्रमसीत्याह । प्राणा वै वसवः । तेषां वा एतद्भागधेयम् । यत्पवित्रम् । तेभ्य एवैनत्करोति । [8]शतधारꣳ सहस्रधारमित्याह । प्राणेष्वेवायुर्दधाति सर्वत्वाय । [9]त्रिवृत्पलाशशाखायां दर्भमयं भवति । त्रिवृद्वै प्राणः । त्रिवृतमेव प्राणं मध्यतो यजमाने दधा-

---

[6]विश्वं दधाति धारयतीति विश्वधाया वृष्टिः । 'गतिकारकयोरपि' इत्यसुन् । इह तु लोकाधिकारादन्तरिक्षं वृष्टिसहचरितमुच्यते तत्र वृष्टेस्संकीर्तनात् वृष्टिमवरुन्धे ॥

[7]वसूनामित्युखायां शाखापवित्रनिधानम् ॥ प्राणा वा इति वासहेतुत्वात् । तेषां एष भागः प्रीणनहेतुत्वात् ॥

[8]बहुधारं पावनत्ववचनं प्राणेष्वेवायुषो धारणाय भवति । तत्रायुरेकदेशस्य अन्यथाऽपि सिद्धत्वात् आयुषस्सर्वत्वाय तत्संपद्यते॥

[9]पवित्रं विशिनष्टि—त्रिवृदिति ॥ त्रिवृद्गुणं भवति, तत्पवित्रं पलाशशाखायां च निहितं भवति, दर्भमयं च भवति । अथ त्रिवृत्त्वादि स्तौति—त्रिवृद्वा इत्यादि । सयोनित्वायेति पाला-

ति ॥ १८ ॥ सौम्यः पर्णस्संयोनित्वाय । साक्षात्पवित्रं दर्भाः । प्राक्सायमधि निर्दधाति । तत्प्राणापानयो रूपम् । तिर्यक्प्रातः । तद्दर्शस्य रूपम् । दार्श्यꣳ ह्येतदहः । अन्नं वै चन्द्रमाः । अन्नं प्राणाः । उभयमेवोपैत्यजामित्वाय ॥ १९ ॥ तस्मादयश्च सर्वतः पवते । [10]हुतस्स्तोको हुतो द्रप्स इत्याह प्रतिष्ठित्यै । हविषोऽस्कन्दाय । न हि हुतꣳ स्वाहाकृतꣳ स्कन्दति । दिवि नाको नामाग्निः । तस्यं

---

शस्य सौम्यत्वात् ओषधीनामपि सौम्यत्वात् दर्भपलाशयोस्संयोनित्वम् । साक्षात् अव्यवधानेनैव पवित्रं भवति दर्भाः । प्रागिति प्रागायतं सायं निदधाति । तिर्यक् दक्षिणोत्तरायतं उदगग्रं प्रातः । तद्दर्शस्य कर्मणो रूपं दध्यादिसाध्यत्वेन तिर्यक्प्रधानत्वात् । दार्श्यं दर्शे कर्मणि साधु । छान्दसो ण्यप्रत्ययः । ततः किमित्याह—अन्नं स्वयं चन्द्रमाः दर्शकर्मभूतः, यस्यायनमिदं कर्म, प्राणाश्चान्नं तद्धेतुकत्वात्, तस्मात् उभयमिभमप्यन्नं उपैति, नान्यतरदेव, तच्च अजामित्वाय अनालस्याय भवति । अन्यतरोपगमे ह्यालस्यं स्यात्, तस्मादह्नि रात्रौ च अन्नलाभात् सर्वतः अह्नि रात्रौ च वायुः पवते ॥

[10]हुत इति स्तोकानुमन्त्रणम् ॥ तत्र हुत इति सङ्कल्पात् विप्रुषां प्रतिष्ठितत्वं अविनाशः, तदपि हविषोऽस्कन्नत्वाय भवं-

विप्रुषो भागधेयम् । अग्नये बृहते नाकायेत्याह नाकमेवाग्निं भागधेयेन समर्धयति । स्वाहा द्यावापृथिवीभ्यामित्याह । द्यावापृथिव्योरेवैनत्प्रतिष्ठापयति ॥ २० ॥ पवित्रवत्यानयति । अपां चैवौषधीनां च रसꣳ सꣳसृजति । अथो ओषधीष्वेव पशून्प्रतिष्ठापयति । [11]अन्वारभ्य वाचं यच्छति । यज्ञस्य धृत्यै । धारयन्नास्ते । धारयन्त इव हि दुहन्ति । कामधुक्ष इत्याहातृतीयस्यै । त्रय इमे लोकाः । इमानेव लोकान् यजमानो दुहे ॥ २१ ॥ अमूमिति नाम गृह्णाति । भद्रमेवासां कर्माविष्करोति । [12]सा विश्वायुस्सा विश्वव्यचास्सा विश्वकर्मे-

---

ति । तत्र हेतुमाह—न हीति । इदानीं नाकायेति मन्त्रपदं व्याचष्टे—दिवीत्यादि ॥ गतम् ॥

[11]अन्वारभ्येति कुम्भीम् ॥ कामिति । कां गामधुक्ष इति आतृतीयस्याः पृच्छति । प्रथमां द्वितीयां तृतीयां चेति यावत् । अमूमिति गङ्गां यमुनामित्यादिनामविशेषं कीर्तयन् प्रत्याह । एवं ह्यासां भद्रं कल्याणं कर्माविष्करोति ॥

[12]सा विश्वायुरिति प्रथमानतिक्रमेण दुग्धानां गवामभिमन्त्रणम् ॥ इयं वा इत्यादि । विश्वान्नहेतुः विश्वायुः । विश्वगतिर्विश्व-

त्याह । इयं वै विश्वायुः । अन्तरिक्षं विश्वव्यचाः । अ-
सौ विश्वकर्मा । इमानेवैताभिर्लोकान् यथापूर्वं दुहे।
अथो यथा प्रदात्रे पुण्यमाशास्ते । एवमेवैना एत-
दुप स्तौति । तस्मात्प्रादादित्युन्नीय वन्दमाना उ-
पस्तुवन्तः पशून्दुहन्ति ॥ २२ ॥ बहु दुग्धीन्द्राय
देवेभ्यो हविरिति वाचं विसृजते । यथादेवतमेव
प्रसौति । दैव्यस्य च मानुषस्य च व्यावृत्यै । त्रि-
राह । त्रिषत्या हि देवाः । अवाचंयमोऽनन्वार-
भ्योत्तराः । अपरिमितमेवावरुन्धे । [13]न दारुपात्रे-
ण दुह्यात् । अग्निवद्वै दारुपात्रम् । यद्दारुपात्रेण

---

व्यचाः । विश्वकर्मफलस्थानं विश्वकर्मा । अथो अपिच यथा लोके कश्चित लब्धापेक्षः प्रदात्रे पुण्यमाशास्ते एवमेनाः गाः विश्वायुरित्यादिभिः पदैरुपस्तौति । तस्मादित्यादि लोकवृत्तान्तद-र्शनम् । प्रादात् प्रभूतं पय इति स्तुतिहेतुकथनम् । यथा देवतमिति यथा स्वं देवतार्थमनुजानाति । तच्च दैव्यमानुषभोगाय। त्रिराहेति, 'बहु दुग्धि' इत्यादिवचनेन त्रिर्वाचं विसृजति । त्रि-त्वेन सत्यत्वं येषां ते त्रिषत्याः । उत्तराः तिसृभ्यः, दुग्ध इति गम्यते ॥

[13]यातयामेति ॥ तत्रस्थेनाग्निना गृहीतसारत्वात् गतरसत्वम् । नेतइतः पुरोडाशमिति । पुरोडाशप्रभृतिहविष्ट्वात् ततः प्राग्घविषो

दुह्यात् ॥ २३ ॥ यातयाम्ना हविषा यजेत । अथो खल्वाहुः । पुरोडाशमुखानि वै हवीꣳषि । नेत इतः पुरोडाशꣳ हविषो यामोऽस्तीति । काममेव दारुपात्रेण दुह्यात् । [14]शूद्र एव न दुह्यात् । असतो वा एष संभूतः । यच्छूद्रः । अहविरेव तदित्याहुः । यच्छूद्रो दोग्धीति ॥ २४ ॥ अग्निहोत्रमेव न दुह्याच्छूद्रः । तद्धि नोत्पुनन्ति । यदा खलु वै पवित्रमत्येति । अथ तद्धविरिति । [15]संपृच्यध्वमृतावरीरित्याह । अपां चैवौषधीनां च रसꣳ सꣳसृजति । तस्मादपां चौषधीनां च रसमुप जी-

यामप्राप्तिर्नास्ति । तस्मात् दारुपात्रेण यथाकामं दुह्यादेव । 'उपर्यादिषु त्रिषु' इत्यत्र 'इतइतः' इति पठितव्यमिति मन्यन्ते । यद्वा—'ततोऽन्यत्रापि दृश्यते' इति द्वितीया ॥

[14]शूद्र एवेति ॥ सर्वमन्यद्यथाकामं कुर्यात् इदं त्वेकं सर्वथा परिहर्तव्यमिति यावत् । असत इति । प्रजापतेः पत्तो जातत्वात् । उक्तं च 'तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः'* इति । अग्निहोत्रमेवेति । पक्षान्तरम् । यदा खल्विति । शूद्रदुग्धमपि हविर्भवति, यदा तत्पवित्रं अत्येति अत्याक्रामति ॥

[15]संपृच्यध्वमिति गोदोहनसंक्षाळनीयानामपां पयस्यानयनम् ॥

*सं. ७-१-१.

वामः। मन्द्रा धनस्य सातय इत्याह। पुष्टिमेव यजमाने दधाति। [16]सोमेन त्वाऽऽतनच्मीन्द्राय दधीत्याह ॥ २५ ॥ सोममेवैनत्करोति। यो वै सोमं भक्षयित्वा। संवथ्सरꣳ सोमं न पिबति। पुनर्भक्ष्योऽस्य सोमपीथो भवति। [17]सोमः खलु वै सान्नाय्यम्। य एवं विद्वान्थ्सान्नाय्यं पिबति। अपुनर्भक्ष्योऽस्य सोमपीथो भवति। न मृन्मयेनापिदध्यात्। यन्मृन्मयेनापिदध्यात्। पितृदेवत्यꣳ स्यात् ॥ २६ ॥ अयस्पात्रेण वा दारुपात्रेण वाऽपिदधाति। तद्धि सदेवम्। [18]उदन्वद्भवति। आपो वै रक्षोघ्नीः। रक्षसामपहत्यै। [19]अदस्तमसि विष्ण-

---

[16]सोमेनेति दध्यातञ्चनम् ॥ सोमीकरणस्य प्रयोजनमाह— यो वा इति। पुनर्भक्ष्यः अपीततुल्यत्वात् संवत्सरमपीत सोमस्यापि सान्नाय्ये सोमसम्बन्धः संपद्यते तेन पुनर्भक्ष्यत्वदोषाप्रसङ्गः ॥

[17]सोमः खल्विति ॥ 'सोमेन त्वा'* इति सोमीकृतत्वात् ॥

[18]उदन्वदिति अपिधानपात्रमुदकवद्भवति ॥

[19]अदस्तमसीत्यपिधानम् ॥

---

*सं. १ १-३.

वे त्वेत्याह । यज्ञो वै विष्णुः । यज्ञायैवैनददस्तं करोति । विष्णो हव्यꣳ रक्षस्वेत्याह गुप्त्यै । [20]अनधस्सादयति । गर्भाणां धृत्या अप्रपादाय । तस्माद्गर्भाः प्रजानामप्रपादुकाः । उपरीव निदधाति । उपरीव हि सुवर्गो लोकः । सुवर्गस्य लोकस्य समष्ट्यै ॥ २७ ॥

असीत्याह धृत्यै यजमाने दधात्यजामित्वाय स्थापयति दुहे दुहन्ति दुह्याद्दोग्धीति दधीत्याह स्याथ्सादयति पञ्च च ॥ ३ ॥

कर्मणे वां देवेभ्यश्शकेयमित्याह शक्त्यै । यज्ञस्य वै संततिमनु प्रजाः पशवो यजमानस्य सं-

[20]अनध इत्यादि व्याख्यातमेव[1] ॥

इति तैत्तिरीये तृतीये द्वितीये तृतीयोऽनुवाकः.

---

[1]कर्मणे वामित्यादि ॥ 'कर्मणे वाम्'[2] इतीह कर्मारम्भे हस्तयोस्संमर्शनम् । यज्ञस्य वा इति । लक्षणेऽनोः कर्मप्रवचनीय-

[1]ब्रा. ३-१-१. [2]सं. १-१-४.

तायन्ते । यज्ञस्य विच्छित्तिमनु प्रजाः पशवो यजमानस्य विच्छिद्यन्ते । यज्ञस्य संततिरसि यज्ञस्य त्वा संतत्यै स्तृणामि संतत्यै त्वा यज्ञस्येत्याहवनीयाथ्संतनोति । यजमानस्य प्रजायै पशूनाꣳ संतत्यै । [2]अपः प्रणयति । श्रद्धा वा आपः । श्रद्धामेवारभ्य प्रणीय प्रचरति । अपः प्रणयति । यज्ञो वा आपः ॥ २८ ॥ यज्ञमेवारभ्य प्रणीय प्रचरति । अपः प्रणयति । वज्रो वा आपः । वज्रमेव भ्रातृव्येभ्यः प्रहृत्य प्रणीय प्रचरति । अपः प्रणयति । आपो वै रक्षोघ्नीः । रक्षसामपहत्यै । अपः प्रणयति । आपो वै देवानां प्रियं धाम । देवानामेव प्रियं धाम प्रणीय प्रचरति ॥ २९ ॥ अपः प्रणयति । आपो वै सर्वा देवताः । देवता एवारभ्य प्रणीय प्रचरति । [3]वेषाय त्वेत्याह । वेषाय ह्येन-

---

त्वम् । आहवनीयादिति । गार्हपत्यात्प्रक्रम्य संततामुलपराजीं स्तृणात्याहवनीयात् ॥

[2]अपः प्रणयतीत्यसकृद्विधानं फलविशेषार्थम् । सर्वैः श्रद्धेयत्वादपां श्रद्धात्वम् । इष्टसाधनत्वात् यज्ञत्वमपाम् । प्रचरणं प्रयोगः । अरिष्टशमनत्वाद्वज्रत्वम् । सर्वदेवताप्रीणनत्वात् सर्वदेवतात्वम् ॥

[3]वेषाय त्वेति शूर्पादानम् ॥ वेषाय व्यापनाय कर्मणे शूर्पमादत्ते ॥

दादत्ते । [4]प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातय इत्याह । रक्षसामपहत्यै । [5]धूरसीत्याह । एष वै धुर्योऽग्निः । तं यदनुपस्पृश्यातीयात् ॥ ३० ॥ अध्वर्युं च यजमानं च प्रदहेत् । उपस्पृश्यात्यैति । अध्वर्योश्च यजमानस्य चाप्रदाहाय । [6]धूर्व तं योऽस्मान्धूर्वति तं धूर्व यं वयं धूर्वाम इत्याह । द्वौ वाव पुरुषौ । यं चैव धूर्वति । यश्चैनं धूर्वति । तावुभौ शुचाऽर्पयति । [7]त्वं देवानामसि सस्नितमं पप्रितमं जुष्टतमं वह्नितमं देवहूतममित्याह । यथायजुरेवैतत् ॥ ३१ ॥ अह्रुतमसि हविर्धानमित्याहानार्त्यै । दृꣳहस्व मा ह्वारित्याह धृत्यै । [8]मित्रस्य त्वा चक्षुषा प्रेक्ष इत्याह मित्रत्वाय । मा भेर्मा सं विक्था मा त्वा

---

[4]प्रत्युष्टमिति प्रतितपनम् ॥

[5]धूरसीति धुरोऽभिमर्शनम् ॥ धुर्य इति । यज्ञस्य धुरो वोढा धुर्यः । 'धुरो यड्ढकौ' ॥

[6]धूर्वन्तमिति ॥ धुर्वी हिंसायाम् । 'उपधायां च' इति दीर्घत्वम् ॥

[7]त्वं देवानामिति अनसोऽभिमन्त्रणम् ॥ यथायजुर्वदति अनसो माहात्म्यं तथा सर्वमेतदस्त्येव ॥

[8]मित्रस्य त्वेति पुरोडाशीयानां प्रोक्षणम् ॥

हि॒ꣳसि॒ष॒मित्या॒हाहि॑ꣳसायै । यद्वै किंच॒ वा॒तो ना॒भि॒वाति॑ । तथ्सर्वं॑ वरुणदे॒व॒त्यं॑म् । [9]उ॒रु वा॒ता॒येत्या॑ह । अवा॑रुणमे॒वैनं॑त्करोति । [10]दे॒वस्य॑ त्वा सवि॒तुः प्र॑स॒व इत्यां॑ह॒ प्रसूं॑त्यै । अ॒श्विनो॑र्बा॒हु॒भ्या॒मित्यां॑ह ॥ ३२ ॥ अ॒श्विनौ॒ हि दे॒वाना॑मध्व॒र्यू आस्ता॑म् । पू॒ष्णो हस्ता॑भ्या॒मित्यां॑ह॒ यत्यै॑ । अ॒ग्नये॒ जुष्टं॒ निर्वं॑पा॒मीत्यां॑ह । अ॒ग्नयं॒ ए॒वैना॒ञ्जुष्टं॒ निर्वं॑पति । त्रिर्य॑जुषा । त्रयं॑ इ॒मे लो॒काः । ए॒षां लो॒काना॒मा॒प्त्यै॑ । तू॒ष्णीं च॑तु॒र्थम् । अप॑रिमितमे॒वाव॑रुन्धे । स ए॒व॒मे॒वा॒नु॒पू॒र्वꣳ ह॒वीꣳषि॒ निर्वं॑पति ॥ ३३ ॥ [11]इ॒दं दे॒वाना॑मि॒दमु॒ न॒स्स॒हेत्यां॑ह॒ व्यावृ॑त्त्यै । [12]स्फा॒त्यै त्वा॒

[9]उरुवातायेति तृणादिनिरसनम् ॥ यद्वातो न प्रविशति तद्वरुणदेवत्यं वारकेण तमसा गृहीतं, तत् तस्मात् तृणादिनिरसनेन वातसञ्चारार्थं महानवकाशः क्रियत इति यावत् ॥

[10]देवस्यत्वेति हविषो निर्वापणम् ॥ व्याख्यातम्* । हवींषीति । अग्नीषोमीयादीनि ॥

[11]इदं देवानामिति निरुप्ताभिमर्शनम् ॥ इदमु न इति निरुप्तशेषाभिमर्शनम् । व्यावृत्तिः निरुप्तानिरुप्तविभागः ॥

[12]स्फात्या इति कोष्ठादौ शिष्टावपनम् ॥ परीणत् गृहम्, आवपनं वा ॥

* ब्रा. ३-२-२.

नारा॑त्या इत्या॑ह॒ गुप्त्यै॑ । तमां॑सीव॒ वा ए॒षो॑ऽन्तश्च॑रति । यः प॑री॒णहि॑। [13]सुव॑र॒भि वि ख्ये॑षं वै॑श्वान॒रं ज्योति॒रित्या॑ह । सुव॑रे॒वाभि वि प॑श्यति वै॑श्वान॒रं ज्योति॑ः । द्यावा॑पृ॒थि॒वी ह॒विषि॑ गृ॒हीत उ॑द॒वेपेताम्। [14]दृ॒ꣳहे॑न्तां दु॒र्या॑ द्यावा॑पृथि॒व्योरित्या॑ह । गृ॒हाणां॑ द्यावा॑पृ॒थि॒व्योर्धृत्यै॑ । [15]उ॒र्व॑न्तरि॑क्षमन्वि॒हीत्या॑ह॒ ग॒त्यै॑ । [16]अदि॑त्यास्त्वो॒पस्थे॑ सादय॒ामीत्या॑ह । इ॒यं वा अदि॑तिः । अ॒स्या ए॒वैनं॑दु॒पस्थे॑ सादयति । [17]अग्ने॑ ह॒व्यꣳ र॑क्ष॒स्वेत्या॑ह॒ गुप्त्यै॑ ॥ ३४ ॥

य॒ज्ञो वा आपो॒ धाम॑ प्र॒णीय॒ प्रच॑रत्यती॒यादे॒तद्बा॑हु॒भ्या॒मित्या॑ह ह॒वीꣳषि॒ निर्व॑पति॒ गत्यै॑ च॒त्वारि॑ च ॥ ४ ॥

[13]सुवरिति आहवनीयानुवीक्षणम् ॥ सुवरेवेति । सुष्ठु श्रेयसां गमयितृ ज्योतिः आहवनीयम् ॥

[14]दृंहन्तामिति गृहानुवीक्षणम् ॥

[15]उर्विति गमनम् ॥

[16]अदित्या इति परेण गार्हपत्यमाहवनीयं वा सादनम् ॥

[17]अग्ने हव्यमिति गार्हपत्याभिमन्त्रणम् ॥

इति ब्राह्मणे तृतीये द्वितीये चतुर्थोऽनुवाकः.

[1]इन्द्रो वृत्रमहन्न् । सोऽपः । अभ्यम्रियत । तासां यन्मेध्यं यज्ञियꣳ सदेवमासीत् । तदपोदक्रामत् । ते दर्भा अभवन्न् । यद्दर्भैरप उत्पुनाति । या एव मेध्या यज्ञियास्सदेवा आपः । ताभिरेवैना उत्पुनाति । द्वाभ्यामुत्पुनाति ॥ ३५ ॥ द्विपाद्यजमानः प्रतिष्ठित्यै । [2]देवो वस्सवितोत्पुनात्वित्याह । सवितृप्रसूत एवैना उत्पुनाति । अच्छिद्रेण पवित्रेणेत्याह । असौ वा आदित्योच्छिद्रं पवित्रम् । तेनैवैना उत्पुनाति । वसोस्सूर्यस्य रश्मिभिरित्याह । प्राणा वा आपः । प्राणा वसवः । प्राणा रश्मयः ॥ ३६ ॥ प्राणैरेव प्राणान्थ्सं पृणक्ति । सावित्रियर्चा । सवितृप्रसूतं मे कर्मासदिति । सवितृप्रसूतमेवास्य कर्म भवति । पच्छो गायत्रिया त्रिष्षमृद्धत्वाय ।

---

[1]इन्द्रो वृत्रमहन् इत्यादि ॥ अपोऽभि अपो लक्षीकृत्य मेध्यं मेधार्हं मेधा यागः यज्ञियं यज्ञार्हं यज्ञो देवपूजा सदेवं देवयोग्यं तदपोदक्रामत् ऊर्ध्वमपाक्रामत् ॥

[2]देवो व इत्युत्पवनम् ॥ सवितृप्रसूतः सवित्राऽनुज्ञातः । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । प्राणहेतवः आपः वसवः रश्मयश्च, सावित्रियेति 'देवो वः' इत्यनया सवित्रा अनुज्ञातं

[3]आपो देवीरग्रेपुवो अग्रेगुव इत्याह । रूपमेवासा-मेतन्महिमानं व्याचष्टे । अग्र इमं यज्ञं नयताग्रे यज्ञपतिमित्याह । अग्र एव यज्ञं नयन्ति । अग्रे यज्ञपतिम् ॥ ३७ ॥ युष्मानिन्द्रोऽवृणीत वृत्रतूर्ये यूयमिन्द्रमवृणीध्वं वृत्रतूर्य इत्याह । वृत्रꣳ ह हनिष्यन्निन्द्र आपो वव्रे । आपो हेन्द्रं वव्रिरे । संज्ञामेवासामेतथ्सामानं व्याचष्टे । [4]प्रोक्षितास्स्थे-त्याह । तेनापः प्रोक्षिताः । [5]अग्नये वो जुष्टं प्रोक्षा-

मम कर्म अस्त्विति । परुच्छः पादेन पादेन गायत्रीसम्बन्धिना 'संख्यै-कवचनाच्च' इति शम् । त्रिषमृद्धं तिसृभिः आवृत्तिभिः समृद्धम् ॥

[3]आपो देवीरिति उन्महयन्नुपोत्तिष्ठति ॥ अस्य मन्त्रस्य एतत्स्वरूपमेव आसां अपां महिमानं देवनशीलत्वादिकं व्याचष्टे न व्याख्येयं किंचित् । संज्ञामेवेति । आसां इन्द्रेण यत्सामानं समानत्वं वरणीयत्वं एतदेव आसां संज्ञा । 'देवीः' इत्यादिकां बुद्धिसंश्लेषं वा व्याचष्टे । अतादृग्गुणत्वे इन्द्रेणावरणीयत्वात् । समानशब्दः उद्गात्रादिर्द्रष्टव्यः ॥

[4]प्रोक्षितास्स्थेति प्रोक्षणीप्रोक्षणम् ॥ तेनाप इति 'प्रोक्षितास्स्थ' इति वचनादेव आपः प्रोक्षिता भवन्ति, न त्वन्याभिरद्भिः प्रोक्षणम् । उक्तं च 'ब्रह्मणेति ब्रूयात्'* इति ॥

[5]अग्नय इति पुरोडाशीयानां व्रीहीणां प्रोक्षणम् ॥ शुन्ध-

*सै. २-६-९.

म्यग्नीषोमाभ्यामित्याह । यथादेवतमेवैनान्प्रोक्षति। त्रिः प्रोक्षति । त्र्यावृद्धि यज्ञः ॥ ३८ ॥ अथो रक्षसामपहत्यै । शुन्धध्वं दैव्याय कर्मणे देवयज्याया इत्याह । देवयज्यायां एवैनानि शुन्धति । त्रिः प्रोक्षति । त्र्यावृद्धि यज्ञः । अथो मेध्यत्वाय । अवधूतꣳ रक्षोऽवधूता अरातय इत्याह । रक्षसामपहत्यै । अदित्यास्त्वगसीत्याह । इयं वा अदितिः ॥ ३९ ॥ अस्या एवैनत्त्वचं करोति । प्रति त्वा पृथिवी वेत्त्वित्याह प्रतिष्ठित्यै । [6]पुरस्तात्प्रतीचीनग्रीवमुत्तरलोमोपस्तृणाति मेध्यत्वाय । तस्मात्पुरस्तात्प्रत्यञ्चः पशवो मेधमुपतिष्ठन्ते । तस्मात्प्रजा मृगं ग्राहुकाः । यज्ञो देवेभ्यो निलायत । कृष्णो रूपं

---

ध्वमिति पात्राणाम् । अवधूतमिति कृष्णाजिनाधिवसनम् । अदित्या इति कृष्णाजिनोत्तरणम् । प्रतिष्ठित्या इति । आत्मीयत्वेन पृथिव्या अनुज्ञातत्वात् प्रतिष्ठितत्वम् ॥

[6]पुरस्तादिति ॥ पुरस्तादारभ्य पुरस्ताद्गसत्कं प्रतीचीनग्रीवं उपरिस्थितरोमाजिनमुपस्तृणाति मेध्यत्वाय यज्ञार्हत्वाय, तस्मात्पूर्वस्यां दिशि स्थिताः प्रत्यङ्मुखाः पशवः यज्ञं उपतिष्ठन्ते । तस्मान्मेध्यत्वादेव यज्ञोपयुक्तत्वात् प्रजा मृगं ग्राहुकाः ताच्छील्येन

कृत्वा । यत्कृष्णाजिने हविरध्यवहन्ति । यज्ञादेव तद्यज्ञं प्रयुङ्क्ते । हविषोऽस्कन्दाय ॥ ४० ॥ [7]अधिषवणमसि वानस्पत्यमित्याह । अधिषवणमेवैनत्करोति । प्रति त्वाऽदित्यास्त्वग्वेत्त्वित्याह सयत्वाय । [8]अग्नेस्तनूरसीत्याह । अग्नेर्वा एषा तनूः । यदोषधयः । वाचो विसर्जनमित्याह । यदा हि प्रजा ओषधीनामश्नन्ति । अथ वाचं विसृजन्ते । देववीतये त्वा गृह्णामीत्याह ॥ ४१ ॥ देवताभिरेवैनथ्स-

---

ग्रहीत्र्यः । छान्दस उकञ् । कृष्ण इति । कृष्णमृगो भूत्वा रूपं च तदीयं कृत्वा देवेभ्यो यज्ञो निलायत निरगच्छत्। 'उपसर्गस्यायतौ' इति लत्वम् । यज्ञादिति । यज्ञादेव तत् यज्ञं प्रयुङ्क्ते । ल्यब्लोपे वा कर्मणि पञ्चमी । यज्ञमेवोपस्तीर्य तत्र यज्ञं प्रयुङ्क्ते तद्धविषोऽस्कन्दाय भवति स्कन्दस्यापि यज्ञ एवानुप्रविष्टत्वात् ॥

[7]अधिषवणमिति उलूखलाध्यूहनम् ॥ 'अधिषवणमसि' इति वचनात् अधिषवणं अधिषवणसमर्थमेनत्करोति । सयत्वायेति त्वचा संबद्धत्वाय स्वयमेव परिगृहीतत्वाय । षिञ् बन्धने, पचाद्यच् । स्तम्भाग्रककुत्सया ? तद्वत् दृढभावाय ॥

[8]अग्नेस्तनूरसीति हविरावपनम् ॥ शरीरवदुद्दीपकत्वात् ओषधीनां तनुत्वम् । ओषधीनामिति । सुहितार्थयोगे षष्ठी ज्ञापिता ॥

मर्धयति । [9]अद्रिरसि वानस्पत्य इत्याह । ग्रावाणमेवैनत्करोति । स इदं देवेभ्यो हव्यꣳ सुशमि शमिष्वेत्याह शान्त्यै । [10]हविष्कृदेहीत्याह । य एव देवानाꣳ हविष्कृतः । तान् ह्वयति । त्रिर्ह्वयति । त्रिषत्या हि देवाः । [11]इषमा वदोर्जमा वदेत्याह ॥ ४२ ॥ इषमेवोर्जं यजमाने दधाति । द्युमद्वदत वयꣳ संघातं जेष्मेत्याह भ्रातृव्याभिभूत्यै । [12]मनोꣳश्रद्धादेवस्य यजमानस्यासुरघ्नी वाक् । यज्ञायुधेषु प्रविष्टाऽऽसीत् । तेऽसुरा यावन्तो यज्ञायुधानामुद्व-

---

[9]अद्रिरिति मुसलावधानम् ॥ ग्रावाणमिति । अत्ता त्वमसि इति वचनात् ग्रावाणं निगरणशीलं तुषाणामेतत्करोति । गिरतेः कनिपि आडागमो निपात्यते । शान्त्या इति सुखहेतुत्वाय भवति ॥

[10]हविष्कृदेहीति अवहन्तुराह्वानम् ॥ हे हविष्कृत् ! पाष्ठिकमाद्युदात्तत्वम् । एहि आगच्छ । एवं वदन् देवानां हविष्कारिण एवाह्वयति ॥

[11]इषमिति ॥ वृषारवेण दृषदुपलसमाहननम् ॥

[12]मनोरिति ॥ श्रद्धादेवस्य श्रद्दधानस्य मनोः प्रभावातिशयेन असुरघ्नी वाक् यज्ञायुधेषु प्रविश्य स्थिता । असुराश्च समाहननप्रभवतदुद्वदनशब्दश्रवणेन नष्टाः । तस्मात् स्वानां ज्ञातीनां मध्ये देवयजनमध्यवसाय यजनं यज्ञायुधोद्वदनशब्देनानि-

दतामुपाशृण्वन्न् । ते पराऽभवन्न् । तस्माथ्स्वानां मध्येऽवसायं यजेत । यावन्तोऽस्य भ्रातृव्या यज्ञायुधानामुद्वदतामुपशृण्वन्ति । ते परा भवन्ति । उच्चैस्समाहन्तवा आह विजित्यै ॥ ४३ ॥ वृङ्क्ते एषामिन्द्रियं वीर्यम् । श्रेष्ठ एषां भवति । [18]वर्षवृद्धमसि प्रति त्वा वर्षवृद्धं वेत्त्वित्याह । वर्षवृद्धा वा ओषधयः । वर्षवृद्धा इषीकास्समृद्ध्यै । यज्ञꣳ रक्षाꣳस्यनु प्राविशन्न् । तान्यस्ना पशुभ्यो निर-

---

ष्टज्ञातिवधाय भवति । 'स्वमज्ञातिधनाख्यायाम्' इति सर्वनामसंज्ञापर्युदासः । उच्चैरिति संप्रैषः । उच्छ्रितं समाहन्तवै समाहन्तुं समाहननाय यथा महान् शब्दो जायते तथा समाहन्तुं अश्मानं गृहाण हे आग्नीध्रेति वचनं अनिष्टज्ञातिविजयाय भवति । तुमर्थे कृत्यार्थे वा तवैप्रत्ययः । 'अन्तश्च तवैयुगपत्' इत्याद्युदात्तत्वम् । किञ्च—एषां इन्द्रियं वीर्यं च वृङ्क्ते, वर्जयति । स्वयं तेषां श्रेष्ठः प्रशस्यतमो भवति ॥

[18]वर्षवृद्धमिति शूर्पोपोहनम् ॥ तत्रौषधीनामैषीकस्य च शूर्पस्य वर्षवृद्धत्वात् समृद्ध्यै भवति, सदृशयोस्सङ्गतेः । तान्यस्नेति । तानि रक्षांसि अस्ना रुधिरेण पशुभ्यः त्यक्तेन पशुभ्यो निरवादयन्त निष्क्रय्यातर्पयन् ओषधीभ्यः त्यक्तैः तुषैः ओषधीभ्यो निरवादयन्त । पद्दनादिना असृजो असन् भावः ॥

वादयन्त । तुषैरोषधीभ्यः । [14]परापूतꣳ रक्षः परापूता अरातय इत्याह । रक्षसामपहत्यै ॥ ४४ ॥ रक्षसां भागोऽसीत्याह । तुषैरेव रक्षाꣳसि निरवदयते । अप उपस्पृशति मेध्यत्वाय । वायुर्वो वि विनक्त्वित्याह । पवित्रं वै वायुः । पुनात्येवैनान् । अन्तरिक्षादिव वा एते प्रस्कन्दन्ति । ये शूर्पात् । देवो वस्सविता हिरण्यपाणिः प्रतिगृह्णात्वित्याह प्रतिष्ठित्यै । हविषोऽस्कन्दाय । त्रिष्फलीकर्तवा आह । त्र्यावृद्धि यज्ञः । अथो मेध्यत्वाय ॥ ४५ ॥

द्वाभ्यामुत्पुनाति रश्मयो नयन्त्यग्रे यज्ञपतिं यज्ञोऽदितिरस्कन्दाय गृह्णामीत्याह वदेत्याह विजित्या अपहत्या अस्कन्दाय त्रीणि च ॥ ५ ॥

---

[14]परापूतमिति परापवनम् ॥ रक्षसामिति तुषनिरसनम् । वायुर्व इति विवेचनम् । अन्तरिक्षादिव वा इति तण्डुलानां प्रस्कन्दनम् । त्रिष्फलीकर्तवा इति संप्रैषः । त्रिष्फलीकर्तुमेहीति पत्न्याद्याह्वानं त्र्यावृतत्वात् यज्ञस्य । तण्डुलानां निष्पीडनं फलीकरणम् । अथो अपि च मेध्यत्वाय हविषो भवति सत्यत्वहेतुत्वात्त्रित्वस्य । पूर्ववत्करोतेः तवैप्रत्ययः 'ऊर्यादिच्विडाचश्च' इति च्व्यन्तस्य गतित्वाच्च । 'अन्तश्च तवै' इत्याद्युदात्तत्वम् ॥

इति तैत्तिरीयब्राह्मणे तृतीये द्वितीये पौरोडाशिके

पञ्चमोऽनुवाकः.

[1]अवधूत्ꣳ रक्षोऽवधूता अरातय इत्याह । रक्ष-सामपहत्यै । अदित्यास्त्वगसीत्याह । इयं वा अदि-तिः । अस्या एवैनत्त्वचं करोति । प्रति त्वा पृथि-वी वेत्त्वित्याह प्रतिष्ठित्यै । पुरस्तात्प्रतीचीनग्रीवमु-त्तरलोमोपस्तृणाति मेध्यत्वाय । तस्मात्पुरस्तात्प्र-त्यञ्चः पशवो मेधमुप तिष्ठन्ते । तस्मात्प्रजा मृगं ग्राहुकाः । यज्ञो देवेभ्यो निलायत ॥४६॥ कृष्णो रूपं कृत्वा । यत्कृष्णाजिने हविरधि पिनष्टि । य-ज्ञादेव तद्यज्ञं प्रयुङ्क्ते । हविषोऽस्कन्दाय । [2]द्यावापृ-थिवी सहास्ताम् । ते शम्यामात्रमेकमहर्व्यैताꣳ शम्यामात्रमेकमहः । [3]दिवस्स्कम्भनिरसि प्रति

---

[1]अवधूतमित्यादि ॥ गतम्* । हविरधिपिनष्टीति विशेषः ॥

[2]द्यावापृथिवी सहेत्यादि ॥ सह एकीभूते आस्ताम् । एकै-कस्मिन् अहनि शम्यामात्रं शम्याप्रमाणं व्यैतां विश्लिष्टे अ-भूताम् । 'चादिलोपे विभाषा' इति निघाताभावः । 'तिङि चो-दात्तवति' इति गतेरनुदात्तत्वे आट उदात्तत्वम् ॥

[3]दिव इति शम्यानिधानम् ॥ दिवः स्कम्भनिः धारयित्री त्वमसीति । पृथिव्या दिवः पृथग्भवनं द्यावापृथिव्योः वीसै भ-

---

त्वाऽदित्यास्त्वग्वेत्त्वित्याह । द्यावापृथिव्योर्वीत्यै । [4]धिषणाऽसि पर्वत्या प्रति त्वा दिवस्स्कम्भनिर्वेत्त्वित्याह । द्यावापृथिव्योर्विधृत्यै ॥ ४७ ॥ [5]धिषणाऽसि पार्वतेयी प्रति त्वा पर्वतिर्वेत्त्वित्याह । द्यावापृथिव्योर्धृत्यै । [6]देवस्य त्वा सवितुः प्रसव इत्याह प्रसूत्यै । अश्विनोर्बाहुभ्यामित्याह । अश्विनौ हि देवानामध्वर्यू आस्ताम् । पूष्णो हस्ताभ्यामित्याह यत्यै । अधिवपामीत्याह । यथादेवतमेवैना-

---

वति विश्लेषाय भवति मध्ये वा तयोश्शम्याऽवस्थापनात् । 'तादौ च' इति गतेः प्रकृतिस्वरत्वम् ॥

[4]धिषणाऽसीति शम्यायां दृषदोऽत्याधानम् ॥ द्युपृथिव्योः स्कम्भन्या शम्यया चर्मदृषदोर्मध्यस्थया द्यावापृथिव्योः विधृतिः पृथक्त्वेनावस्थानम् । धृङ् अवस्थाने ॥

[5]धिषणाऽसि पार्वतेयीति दृषद्युपलात्याधानम् ॥ दृषदुपलयोः द्युपृथिवीस्थानीययोः प्रतिवेदनं उपर्यधोभावेनावस्थानाभ्यनुज्ञानं तद्द्यावापृथिव्योर्धृत्यै धारणाय अच्युतये भवति ॥

[6]देवस्येति पुरोडाशीयाधिवपनम् ॥ 'अग्नये जुष्टमधिवपामि' इति विशेषः । तत्र 'अग्नये जुष्टं निर्वपाम्यग्नीषोमाभ्याम्'* इति वचनात् यथादेवतमेवैनानधिवपति ॥

---

* सं. १-१-४.

नर्धि वपति । [7]धान्यमसि धिनुहि देवानित्याह । एतस्य यजुषो वीर्येण ॥ ४८ ॥ यावदेका देवता कामयते यावदेका । तावदाहुतिः प्रथते । न हि तदस्ति । यत्तावदेव स्यात् । यावज्जुहोति । [8]प्राणाय त्वाऽपानाय त्वेत्याह । प्राणानेव यजमाने दधाति। दीर्घामनु प्रसितिमायुषे धामित्याह । आयुरेवा- स्मिन्दधाति । अन्तरिक्षादिव वा एतानि प्रस्कन्द- न्ति । यानि दृषदः । देवो वस्सविता हिरण्यपा- णिः प्रति गृह्णात्वित्याह प्रतिष्ठित्यै । हविषोऽस्कं-

---

[7]धान्यमसीत्यधिवपनम् ॥ तत्र धिनुहि प्रीणय देवान् इ- त्येतन्मन्त्रपदबलेन तावदाहुतिः प्रथते पृथुतरा भवति । कि- यती? एकैका देवता यावद्यावत् कामयते तावत्तावत् पृथुः प्रथीयसी प्रतिष्ठा भवति । पूर्ववन्निघाताभावः । ननु अवदान- मात्रं हूयते, न च कामस्य समुद्रस्येवान्तोस्ति, तत्कथं कामा- नुरूपत्वसिद्धिरित्याह—न हीति । यत्प्रमाणं हूयते तावत्प्रमाणे- नैव सर्वदा स्यातव्यमिति न हि तादृशं नियामकवचनमस्ति ॥

[8]प्राणायेत्यन्ववेक्षते ॥ देवो व इति कृष्णाजिने पिष्टानि प्र- स्कन्दयति । गतमन्यत् * ॥

---

* आ. ३-२-५.

न्दाय । [9]असंवपन्ती पिंᳲषाणूनि कुरुतादित्याह मेध्यत्वाय ॥ ४१ ॥

निलायत विधृत्यै वीर्येण स्कन्दन्ति
चत्वारि च ॥ ६ ॥

[1]धृष्टिरसि ब्रह्म यच्छेत्याह धृत्यै । [2]अपाग्नेऽग्निमामादं जहि निष्क्रव्यादᳲ सेधा देवयजं वहेत्याह। य एवामात्क्रव्यात् । तमपहत्य । मेध्येऽग्नौ कपा-

[9]असंवपन्तीति दास्यादेः संप्रैषः ॥ असंवपन्ती पिष्टान्यन्यत्र किञ्चिदप्रक्षिपन्ती पिंष पिण्ढि अणूनि सूक्ष्माणि च पिष्टानि कुरुतात् कुर्विति वचनं मेधार्हत्वाय । पिषेर्लोटि द्विकरणता ॥

इति तैत्तिरीयब्राह्मणे तृतीये द्वितीये षष्ठोऽनुवाकः.

---

[1]धृष्टिरसीति धृष्टयादानम् ॥ शत्रूणां धर्षणसामर्थ्यात् धारणाय भवति ॥

[2]अपाग्न इति गार्हपत्याभिमन्त्रणम् ॥ आमात् अपक्वाशी हविषो विनाशकः । 'अदोऽनन्ने' इति विट् । निष्क्रव्यादमित्यङ्गारनिरसनम् । क्रव्यात् पक्वमांसाशी चिताग्निः । 'क्रव्ये च' इति विट् । आदेवयजमित्यङ्गारमन्यमावर्तयति । मेध्यः मेधार्हः देवयट् नाम हविषां सम्यक् संपादयिता देवानां यष्टा ॥

लमुप दधाति । [3]निर्दग्धꣳ रक्षो निर्दग्धा अरातय इत्याह । रक्षाꣳस्येव निर्दहति । अग्निवत्युप दधाति । अस्मिन्नेव लोके ज्योतिर्धत्ते । अङ्गारमधि वर्तयति ॥ ५० ॥ अन्तरिक्ष एव ज्योतिर्धत्ते । आदित्यमेवामुष्मिन्लोके ज्योतिर्धत्ते। ज्योतिष्मन्तोऽस्मा इमे लोका भवन्ति । य एवं वेद । [4]ध्रुवमसि पृथिवीं दृꣳहेत्याह । पृथिवीमेवैतेन दृꣳहति । धर्त्रमस्यन्तरिक्षं दृꣳहेत्याह । अन्तरिक्षमेवैतेन दृꣳहति । धरुणमसि दिवं दृꣳहेत्याह । दिवमेवैतेन

---

[3]निर्दग्धमित्यङ्गाराधिवर्तनम् ॥ अग्निवतीत्यादि । 'छन्दसीरः' इति मतुपो वत्वम् । 'ह्रस्वनुड्भ्याम्' इति मतुप उदात्तत्वम्। अग्निवति प्रदेशे कपालोपधानात् अस्मिन् पृथिवीलोके ज्योतिर्धत्ते । कपालेऽङ्गाराधिवर्तनात् अन्तरिक्षं ज्योतिष्मत्करोति अमुष्मिन् द्युलोके आदित्याख्यं ज्योतिः प्रागेव सन्निहितम् । अथैवं वेदितुरपि एते त्रयो लोकाः ज्योतिष्मन्तो भवन्ति ॥

[4]ध्रुवमिति मध्यमकपालोपधानम् । धर्त्रमिति पूर्वार्ध्योपधानम् । धरुणमित्यपरार्ध्योपधानम् । धर्मासीति दक्षिणार्ध्योपधानम् ॥ दृंहन्त इति । दृहि वृद्धौ, उदात्तेत, कर्मकर्तर्यात्मनेपदम् । स्वयमेवात्मानं दृंहयतीति । 'निश्रन्थि' इत्यादिना यगभावः, 'छन्दस्युभयथा' इति शपः आर्धधातुकत्वात् णिलोपः ॥

दृꣳहति ॥ ५१ ॥ धर्मासि दिशो दृꣳहेत्याह । दिशा एवैतेन दृꣳहति । इमानेवैतैर्लोकान्दृꣳहति । दृꣳहन्तेऽस्मा इमे लोकाः प्रजया पशुभिः । य एवं वेद । [5]त्रीण्यग्रे कपालान्युप दधाति । त्रय इमे लोकाः । एषां लोकानामाप्त्यै । एकमग्रे कपालमुप दधाति । एकं वा अग्रे कपालं पुरुषस्य संभवति ॥ ५२ ॥ अथ द्वे । अथ त्रीणि । अथ चत्वारि । अथाष्टौ । तस्मादष्टाकपालं पुरुषस्य शिरः । यदेवं कपालान्युपदधाति । यज्ञो वै प्रजापतिः । यज्ञमेव प्रजापतिꣳ सꣳस्करोति । आत्मानमेव तत्सꣳस्करोति । तꣳ सꣳस्कृतमात्मानम् ॥ ५३ ॥ अमुष्मिन्लोकेऽनु परैति । [6]यदष्टावुप दधाति ।

[5]त्रीण्यग्र इति सङ्ख्यास्तुतिः ॥ त्रीणि मध्यमपूर्वापराणि । एकमग्र इत्यादि अष्टाकपालावयवसङ्ख्यास्तुतिः । तत्र नानामन्त्रकाणि चत्वारि, पञ्चमादीन्येकमन्त्रकाणि । तत्रात्मसमष्टिरूपः प्रजापतिः स्वयं यज्ञः तेन यज्ञसंस्कारेण कपालोपधानादिना तद्व्यष्टिभूत आत्मा स्वयं संस्क्रियते । तं तथा संस्कृतं आत्मानं अमुष्मिन् लोकादौ भोगस्थाने अयं पुरुषः अनुपरैति अनुगच्छति । एकस्यैव संस्कृतासंस्कृतरूपेण भेद उपचर्यते ॥

[6]यदष्टावित्यष्टाकपालादीनां छन्दस्त्वेन स्तुतिः ॥ छन्दःस-

गायत्रिया तथ्संमितम् । यन्नवं । त्रिवृता तत् । यद्दशं । विराजा तत् । यदेकादश । त्रिष्टुभा तत् । यद्वादश ॥ ५४ ॥ जगत्या तत् । छन्दस्संमितानि स उपदधत्कपालानि । इमान्लोकाननुपूर्वं दिशो विधृत्यै दृꣳहति । अथायुः प्राणान्प्रजां पशून् यजमाने दधाति । सजातानस्मा अभितो बहुलान्करोति । [7]चितस्स्थेत्याह । यथायजुरेवैतत् । [8]भृगूणामङ्गिरसां तपसा तप्यध्वमित्याह । देवतानामेवैनानि तपसा तपति । तानि ततस्सꣳस्थिते । यानि घर्मे कपालान्युपचिन्वन्ति वेधस इति च-

---

म्मितानीति । नवत्वान्वयात् त्रिवृत् अतिबृहत्युपचर्यते । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । इमानिति । इमान् लोकान् दिशश्च विधृत्यै पृथगवस्थानाय दृंहति लोकानां दिशां च छन्दःकारणकत्वात्, आयुरादीनि च यजमाने स्थापयति तत्कारणानां छन्दसां स्थापितत्वात् । सजातान् समानजन्मनश्च पुरुषान् अभितः सेवमानान् बहून् चास्य करोति अभितश्छन्दसां स्थापनात् ॥

[7]चितः स्थेत्यन्यकपालोपधानम् ॥ प्रजादिसिद्धिर्यथायजुर्भवत्येव ॥

[8]भृगूणामित्यङ्गाराभिवासनम् ॥ चतुष्पदयर्चेति । इत्थं ज्ञात्वाऽ-

तुष्पदय॒र्चा विमु॑ञ्चति । चतु॑ष्पादः प॒शवः॑ । प॒शु-ष्वे॒वोपरि॑ष्टा॒त्प्रति॑ तिष्ठति ॥ ५५ ॥

व॒र्त॒य॒ति॒ दिवमे॒वैतेन॑ दृꣳहति स॒म्भवति॒ तꣳ स॒ꣳस्कृतमा॒त्मान॒ं द्वाद॑श॒ सꣳ-स्थिते॒ त्रीणि॑ च ॥ ७ ॥

[1]दे॒वस्य॑ त्वा स॒वि॒तुः प्र॑स॒व इत्या॑ह॒ प्रसू॑त्यै । अ॒श्विनो॑र्बा॒हुभ्या॒मित्या॑ह । अ॒श्विनौ॒ हि दे॒वाना॑म-ध्व॒र्यू आ॑स्ताम् । पू॒ष्णो हस्ता॑भ्या॒मित्या॑ह॒ यत्यै॑ । संव॑पा॒मीत्या॑ह । य॒था॒दे॒व॒तमे॒वैना॑नि॒ संव॑पति । [2]समापो॑ अ॒द्भिर॑ग्मत॒ समोष॑धयो॒ रसे॒नेत्या॑ह । आ-

*नुष्ठेयामिति दर्शयति । लोपे समासान्ते 'टाबृचि' इति टापि* 'पादः पत्' इति पद्भावः ॥

इति ब्राह्मणे तृतीये द्वितीये सप्तमः.

---

[1]देवस्येति पिष्टानां संवपनम् ॥ गतम्[1] । 'अग्नये जुष्टं संवपामि'[2] इति विशेषः । 'अग्नये जुष्टम्'[2] 'अग्नीषोमाभ्याम्'[2] इति यथादेवतं पात्र्यां संवपति सहप्रक्षिपति ॥

[2]समाप इति प्रणीतामदन्तीनामानीयमानानां प्रतिमन्त्रणम् ॥ द्वयमत्र भवति—आपो वा ओषधीर्जिन्वन्ति ओषधयो हि

[1]ब्रा. ३-२-२. [2]सं. १-१-४.

पो वा ओषधीर्जिन्वन्ति । ओषधयोऽपो जिन्वन्ति। अन्या वा एतासामन्या जिन्वन्ति ॥५६॥ तस्मादेवमाह । सꣳ रेवतीर्जगतीभिर्मधुमतीर्मधुमतीभिस्सृज्यध्वमित्याह । आपो वै रेवतीः । पशवो जगतीः । ओषधयो मधुमतीः । आप ओषधीः पशून्। तानेवास्मा एकधा सꣳसृज्य । मधुमतः करोति । अद्भ्यः परि प्रजातास्स्थ समद्भिः पृच्यध्वमिति पर्याप्लावयति । यथा सुवृष्ट इमामनु विसृत्य ॥५७

अपः जिन्वन्ति प्रीणयन्ति । किं बहुना? आसां मध्ये अन्याः अन्याः प्रीणयन्ति अन्याश्चान्याः, न त्वेभ्योऽन्यः कश्चिदापः प्रीणयिता । यद्वा—आसामपामोषधीनां च मध्ये काश्चिदासां काश्चिदपः प्रीणयन्ति, काश्चिच्चौषधयः काश्चिदोषधीः, तस्मात् समापो अद्भिरित्याद्युच्यत इति । आपः रेवतीः रेवत्यः धनवत्यः सर्वधनोत्पत्तिहेतुत्वात् 'रयेर्मतौ बहुलम्' इति संप्रसारणम् । 'रैशब्दाच्चोपसंख्यानम्' इति मतुपो वत्वम् । पशवः जगतीः जगत्यः जङ्गमस्वभावाः जगति प्रभवा वा, ओषधयः मधुमतीः मधुमत्यः मधुरसवत्यः तान् सर्वान् आप ओषधीः पशूंश्च मधुमतः करोति यजमानाय एकधा संसृज्य करिष्यमाणपिष्टोदकसंसर्गव्याजेन । 'पुमान् स्त्रिया' इति पुंमइशेषः । मन्त्रार्थस्तु—हे आपः! रेवत्यः मधुमत्यश्च यूयं जगतीभिः पशुभिः संसृज्यध्वं भोग्यत्वेन परिणामात् मधुमतीभिः ओषधीभिश्च संसृज्य-

आप ओषधीर्महयन्ति । तादृगेव तत् । [3]जनयत्यै त्वा संयौमीत्याह । प्रजा एवैतेन दाधार । अग्नये त्वाऽग्नीषोमाभ्यामित्याह व्यावृत्यै । मखस्य शिरोऽसीत्याह । यज्ञो वै मखः । तस्यैतच्छिरः । यत्पुरोडाशः । तस्मादेवमाह ॥ ५८ ॥ घर्मोऽसि विश्वायुरित्याह । विश्वमेवायुर्यजमाने दधाति । उरु प्रथस्वोरु ते यज्ञपतिः प्रथतामित्याह । यजमानमेव प्रजया पशुभिः प्रथयति । त्वचं गृह्णीष्वेत्याह । सर्वमेवैनꣳ सतनुं करोति । अथाप आनीय परि मार्ष्टि । माꣳस एव तत्त्वचं दधाति। तस्मात्त्वचा माꣳसं छन्नम् । [4]घर्मो वा एषोऽशा-

---

ध्वमिति । पर्याप्लावनं तप्ताभिरद्भिः सर्वत आप्लावनम् । यथा सुवृष्टे पर्जन्ये पृथिवीमनुप्रविश्य आपः ओषधीः महयन्ति पूजयन्ति वर्धयन्ति यत्तुल्यं तत्पर्याप्लावनम् । मह पूजायाम्, चुरादिरदन्तः ॥

[3]जनयत्यै त्वेत्यालोडनम् ॥ अग्नये त्वेत्यादि व्यूहाभिमर्शनम् । मखस्येति पिण्डकरणम् । तस्यैतच्छिरः इति शिर इव प्रधानं साधनम् । घर्म इत्यधिश्रयणम् । उर्विति प्रथनम् । त्वच इति श्लक्ष्णीकरणमद्भिः । गतमन्यत् ॥

[4]घर्मो वा इति ॥ घर्मः अग्निः अशान्तः अनुपरतः प्र-

न्तः ॥ ५९ ॥ अर्धमासेऽर्धमासे प्रवृज्यते । यत्पुरोडाशः । स ईश्वरो यजमानꣳ शुचा प्रदहः । पर्यग्नि करोति । पशुमेवैनमकः । शान्त्या अप्रदाहाय । त्रिः पर्यग्नि करोति । त्र्यावृद्धि यज्ञः । अथो रक्षसामपहत्यै । [5]अन्तरितꣳ रक्षोऽन्तरिता अरातय इत्याह ॥ ६० ॥ रक्षसामन्तर्हित्यै । पुरोडाशं वा अधिश्रितꣳ रक्षाꣳस्यजिघाꣳसन् । दिवि नाको नामाग्नी रक्षोहा । स एवास्माद्रक्षाꣳस्यपाहन् । देवस्त्वा सविता श्रपयत्वित्याह । सवितृप्रसूत एवैनꣳ श्रपयति । वर्षिष्ठे अधि नाक इत्याह । रक्षसामपहत्यै । अग्निस्ते तनुवं माऽति धागित्या-

---

वृज्यते उद्दीप्यते, प्रस्तरणादिवत् धात्वर्थनिवृत्तिमुपसर्ग आह। शुचा दीप्त्या यजमानं प्रदहः प्रकर्षेण दग्धुं स ईश्वरः स्यात्। 'ईश्वरे तोसुन्कसुनौ' इति कसुन् । पर्यग्निकरणेन पशुकल्पः क्रियत इति तदस्य शान्त्यै भवति । यजमानस्य चाप्रदाहाय करोति । छान्दसे लुङि 'मन्त्रे घस' इति च्लेर्लुकि लङि वा शपो लुक् ॥

[5]अन्तरितमिति पर्यग्निकरणम् ॥ देवस्त्वेति श्रपणम् । अग्ने हव्यमिति गार्हपत्याभिमन्त्रणम् । अविदहन्तः अविदग्धं कुर्वन्तः श्रपयतेति वाचं विसृजते संवपने संयताम् । हविर्गुणाभिव्याह-

हानतिदाहाय । अग्ने हव्यꣳ रक्षस्वेत्याह गुप्त्यै ॥ ६१ ॥ अविदहन्तश्श्रपयतेति वाचं विसृजते । यज्ञमेव हवीꣳष्यभिव्याहृत्य प्रतनुते । पुरोरुचमविदाहाय शृत्यै करोति । [6]मस्तिष्को वै पुरोडाशः । तं यन्नाभिवासयेत् । आविर्मस्तिष्कस्स्यात् । अभिवासयति । तस्माद्गुहा मस्तिष्कः । भस्मनाऽभि वासयति । तस्मान्माꣳसेनास्थि छन्नम् ॥ ६२ ॥ वेदेनाभि वासयति । तस्मात्केशैश्शिरश्छन्नम् । अखलतिभावुको भवति । य एवं वेद । [7]पशोर्वै प्रतिमा पुरोडाशः । स नायजुष्कमभिवास्यः ।

---

रणव्याजेन यज्ञमेव प्रकर्षेण तनुते । किं च—पुरोरुचं प्रथमत एव रोचकं उद्दीपकं वाक्यं अविदाहाय श्रपणाय च करोति ॥

[6]मस्तिष्को वा इति ॥ शिरोमांसतुल्योऽयं पुरोडाशः, प्राधान्यात् । अभिवासनं छादनम् । मस्तिष्कस्याविर्भावे म्रियेत पुरोडाशस्याभिवासनात् सर्वदा मस्तिष्को गुहा गुह्यः गुह्ये वा स्थाने स्थितः । 'सुपां सुलुक्' इत्याकारः । अखलतिभावुकः खलतिभवनशीलः वेदिता न भवति । छान्दस उकञ् ॥

[7]पशोर्वा इति ॥ अयजुष्काभिवासने निष्फल एव पुरो-

वृथैव स्यात् । ईश्वरा यजमानस्य पशवः प्रमेतोः। [8]सं ब्रह्मणा पृच्यस्वेत्याह । प्राणा वै ब्रह्म ॥ ६३ ॥ प्राणाः पशवः । प्राणैरेव पशून्त्सं पृणक्ति । न प्रमायुका भवन्ति । यजमानो वै पुरोडाशः । प्रजा पशवः पुरीषम् । यदेवमभि वासयति । यजमानमेव प्रजया पशुभिस्समर्धयति । [9]देवा वै हविर्भृत्वाऽब्रुवन् । कस्मिन्निदं म्रक्ष्यामह इति । सोऽग्निरब्रवीत् ॥ ६४ ॥ मयि तनूस्संनिधध्वम् । अहं वस्तं जनयिष्यामि । यस्मिन्म्रक्ष्यध्व इति । ते देवा अग्नौ तनूस्सं न्यदधत । तस्मादाहुः । अ-

डाशो भवेत । ईश्वराः यजमानस्य पशवः प्रमेतोः प्रकर्षेण मर्तुं ईश्वराः स्युः । 'ईश्वरे तोसुन्कसुनौ' इति तोसुन् ॥

[8]सं ब्रह्मणेति भस्मनाऽभिवासनम् ॥ प्राणहेतुः ब्रह्म पशवश्च प्राणाः प्राणवन्तः, प्राणवतां प्राणैस्संपर्कोऽनेन ब्रह्मपुरोडाशसंपर्केण प्रार्थ्यते । प्रजा पशवः पुरीषमिति तस्य पूरणम् ॥

[9]देवा इत्यादि ॥ हविस्संभरणानन्तरं अब्रुवन् इदं हविस्संभरणप्रभवं हिंसादिकं पापं कस्मिन् म्रक्ष्यामहे शोधयाम इति । अथ तच्छ्रुतवान् अग्निः अब्रवीत् देवान्, युष्माकं तनूः मयि संनिधध्वं सह निक्षिपत, ततः अहं तादृशं युष्माकं जनयिष्यामि यस्मिन्निदं पापं म्रक्ष्यध्व इति । ते देवा इत्यादि ।

ग्निस्सर्वा देवता इति । सोऽङ्गारेणापः । अभ्यपातयत् । तत एकतोऽजायत । स द्वितीयमभ्यपातयत् ॥ ६५ ॥ ततो द्वितोऽजायत । स तृतीयमभ्यपातयत् । ततस्त्रितोऽजायत । यदद्भ्योऽजायन्त । तदाप्यानामाप्यत्वम् । यदात्मभ्योऽजायन्त। तदात्म्यानामात्म्यत्वम् । [10]ते देवा आप्येष्वमृजत। आप्या अमृजत सूर्याभ्युदिते । सूर्याभ्युदितस्सूर्याभिनिम्रुक्ते ॥ ६६ ॥ सूर्याभिनिम्रुक्तः कुनखिनि ।

---

गतम् । अथ सर्वदेवात्मा सः अग्निः अङ्गारेण अङ्गाररूपेण वर्तमानः अपोऽभि अपोऽभिलक्ष्य आत्मानं अपातयत् । तत एकतोनामाग्निविशेषोऽजायत एकस्मादभिपातात् जातः एकतः। तसिलन्ताच्छान्दसोऽकारप्रत्ययः । एतेन द्वितत्रितौ गतौ । आप्यानामिति । छान्दसो ण्यः । आत्म्यानामिति । छान्दसो यः ॥

[10]ते देवा इत्यादि ॥ 'एकताय स्वाहा'* इत्यादिभिर्मन्त्रैः स्वरेखासु पात्रनिर्णेजनानां अपां निनयनेन । अथैते आप्या देवाः आत्मीयं पापं सूर्याभ्युदिते अमृजत यमकृतसन्ध्यं सूर्योऽभ्युदेति यमभिलक्ष्योदेति स सूर्येणाभ्युदितः अभिलक्ष्योद्यता दूषितः । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । यद्वा—यं सूर्योऽभिमन्यमानः क्रुध्यन्नुदेति स सूर्येणाभ्युदितः संज्ञैषा । सूर्याभिनिम्रुक्त इति।

---

*सं. १-१-८.

कुनखी श्यावदति । श्यावदन्नग्रदिधिषौ । अग्रदिधिषुः परिवित्ते । परिवित्तो वीरहणि । वीरहा ब्रह्महणि । तद्ब्रह्महणं नात्यच्यवत । अन्तर्वेदि निनयत्यवरुध्यै । उल्मुकेनाभि गृह्णाति शृतत्वाय । शृतकामा इव हि देवाः ॥ ६७ ॥

अन्या जिन्वन्त्यनुविसृत्यैवमाहाशान्त आह गुप्त्यै छन्नं ब्रह्माब्रवीद्द्वितीयमभ्यपातयथ्सूर्याभिनिम्रुक्ते देवाः ॥ ८ ॥

---

अमृजतेत्येव । एवं सर्वत्र । सूर्याभ्युदितेन सूर्याभिनिम्रुक्तो गतः । निम्रुक्तः अस्तंगतः । म्रुचुम्लुचु स्तेयकरणे । **कुनखी** कुत्सितनखाख्येन व्याधिविशेषेण तद्वान्, व्याधिविशेषेण दूषितनखः । **श्यावदन्** व्याधिविशेषेण मलिनदन्तः । 'विभाषा श्यावारोकाभ्याम्' इति दद्भावः । **अग्रदिधिषुः** यस्यां ज्येष्ठायामनूढायां कनीयसी ऊढा सा अग्रदिधिषुः । तद्भर्तेत्येके । **परिवित्तः** ज्येष्ठात्पूर्वमूढवान् अस्यैव ज्येष्ठ इत्येके । **वीरहा** गर्भघाती । क्षत्रियघातीत्येके । **ब्रह्महा** ब्राह्मणं हतवान् । **तत्** पापं **ब्रह्महणं** अतिक्रम्य **नात्यच्यवत** नात्यक्रमत नान्यत्रागच्छत् । **अन्तर्वेदीत्यादि** । निनयनं निपतनं **अवरुध्यै** कर्मफलस्य लाभाय । अभिग्रहणं उपर्याक्रमणं, **उल्मुकेनाभि**तापनं तत् **शृतत्वाय** भवति शृतं हि देवाः कामयन्ते । 'शीलिकामि' इत्यादिना णप्रत्ययः । पूर्वपदप्रकृतिस्वरत्वं च ॥

इति तैत्तिरीये ब्राह्मणे तृतीये द्वितीये अष्टमोऽनुवाकः.

[1]देवस्य॑ त्वा सवि॒तुः प्र॑स॒व इति॒ स्फ्यमाद॑त्ते॒ प्रसू॑त्यै । अ॒श्विनो॑र्बा॒हुभ्या॒मित्या॑ह । अ॒श्विनौ॒ हि दे॒वाना॑मध्व॒र्यू आस्ता॑म् । पू॒ष्णो हस्ता॑भ्या॒मित्या॑ह॒ यत्यै॑ । [2]आद॑दे॒ इन्द्र॑स्य बा॒हुर॑सि॒ दक्षि॑ण॒ इ॒त्या॑ह । इ॒न्द्रि॒यमे॒व यज॑माने दधाति । स॒हस्र॑भृष्टि॒श्श॒तते॑जा॒ इत्या॑ह । रू॒पमे॒वास्यै॒तन्म॑हि॒मान॒ं व्या॒चष्टे । [3]वा॒युर॑सि ति॒ग्मते॑जा॒ इत्या॑ह । तेजो॒ वै वा॒युः ॥ ६८ ॥ तेज॑ ए॒वास्मि॒न्दधाति । [4]वि॒षाद्वै ना॒मासु॒र आ॑सीत् । सो॑ऽबिभेत् । य॒ज्ञेन॑ मा दे॒वा अ॒भिभ॑विष्य॒न्तीति॑ । स पृ॑थि॒वीम॒भ्य॑वमीत् । सा॑ऽमे॒ध्या॑ऽभवत् । अथो॒ यदिन्द्रो॑ वृ॒त्रमह॑न्न् । तस्य॒

[1]देवस्य त्वेति स्फ्यादानम् ॥ गतम्* ॥

[2]इन्द्रस्येति स्फ्यानुमन्त्रणम् ॥ आदद इति सावित्रशेषः † ॥

[3]वायुरिति तीक्ष्णीकरणम् ॥ तेजो वा इत्यादि । तेजोवृद्धिहेतुत्वात् ताच्छब्द्यम् ॥

[4]विषाद्वा इत्यादि ॥ विषमत्तीति विषात् । 'अदोऽनन्ने' इति विट् । आसुरः असुरस्यापत्यम् । शिवाद्यण्, अन्तोदात्तः । स्वार्थिकाणन्तो वा । असुरस्यापत्यस्यापि असुरत्वात्, न हि काका-

* ब्रा. ३-२-२. † सं. १-१-९..

लोहितं पृथिवीमनु व्यधावत् । साऽमेध्याऽभवत् । पृथिवि देवयजनीत्याह ॥ ६१ ॥ मेध्यामेवैनां देवयजनीं करोति । ओषध्यास्ते मूलं मा हिंसिषमित्याह । ओषधीनामहिंसायै । [5]व्रजं गच्छ गोस्थानमित्याह । छन्दांसि वै व्रजो गोस्थानः । छन्दांस्येवास्मै व्रजं गोस्थानं करोति । [6]वर्षतु ते द्यौरित्याह । वृष्टिर्वै द्यौः । वृष्टिमेवावरुन्धे ।

---

पत्यत्वात्काकः । सोऽबिभेदित्यादि । गतम् । अभ्यवमीदिति । भीत्या पृथिव्या उपरि वमनं कृतवान् । ततः सा पृथिवी अमेध्या अयज्ञार्हा अभवत् । 'ययतोश्चातदर्थे' इत्युत्तरपदान्तोदात्तत्वम् । अनुव्यधावदिति । पृथिव्या उपरि विविधं अधावत्, सा चामेध्याऽभवत् । पृथिवीति बर्हिःप्रहरणम् । देवयजनि इत्यामन्त्रणेन मेधार्हामेनां करोति ॥

[5]व्रजमिति सतृणपुरीषहरणम् ॥ व्रजन्त्यस्मिन्निति व्रजः । गोचरादौ निपात्यते । गवां स्थानमधिकरणभूतो व्रजः । छन्दांसि शब्दानां स्थानाधिकरणत्वात् तत्साम्यादुत्करोपि तथोच्यते । सोऽपि हि प्रत्याश्रावणलक्षणस्य शब्दस्य स्थानं, एवं छन्दस्त्वेन उत्करस्य स्तुतिः । छन्दांस्येवेति छन्दांसीव व्रजं गोस्थानमुत्करं करोति ॥

[6]वर्षत्विति वेदिप्रत्यवेक्षणम् ॥ वृष्टिर्वा इति । अधिकरणे कर्तरि वा क्तिन् ॥

[7]बधान देव सवितः परमस्यां परावतीत्याह ॥ द्वौ वाव पुरुषौ । यं चैव द्वेष्टि । यश्चैनं द्वेष्टि । तावुभौ बध्नाति परमस्यां परावति शतेन पाशैः । योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौगित्याहानिर्मुक्त्यै । [8]अररुर्वै नामासुर आसीत् । स पृथिव्यामुपम्लुप्तोऽशयत् । तं देवा अपहतोऽररुः पृथिव्या इति पृथिव्या अपाघ्नन् । भ्रातृव्यो वा अररुः । अपहतोऽररुः पृथिव्या इति यदाह॥७१॥ भ्रातृव्यमेव पृथिव्या अपहन्ति । तेऽमन्यन्त । दिवं वा अयमितः पतिष्यतीति । तमररुस्ते दिवं माऽस्कानिति दिवः पर्यबाधन्त । भ्रातृव्यो वा अररुः । अररुस्ते दिवं माऽस्कानिति यदाह । भ्रातृव्यमेव दिवः परिबाधते । स्तम्बयजुर् हरति । पृ-

---

[7]बधानेति निवपति ॥ अनिर्मुक्त्यै अनन्तर्धानाय तमतो देशात् मा मुच इति वचनम् ॥

[8]अररुर्वा इति ॥ पूर्ववदासुरशब्दोऽणन्तोऽन्तोदात्तः । उपम्लुप्तः तिरोहितः अशयत् अशेत । म्लुचेरन्तचविकारः छान्दसः, शेतेर्व्यत्ययेन शप् परस्मैपदं च । तृतीयपर्याय शेषः—अररुस्ते दिवमिति । स्तम्बयजुर्हरतीति विधिः । स्फ्यप्रहतानि तृणानि

थिव्या एव भ्रातृव्यमपहन्ति । द्वितीयꣳ हरति ॥ ७२ ॥ अन्तरिक्षादेवैनमपहन्ति । तृतीयꣳ हरति । दिव एवैनमपहन्ति । तूष्णीं चतुर्थꣳ हरति । अपरिमितादेवैनमपहन्ति । [1]असुराणां वा इयमग्र आसीत् । यावदासीनः परा पश्यति । तावद्देवानाम् । ते देवा अब्रुवन् । अस्त्वेव नोऽस्यामपीति ॥ ७३ ॥ कयन्नो दास्यथेति । यावत्स्वयं परिगृह्णीथेति । ते वसवस्त्वेति दक्षिणतः पर्यगृह्णन् । रुद्रास्त्वेति पश्चात् । आदित्यास्त्वेत्युत्तरतः । तेऽग्निना प्राञ्चोऽजयन् । वसुभिर्दक्षिणा । रुद्रैः प्रत्यञ्चः । आदित्यैरुदञ्चः । यस्यैवं विदुषो वेदिं परिगृह्णन्ति ॥ ७४

---

स्तम्बः तत्प्रधानो यज्ञावयवः स्तम्बयजुः, हरणीयं च सतृणं पुरीषमुपचारेणोच्यते । द्वितीयादीनि पदानि क्रियाविशेषणानि ॥

[1]असुराणां वा इत्यादि ॥ इयं पृथिवी असुराणां स्वभूता पूर्वमासीत् । अनन्तर्हिते देशे आसीनो यावत्परा पश्यति दूरं पश्यति यावद्दूरं द्रष्टुं शक्नोति पुरुषः तावदेव देवानां स्वमासीत् । न तु कश्चिदपि पृथिव्यवयवो नित्यभूत आसीत् । अथ देवाः असुरानब्रुवन् नः अस्माकमपि अस्यां पृथिव्यां नित्यस्वभूतः कश्चिदंशोऽस्त्वेव अवश्यमस्तु तत्र अस्मभ्यं कयत् कियद्दास्यथेति । इकारलोपः छान्दसः । अथ असुराः

भवंत्यात्मनां । परांऽस्य भ्रातृंव्यो भवति । [10]देव-
स्यं सवितुस्सव इत्यांह प्रसूंत्यै । कर्मं कृण्वन्ति
वेधस इत्यांह । इषितꣳ हि कर्मं क्रियतें । पृथिव्यै
मेध्यं चामेध्यं च व्युदंक्रामताम् । प्राचीनमुदीची-
नं मेध्यंम् । प्रतीचीनं दक्षिणाऽमेध्यम् । प्राचीमु-
दींचीं प्रवणां कंरोति । मेध्यांमेवैनां देवयजंनीं क-
रोति ॥ ७५ ॥ प्राञ्चौं वेद्यꣳसावुन्नंयति । आहव-
नीयंस्य परिंगृहीत्यै । प्रतीची श्रोणीं । गार्हंप-

अब्रुवन् यूयं स्वयमेव यावत्परिगृह्णीथ तावद्युष्माकमस्त्विति । वसवस्त्वेत्याद्याः वेदिपरिग्रहणमन्त्राः । गतम्* ॥

[10]देवस्य सवितुरिति वेदिखननम् ॥ इषितं हीति ये हि वेधसो विधायकाः तैरिष्टं कर्तव्यं क्रियते तस्मादहमपि वेदिं खनामीति भावः । पृथिव्या इत्यादि । व्युत्क्रम्य पृथक्त्वेन स्थिते । प्रागञ्चितं प्राचीनम् । 'विभाषाञ्चेः' इति खः । एवं सर्वत्र । दक्षिणा । 'दक्षिणादाच्' । अमेध्यमिति । पूर्ववदन्तोदात्तत्वम् । प्रवणां प्रकर्षेण वनित्रीम् । 'प्रनिरन्तः' इत्यादिना णत्वम्, पराभवन्ति पक्कान्नश्यन्ति । मूलं वा इति । अतितिष्ठत् अतिक्रम्य मूलं अनु अनुलक्ष्य । यद्वा—मूलमतितिष्ठत् अतितिष्ठन्ति अधितिष्ठन्ति, रक्षांसि । वचनव्यत्ययः । अध्यर्थे अतिशब्दः । अनूत्पिपते,

* सं. १-१-९.

त्यस्य परिगृहीत्यै । अथो मिथुनत्वाय । उद्धन्ति । यदेवास्या अमेध्यम् । तदपहन्ति । उद्धन्ति । तस्मादोषधयः पराभवन्ति ॥ ७६ ॥ मूलं छिनत्ति । भ्रातृव्यस्यैव मूलं छिनत्ति । मूलं वा अतितिष्ठद्रक्षाꣳस्यनूत्पिपते । यद्दस्तेन छिन्द्यात् । कुनखिनीः प्रजास्स्युः । स्फ्येनं छिनत्ति । वज्रो वै स्फ्यः । वज्रेणैव यज्ञाद्रक्षाꣳस्यप हन्ति । पितृदेवत्याऽतिखाता । इयतीं खनति ॥ ७७ ॥ प्रजापतिना यज्ञमुखेन संमिताम् । [11]वेदिर्देवेभ्यो निलायत । तां चतुरङ्गुलेऽन्वविन्दन् । तस्माच्चतुरङ्गुलं खेया । चतुरङ्गुलं खनति । चतुरङ्गुले ह्योषधयः प्रतितिष्ठन्ति ।

अनुक्रमेणात्मानं रक्षन्ति, हवींषि वा भुञ्जते । व्यत्ययेन शपश्लुः, आत्मनेपदं च । अतिखाता द्व्यङ्गुलादिप्रमाणातिरेकेण खाता, तस्मात् इयतीं एतावतीं प्रादेशप्रमाणवतीं इत्यभिनयेन दर्शयति । प्रजापतिना यज्ञमुखेन सम्मितां तुल्यप्रमाणां उभयोः प्रादेशप्रमाणत्वात् । यद्वा—यज्ञमुखस्य प्रजापतित्वेन प्रस्तुतिः मुखं च सर्वेषां प्रादेशमात्रमिति ॥

[11]वेदिर्देवेभ्य इति चतुरङ्गुलत्वविधिः ॥ निलायत । 'उपसर्गस्यायतौ' इति लत्वम् । चतुरङ्गुले चतुरङ्गुलप्रमाणे परि-

आप्रतिष्ठायै खनति । यजमानमेव प्रतिष्ठां गमयति । दक्षिणतो वर्षीयसीं करोति । देवयजनस्यैव रूपमकः ॥ ७८ ॥ पुरीषवतीं करोति। प्रजा वै पशवः पुरीषम् । प्रजयैवैनं पशुभिः पुरीषवन्तं करोति । उत्तरं परिग्राहं परिगृह्णाति । एतावती वै पृथिवी । यावती वेदिः । तस्या एतावत एव भ्रातृव्यं निर्भज्य । आत्मन उत्तरं परिग्राहं परिगृह्णाति । ऋतमस्यृतसदनमस्यृतश्रीरसीत्याह । यथायजुरेवैतत् ॥ ७९ ॥ [12]क्रूरमिव वा एतत्करोति।

माणशब्दोऽयम् । 'अङ्गुलेर्दारुणि' इति अच् समासान्तः । वर्षीयसीं उत्तरतो वृद्धतरां अकः करोति । 'मन्त्रे घस' इति च्लेर्लुक्, लङि वा शपो लुक् । पुरीषवतीं मृदा पूर्णां एतां वेदिं च करोति पुरीषवती वेदिरेव तत्र वेद्या उत्तरपरिग्रहणेन । तस्याः वेद्याः सम्बन्धिनः एतावतः प्रदेशात् सर्वपृथिवीप्रमाणप्रमितात् तत्रतत्र स्थितं भ्रातृव्यं निर्भज्य उत्सार्य आत्मार्थं सर्वामपि पृथिवीं आत्मसात्कर्तुं उत्तरं परिग्राहं परिगृह्णाति । 'परौ यज्ञे' इति घञ् । तत्र 'ऋतमसि'* इत्यादयः उत्तरपरिग्रहणमन्त्राः ॥

[12]क्रूरमिवेति ॥ हिंसात्वात् खननस्य । धा असीति समीकर-

* सं. १-१-९.

यद्वेदिं करोति । धा असि स्वधा असीति योयुप्यते शान्त्यै । उर्वी चासि वस्वी चासीत्याह । उर्वीमेवैनां वस्वीं करोति । पुरा क्रूरस्य विसृपो विरप्शिन्नित्याह मेध्यत्वाय । उदादाय पृथिवीं जीरदानुर्यामैरयश्चन्द्रमसि स्वधाभिरित्याह । यदेवास्या अमेध्यम् । तदपहत्य । मेध्यां देवयजनीं कृत्वा ॥ ८० ॥ यददश्चन्द्रमसि मेध्यम् । तदस्यामेरयति । तां धीरासो अनुदृश्य यजन्त इत्याहानुख्यात्यै । [13]प्रोक्षणीरासादय । इध्माबर्हिरुपसादय । स्रुवं च स्रुचश्च संमृड्ढि । पत्नीꣳ संनह्य । आज्येनोदेहीत्याहानुपूर्वतायै । प्रोक्षणीरासादयति । आपो वै रक्षोघ्नीः ॥ ८१ ॥ रक्षसामपहत्यै । स्फ्यस्य वर्त्मन्थ्सादयति । यज्ञस्य संतत्यै । उवाच हासितो

---

णम् । योयुप्यते भृशं विमोहयति समीकरणेन खातानि तिरो दधाति । युप विमोहने । तच्छान्त्यै भवति खननापराधच्छादनेन सुखायैव भवति । एरयति आगमयति । ईर प्रेरणे ॥

[13]प्रोक्षणीरित्यादि संप्रैषः ॥ अनुपूर्वतायै अनुक्रमेण अनुष्ठानाय । यावतीरिति । यावत्यः प्रोक्षण्यः तावत्य एव देव-

देवलः । एतावतीर्वा अमुष्मिन्लोक आप आसन्न् । यावतीः प्रोक्षणीरिति । तस्माद्बह्वीरासाद्याः । [14]स्फ्यमुदस्यन्न् । यं द्विष्यात्तं ध्यायेत् । शुचैवैनमर्पयति ॥

वै वायुराह परावतीत्याहाहं द्वितीयꣳ हरतीति परिगृह्णन्ति देवयजनीं करोति भवन्ति खनत्यकरेतत्कृत्वा रक्षोघ्नीरर्पयति ॥ १ ॥

[1]वज्रो वै स्फ्यः । यदन्वञ्चं धारयेत् । वज्रेऽध्वर्युः क्षण्वीत । पुरस्तात्तिर्यञ्चं धारयति । वज्रो वै

---

लोके आपो वर्तन्ते तस्मात् बह्व्यः आपः आसाद्याः यथा देवानां पर्याप्ता भवन्ति ॥

[14]स्फ्यमित्यादि ॥ गतम् ॥

इति तैत्तिरीये ब्राह्मणे तृतीये द्वितीये नवमः.

---

[1]वज्रो वा इत्यादि ॥ अन्वञ्चं आत्माभिमुखं क्षण्वीत हिंस्यात् आत्मानं अध्वर्युः । कर्मणि वा कर्तृप्रत्ययः । क्षण्येत हिंस्येत । वज्रेणैवेति, यत्तुल्यः स्फ्यः । अग्निभ्यामिति । आहवनीयगार्हपत्याभ्याम् । ?: स्फ्येनोदीचश्चाधराच तिर्यञ्चं स्फ्यं स्तब्ध्वा संप्रेषात् एवं स्फ्येन वज्रतुल्येनास्याः पृथिव्याः सम्बधिनं

स्फ्यः । वज्रेणैव यज्ञस्य दक्षिणतो रक्षाꣳस्यपहन्ति । अग्निभ्यां प्राचश्च प्रतीचश्च । स्फ्येनोदीचश्चाधराचश्च । स्फ्येन वा एष वज्रेणास्यै पाप्मानं भ्रातृव्यमपहत्य । उत्करेऽधि प्रवृश्चति ॥ ८३ ॥ यथोपधायं वृश्चन्त्येवम् । हस्तावव नेनिक्ते । आत्मानमेव पवयते । स्फ्यं प्रक्षालयति मेध्यत्वाय । अथो पाप्मन एव भ्रातृव्यस्य न्यङ्गं छिनत्ति । [2]इध्माबर्हिरुपसादयति युक्त्यै । यज्ञस्य मिथुनत्वाय । अथो पुरोरुचमेवैतां दधाति । उत्तरस्य कर्मणोऽनुख्यात्यै । न पुरस्तात्प्रत्यगुपसादयेत् ॥ ८४ ॥ यत्पुरस्तात्प्रत्यगुपसादयेत् । अन्यत्राहुतिपथादिध्मं प्रतिपादयेत् । प्रजा वै बर्हिः । अपराध्नुयाद्बर्हिषा

---

पाप्मानं भ्रातृव्यं अपहत्य उत्पाट्य उत्करे उपधानस्थानीये अधिनिधाय वृश्चति यथा लोके किञ्चित्काष्ठादिकमुपधाय व्रश्चनीयं वृश्चन्ति एवमेतत् । नेनिक्ते शोधयति । अथो इति अपि च भ्रातृव्यस्य पाप्मनः न्यङ्गं न्यञ्जनं शरीरशोभां तेजः छिनत्ति स्फ्यप्रक्षाळनेन । निभृतं वा अङ्गं न्यङ्गम् ॥

[2]इध्माबर्हिः इध्मं च बर्हिश्च उत्तरेणाहवनीयं प्रागग्रमुपसादयति युक्त्यै यज्ञेन योगो यथा स्यात् । किञ्च—यज्ञस्य मि-

प्रजानां प्रजननम् । पश्चात्प्रागुपसादयति । आहुतिपथेनेध्मं प्रतिपादयति । संप्रत्येव बर्हिषा प्रजानां प्रजननमुपैति । दक्षिणमिध्मम् । उत्तरं बर्हिः । आत्मा वा इध्मः । प्रजा बर्हिः । प्रजा ह्यात्मन उत्तरतरा तीर्थे । ततो मेधमुपनीयं । यथादेवतमेवैनत्प्रतिष्ठापयति । प्रतितिष्ठति प्रजया पशुभिर्यजमानः ॥ ८५ ॥

वृश्चति सादयेदिध्मः पश्चं च ॥१०॥

तृतीयस्यां देवस्याश्वपरशुं यो वै पूर्वेद्युः कर्मणे वामिन्द्रो वृत्रमहन्थ्सोऽपोऽवधूतं धृष्टिर्देवस्येत्याह संवपामि देवस्य स्फ्यमाददे वज्रो वै स्फ्यो दश॥

---

थुनत्वाय द्वयोस्सहोपसादनम् । अपि च पुरोरुचं पुरस्ताद्दीपनां इमां यज्ञस्य स्थापयति उत्तरस्य करिष्यमाणस्य कर्मणोऽनुरूयात्यै अनुक्रमेण प्रकाशनार्थं, रोचनार्थत्वात् । अन्यत्रेति । आहुतिपथात् आहुतिन्यायात् प्राचीनत्वात् अन्यत्र अनाहुतिपथे इध्मं प्रवर्तयेत् । अथ बर्हिषः प्रतीचीनत्वे दोषमाह—प्रजा वा इति। बर्हिषा हेतुना प्रजानां प्रजननं प्राचीनवृत्ति अपराध्नुयात् अयुक्तेन रूपेण प्रवर्तयेत् । पश्चात्प्रागुपसादने दोषद्वयाभावः । संप्रत्येवेति । युक्तेन रूपेण । आत्मेति । अग्नेरभ्यन्तरत्वात् ।

तृतीयस्यां यज्ञस्यानतिरेकाय पवित्रवत्यध्वर्युं चाधिषवणमस्यन्तरिक्ष एव रक्षसामन्तर्हित्यै द्वौ वाव पुरुषौ यद्दश्चन्द्रमसि मेध्यं पञ्चाशीतिः ॥८५

तृतीयस्यां—यजमानः.

हरिः ओम् ॥ श्रीकृष्णार्पणमस्तु ॥ कृष्णयजुर्ब्राह्मणे तृतीयाष्टके द्वितीयप्रपाठकस्समाप्तः.

---

प्रजा बर्हिः संतन्यमानत्वात् प्रजातुल्यम् । उत्तरतरेति । तीर्थे भावे उन्नततरा, ततः तेनैव क्रमेण मेधमुपनीय यथादेवतं आत्मप्रजास्वभावानतिक्रमेण एनत् इध्माबर्हिः प्रतिष्ठापयति ततः प्रजया पशुभिश्च यजमानः प्रतिष्ठितो भवति ॥

इति तैत्तिरीये ब्राह्मणे तृतीये अष्टके द्वितीये प्रपाठके

दशमोऽनुवाकः समाप्तश्च प्रपाठकः.

प्रथमं पौरोडाशिकं समाप्तम्.



श्री

# तृतीयप्रपाठकप्रारम्भः.

## हरिः ओम्.

[1]प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातय इत्याह । रक्षसामपहत्यै । अग्नेर्वस्तेजिष्ठेन तेजसा निष्टपामीत्याह मेध्यत्वाय । स्रुचस्संमार्ष्टि । स्रुवमग्रे । पुमाꣳसमेवाभ्यस्सꣳश्यति मिथुनत्वाय । अथ जुहूम् । अथोपभृतम् । अथ ध्रुवाम् । असौ वै जुहूः ॥ १ ॥ अन्तरिक्षमुपभृत् । पृथिवी ध्रुवा । इमे वै लोकास्स्रुचः । वृष्टिस्संमार्जनानि । वृष्टिर्वा इमान्लोकाननुपूर्वं कल्पयति । ते ततः क्लृप्तास्समेधन्ते । समेधन्तेऽस्मा इमे लोकाः प्रजया पशुभिः ।

---

### तृतीयः प्रपाठकः.

[1]प्रत्युष्टमिति गार्हपत्ये स्रुवादीनां प्रतितपनम् ॥ संश्यति संस्करोति । इमे वा इति । लोकवत् प्रजानां धारकत्वात् । वृष्टिरिति वृष्टिहेतुत्वात् स्रुक्संमार्जनानि वृष्टिः । अनुपूर्वमिति सस्यनिष्पत्त्यादिक्रमेण लोकत्रयं स्वकार्यसमर्थं करोति ॥

य एवं वेदं । [2]यदि कामयेत वर्षुकः पर्जन्यस्स्यादिति । अग्रतस्संमृज्यात् ॥ २ ॥ वृष्टिमेव नियंच्छति । अवाचीनाग्रा हि वृष्टिः । यदि कामयेतावर्षुकस्स्यादिति । मूलतस्संमृज्यात् । वृष्टिमेवोद्यच्छति । तदु वा आहुः । अग्रत एवोपरिष्टात्संमृज्यात् । मूलतोऽधस्तात् । तदनुपूर्वं कल्पते । वर्षुको भवतीति ॥ ३ ॥ [3]प्राचीमभ्याकारम् । अग्रैरन्तरतः । एवमिव ह्यन्नमद्यते । अथो अग्राद्वा ओषधीनामूर्जं प्रजा उपजीवन्ति । ऊर्जं एवा-

---

[2] अग्रत इति ॥ वेदाग्राणां अग्रैः । नियच्छति न्यक्पातयति । मूलतः तेषां मूलैः संमार्जने वृष्टिमुद्यच्छति ऊर्ध्वं गमयति निवर्तयति पृथिव्याम् । तदु वा इति । तत्रैव विशेषमाहुः यज्ञविदः— अग्रैः उपरिष्टात् बिलप्रदेशमेव संमृज्यात् मूलैः अधस्तात् दण्डप्रदेशं तदनुपूर्वं अनुक्रमेण क्रियमाणं कल्पते स्वकार्यसमर्थं भवति । पर्जन्यश्च वर्षुको भवति ॥

[3] अथ स्रुवां विशेषमाह—प्राचीमिति ॥ प्राचीं स्रुचं संमृज्यात् अभ्याकारं अभितः आकृष्य अभ्यस्येति केचित् । अग्रैरन्तरतः अग्रैः वेदाग्रैः अन्तरतः बिलस्याभ्यन्तरम् । एवमिवेति । प्राचीनमानीय आस्यबिलाभ्यन्तरे जिह्वाग्रेण अभितः आकृष्यान्नं भुङ्क्ते । अथो अपि च ओषधीनां अग्रात् आदाय प्रजाः

न्नाद्यस्यावरुध्यै । अधस्तात्प्रतीचीम् । दण्डमुत्तमतः । मूलेन मूलं प्रतिष्ठित्यै । तस्मादरत्नौ प्राञ्च्युपरिष्टाल्लोमानि । प्रत्यञ्च्यधस्तात् ॥४॥ स्रुग्घ्येषा । [4]प्राणो वै स्रुवः । जुहूर्दक्षिणो हस्तः । उपभृत्सव्यः । आत्मा ध्रुवा । अन्नꣳ संमार्जनानि । मुखतो वै प्राणोऽपानो भूत्वा । आत्मानमन्नं प्रविश्य । बाह्यतस्तनुवꣳ शुभयति । तस्मात्स्रुवमेवाग्रे संमार्ष्टि । [5]मुखतो हि प्राणोऽपानो भूत्वा ।

---

ऊर्जं रसं उपजीवन्ति तस्मात् रसवतः अन्नाद्यस्य लाभाय भवति । अथ अधस्तात् दण्डप्रदेशे प्रतीचीनं संमृज्यात् उत्तमतः उत्तमेन वेदाग्राणां भागेन । उत्तमं दण्डत्रिभागमिति केचित् । अथ तेषां मूलेन स्रुचः मूलं मृज्यात् । तस्मादिति । उपरिष्टात् ऊर्ध्वभागे प्राञ्चि प्रागञ्चितानि, अधोभागे प्रत्यगञ्चितानि । अरत्निः प्रकोष्ठः । स्रुग्घ्येषा स्वयं स्रुगेवारत्निः ॥

[4]प्राणो वा इत्यादिना स्रुवस्य प्राथम्ये हेतुमाह—निर्गच्छन् प्राणः प्रविशन् अपानः प्राणापानभावेन प्रथमं भूत्वा मुखतः आत्मानं अनुप्रविश्य अन्नं बाह्यतः तनुवं हस्तादिकां शुभयति रसपरिणामेन तनोः शोभां करोति तस्मात्प्राणाधीनत्वात् हस्तादिस्थितेः स्रुवस्य प्राणत्वात् स्रुवमेवाग्रे सम्मार्ष्टीति स्वभाव उक्तः ॥

[5]इदानीं हेतुमाह—मुखतो हीति ॥ प्रथमं प्राणापानभूतं अन्नं

आत्मानमन्नमाविशति । तौ प्राणापानौ । अभ्यर्धुकः प्राणापानाभ्यां भवति । य एवं वेद ॥ ५ ॥

जुहूंमृज्याद्भवतीति प्रत्यञ्चयधस्तान्मार्ष्टि पञ्च च ॥ १ ॥

[1]दिवश्शिल्पमवततम् । पृथिव्याः ककुभि श्रितम् । तेन वयꣳ सहस्रवल्शेन । सपत्नं नाशयामसि स्वाहेति स्रुक्संमार्जनान्यग्नौ प्रहरति । आपो वै

आत्मानं आविशति आत्मना एकीभवति ततः तदन्नं प्राणापानभावेन परिणतं भवति । एवं प्राणापानसन्तानकप्रतिपादनेन पूर्वोक्तं समर्थितम् । एवं वेदिता प्राणापानवृद्धिशीलो भवति ॥

इति तैत्तिरीये ब्राह्मणे तृतीयेऽष्टके तृतीयप्रपाठके
पौरोडाशिकब्राह्मणे प्रथमोऽनुवाकः.

---

[1]स्रुक्संमार्जनान्यग्नौ प्रहरति—दिवश्शिल्पमित्यनुष्टुभा ॥ दिवः द्युलोकस्य शिल्पं कौशलं अवततं पृथिव्यामुदकभावेन अवतीर्णं दर्भभावेन परिणतं, तदिदं पृथिव्याः ककुभि प्रधानभूते अग्नौ श्रितं मया क्षिप्तमभूत्, तेन सहस्रवल्शेन बहुप्ररोहणेन वयं सपत्नं शत्रुं नाशयामसि नाशयामः । 'इदन्नो मसि' स्वाहेति प्रदानार्थः । आपो वै दर्भा इति । अग्नौ प्रक्षिप्यमाणानां दर्भाणां दिव-

दर्भाः । रूपमेवैषामेतन्महिमानं व्याचष्टे । [2]अनुष्टुभर्चा । आनुष्टुभः प्रजापतिः । प्राजापत्यो वेदः । वेदस्याग्रꣳ स्रुक्संमार्जनानि ॥ ६ ॥ स्वेनैवैनानि छन्दसा । स्वया देवतया समर्धयति । अथो ऋग्वाव योषा । दर्भो वृषा । तन्मिथुनम् । मिथुनमेवास्य तद्यज्ञे करोति प्रजननाय । प्रजायते प्रजया पशुभिर्यजमानः । [3]तान्येके वृथैवापास्यन्ति । तत्तथा न कार्यम् । आरब्धस्य यज्ञियस्य कर्मणस्स विदोहः ॥ ७ ॥ यद्येनानि पशवोऽभितिष्ठेयुः । न तत्पशुभ्यः कम् । अद्भिर्मार्जयित्वोत्करे न्यस्येत् । यद्वै यज्ञियस्य कर्मणोऽन्यत्राहुतीभ्यस्संतिष्ठते । उत्करो वाव तस्य प्रतिष्ठा । एताꣳ हि तस्मै प्रति-

---

शिशल्पभूतोदकहेतुत्वात् मन्त्रे ताच्छब्द्यमिति दर्शयति—एषां दर्भाणां महिमानं दिवशिशल्पत्वलक्षणं एतत् मन्त्रलक्षणं रूपमेव व्याचष्टेनास्माभिर्व्याख्येयम् ॥

[2]अनुष्टुभेति ॥ 'दिवशिशल्पम्' इत्यस्यानुष्टुम्मस्य स्तुतिः । अथो इत्यादिना अस्या ऋक्त्वस्य स्तुतिः ॥

[3]तान्येक इत्यादि ॥ वृथा निष्फलं यत्र क्वापित्यजन्ति केचित् तद्दूषयित्वा उत्करे न्यासं विदधाति । विदोहः विरुद्धफलदोहः

ष्ठां देवास्समभरन्। यदद्भिर्मार्जयंति। तेन शान्तम्। यदुत्करे न्यस्यति। प्रतिष्ठामेवैनानि तद्गमयति ॥ ८ ॥ प्रतितिष्ठति प्रजया पशुभिर्यजमानः। [4]अथो स्तम्बस्य वा एतद्रूपम्। यथ्स्रुक्संमार्जनानि। स्तम्बशो वा ओषधयः। तासां जरत्कक्षे पशवो न रमन्ते। अप्रियो ह्येषां जरत्कक्षः। यावदप्रियो ह वै जरत्कक्षः पशूनाम्। तावदप्रियः पशूनां भवति। यस्यैतान्यन्यत्राग्नेर्दधति। नवदाव्यासु वा ओषधीषु पशवो रमन्ते ॥ ९ ॥ नवदावो ह्येषां प्रियः। यावत्प्रियो ह वै नवदावः पशूनाम्। ताव-

भूतलं दुग्धकल्पं भवन् तत् सुखहेतुर्न भवति पशूनाम्। कथं तर्हि कर्तव्यमित्याह—अद्भिरिति। हेतुमाह—यद्वा इति। अन्यत्राहुतीभ्यः होतव्यद्रव्याणि मुक्त्वा यत् सन्तिष्ठते कृतकार्यं भवति तस्योत्करः प्रतिष्ठा प्रतिष्ठात्वेन तस्य कल्पितत्वात्, अद्भिर्मार्जनात् शान्तं सुखहेतुः पशूनां, उत्करे न्यासात् प्रतिष्ठां गमयति, यजमानोऽपि प्रजया पशुभिश्च प्रतिष्ठितो भवति ॥

[4]अथो स्तम्बस्येति ॥ स्तम्बः फलमञ्जरी स्रुक्समार्जनानि नाम तस्य रूपं तद्वत् पशूनां वृद्धिः। ओषधयश्च स्तम्बशः स्तम्बेनस्तम्बेन पृथग्विधेन इत्थंभूताः। वीप्सायां शस्। तासु च स्तम्बवतीषु पशवः रमन्ते, तासां तु यो जरत्कक्षः फलपल्लवशून्यं काष्ठ-

त्प्रियः पशूनां भवति । यस्यैतान्यग्नौ प्रहरन्ति । तस्मादेतान्यग्नावेव प्रहरेत् । यतरस्मिन्थ्संमृज्यात् । पशूनां धृत्यै । [5]यो भूतानामधिपतिः । रुद्रस्तन्तिचरो वृषा । पशूनस्माकं मा हिंसीः । एतदस्तु हुतं तव स्वाहेत्यग्निसंमार्जनान्यग्नौ प्रहरति । एषा वा एतेषां योनिः । एषा प्रतिष्ठा । स्वामेवैनानि

मूलशेषं पुराणारण्यं तत्र पशवो न रमन्ते, अप्रियत्वात् अन्यत्रेति । अग्नेरन्यत्र जरत्कक्षवत् स्थापयन्ति यस्य स न कदाचिदपि पशूनां प्रियः स्यात् । ननु अग्नौ प्रहरणे अत्यन्तविनाशात् सुतरामप्रियत्वमित्याह—नवदाव्यास्विति । नवदावः सद्यः समुत्थितः वनवह्निः यत्र प्रदेशे तत्र तद्दग्धे वने प्ररूढा नवदाव्याः । 'भवे छन्दसि' इति यः, छान्दसमुत्तरपदप्रकृतिस्वरत्वम् । तासु ओषधीषु पशवो रमन्ते यस्मात् नवदाव एषां पशूनां प्रियः प्ररोहहेतुत्वात् तत्प्रवृत्तिमाशंसन्ते मेघस्येव चातकाः । तस्मादग्नौ प्रहरणं पशूनां प्रीत्यै भवति, प्ररोहहेतुत्वादग्नेः । मन्त्रलिङ्गं च 'तेन वयं सहस्रवल्शेन' इति । तस्मात् अग्नेः यतरस्मिन् स्रुचः संमृज्यात् तस्मिन्नग्नौ प्रहरेत्, पशूनामेव धारणाय तद्भवति ॥

[5]अग्निसम्मार्जनान्यग्नौ प्रहरति यो भूतानामित्यनुष्टुभा ॥ यो भूताना अधिपतिः स्वामी रुद्रः तन्तिचरः तननीयः यज्ञः तन्तिः । यद्वा—पशूनां बन्धनरज्जुश्रेणी तन्तिः 'वाक्तन्तिः' इति श्रुतेः, वचनाभिविकल्पिकया पशवो बद्ध्यन्ते । तत्र यश्चरति स तन्ति-

योनिम् । स्वां प्रतिष्ठां गमयति । प्रतितिष्ठति प्रजया पशुभिर्यजमानः ॥ १० ॥

वेदस्याग्रꣳ स्रुक्संमार्जनानि विदोहो गमयति पशवो रमन्ते हिꣳसीष्षट्च ॥ २ ॥

[1]अयज्ञो वा एषः । योऽपत्नीकः । न प्रजाः प्रजायेरन् । पत्न्यन्वास्ते । यज्ञमेवाकः । प्रजानां प्रजननाय । यत्तिष्ठन्ती संनह्येत । प्रियं ज्ञातिꣳ

न्वरः वृषा देवानां वृषभः प्रधानभूतः सः त्वं अस्माकं पशून् मा हिंसीः तदर्थं एतत् इध्मसंनहनाख्यं दर्भद्रव्यं तव हुतमस्तु । तव हि हुतं वृष्ट्यादिक्रमेण पशूनामभिवृद्धये भवति । 'युष्मदस्मदोर्ङसि' इति तवशब्द आद्युदात्तः । स्वाहेति प्रदानार्थः । अग्निसंमार्जनानि इध्मसंनहनानि । एषेति । अग्निरेव दर्भाणां योनिः कारणं वृष्ट्यादिना । स एव प्रतिष्ठा अग्रेऽप्यवस्थानम् । स्वामेवेत्यादि । गतम् ॥

इति तैत्तिरीयब्राह्मणे तृतीयेऽष्टके तृतीये प्रपाठके द्वितीयोऽनुवाकः.

---

[1] अयज्ञो वा इत्यादि ॥ यज्ञोऽप्ययज्ञः यज्ञकार्याकरणात्, यथा पुत्रकार्याकरणात् पुत्रोऽप्यपुत्र इत्युच्यते । अन्वास्ते गार्हपत्यमनु-

रुन्ध्यात् । आसीना संनह्यते । आसीना ह्येषा वी-र्यं करोति ॥ ११ ॥ यत्पश्चात्प्राच्यन्वासीत । अन-या समर्दं दधीत । देवानां पत्निया समर्दं दधीत । देशाद्दक्षिणत उदीच्यन्वास्ते । आत्मनो गोपीथाय। [2]आशासाना सौमनसमित्याह । मेध्यामेवैनां के-वलीं कृत्वा । आशिषा समर्धयति । अग्नेरनुव्रता भूत्वा संनह्ये सुकृताय कमित्याह । एतद्वै पत्नियै व्रतोपनयनम् ॥ १२ ॥ तेनैवैनां व्रतमुपनयति । तस्मादाहुः । यश्चैवं वेद यश्च न । योक्त्रमेव युंते ।

गताऽऽस्ते । तथा कुर्वन्ती अयज्ञापनोदनेन **यज्ञमेवाकः** करोति । लुङि पूर्ववत् च्लेर्लुक् । **प्रियमिति** मातरं पितरं वा, उच्चलितत्वात् । **आसीना** हि वीर्यवती स्त्री भवति न तथा तिष्ठन्ती । **पश्चादिति** । अपरतो गार्हपत्यस्य । **अनया** पृथिव्या । एवमासीना पत्नी **समर्दं** कलहं **दधीत** तथाऽऽसीनत्वात् पृथिव्याः, ततश्चायज्ञिया स्यात् । इयमपि **देवानां पत्न्या समर्दं दधीत** देवपत्नीनां स्थानत्वात्तस्य । तस्मात् ततो **देशात् दक्षिणत उदीची** उपविशति ॥

[2] **आशासानेति** योक्त्रेण पत्न्याः संनहनम् ॥ **व्रतोपनयनमिति** । ' अग्नेरनुव्रता '* इति च मन्त्रलिङ्गम् । **तस्मादाहुरिति** । **यश्चैवं** संनहनमहिमानं **वेद यश्च न वेद** लौकिकः ते सर्वेऽपि वक्ष्यमाणमा-

* सं. १-१-१०.

यमन्वास्ते । तस्यामुष्मिँल्लोके भवतीति योक्त्रेण। यद्योक्त्रम् । स योगः । यदास्ते । स क्षेमः ॥१३॥ योगक्षेमस्य क्लृप्त्यै । [3]युक्तं क्रियाता आशीः कामे युज्याता इति । आशिषस्समृद्ध्यै । ग्रन्थिं ग्रंथाति । आशिष एवास्यां परिगृह्णाति । पुमान् वै ग्रन्थिः । स्त्री पत्नी । तन्मिथुनम् । मिथुनमेवास्य

---

ह्नुः । योक्त्रेण यत्संनहनं तद्युते मिश्रयति नित्याविनाभूतामेनां करोति । व्यत्ययेनात्मनेपदम् । कथं? यमन्वास्ते अनुवर्तते तस्यैव अमुष्मिन् परस्मिन् लोके भवति योक्त्रेण सन्नद्धा प त्नीति, एवं संनहनं अवियोगायेति सर्वेपि वदन्ति । 'अनुव्रता' इति मन्त्रपदमेतेन व्याख्यातम् । किञ्चेत्याह—योक्त्रं योगः अलब्धलाभतुल्यः, आसनं नाम क्षेमः लब्धपरिपालनतुल्यः, तस्मादासनं योक्त्रेण संनहनं योगक्षेमस्य क्लृप्त्यै भवति, योगः सन्निहितः क्षेमः योगक्षेमः ॥

[3]पुनश्च प्रयोजनान्तरवत्तया संनहनं स्तूयते—अतः परं मया युक्तमेव क्रियेत मया कृतं सर्वं युक्तमेवास्तु । आशीः कामे कामानामाशीः सद्य एव युज्येत युक्ता एव आशिषस्सन्तु इत्यनया धिया योक्ष्यमाणा संनह्यतेऽसौ, तस्मात् आशिषस्समृद्ध्यै भवति । संनहनमन्त्रलिङ्गं च 'आशासाना'* इति । उभयत्रापि

* सं. १-१-१०

तद्यज्ञे करोति प्रजननाय । प्रजायते प्रजया पशु- भिर्यजमानः ॥ १४ ॥ अथो अर्धो वा एष आ- त्मनः । यत्पत्नी । यज्ञस्य धृत्या अशिथिलंभावा- य । [4]सुप्रजसस्त्वा वयꣳ सुपत्नीरुप सेदिमेत्याह । यज्ञमेव तन्मिथुनीकरोति । ऊनेऽतिरिक्तं धीयाता इति प्रजात्यै । [5]महीनां पयोऽस्योषधीनाꣳ रस इ- त्याह । रूपमेवास्यैतन्महिमानं व्याचष्टे । तस्य तेऽक्षीयमाणस्य निर्वपामि देवयज्याया इत्याह । आशिषमेवैतामाशास्ते ॥ १५ ॥

करोति व्रतोपनयनं क्षेमो यजमान- इशास्ते ॥ ३ ॥

---

लेटि 'वैतोऽन्यत्र' इत्यैकारः । अशिथिलंभावाय अशिथिल- भावाय । च्वेरम्भावः छान्दसः ॥

[4]सुप्रजस इति पत्न्या गार्हपत्योपसदनम् ॥ मिथुनीकरोतीति । मिथुनवान् मिथुनी पत्न्यनुप्रवेशेन यज्ञो मिथुनवान् क्रियते । कोऽर्थोऽनयेति चेत् पत्नीकृत्यं दर्शयति—ऊने छिद्रे अतिरिक्तं धीयातै कथं नाम छिद्रपूरणेन समीकृतो यज्ञः स्यादिति । तच्च मिथुनत्वं प्रजात्यै भवति, छिद्रपूरणरूपत्वात् मिथुनव्यापारस्य ॥

[5]महीनामित्याज्यनिर्वपणम् ॥

इति तैत्तिरीयब्राह्मणे तृतीये तृतीये तृतीयोऽनुवाकः.

[1]घृतं च वै मधु च प्रजापतिरासीत्। यतो मध्वासीत् । ततः प्रजा असृजत । तस्मान्मधुषि प्रजननमिवास्ति । तस्मान्मधुषा न प्रचरन्ति । यातयाम हि । आज्येन प्रचरन्ति । यज्ञो वा आज्यम् । यज्ञेनैव यज्ञं प्रचरन्त्ययातयामत्वाय । पत्नयवेक्षते ॥ १६ ॥ मिथुनत्वाय प्रजात्यै । यद्वै पत्नी यज्ञस्य करोति । मिथुनं तत् । अथो पत्निया एवैष यज्ञस्यान्वारम्भोऽनवच्छित्त्यै । [2]अमेध्यं वा एतत्करोति । यत्पत्नयवेक्षते । गार्हपत्येऽधिश्रयति मेध्यत्वाय । आहवनीयमभ्युद्द्रवति । यज्ञस्य स-

---

[1]घृतं चेत्यादि ॥ प्रजापतिः प्रजापतेः स्वरूपमासीत् । यद्वा—घृतं मधुतुल्यमासीत् । तयोर्मध्ये यतः यन्मधुलक्षणं रूपमासीत् ततस्तेन रूपेण प्रजा असृजत । तस्मात् मधुषि मधुनि प्रजननं प्रजननद्रव्यमस्ति च, यस्मात् तेन प्रजा असृजत, तस्मात् प्रजनवत्त्वात् तेन न प्रचरन्ति यज्ञप्रयोगं न कुर्वन्ति यातयामत्वात् प्रयोगेन गतसारत्वात् । यज्ञो वा इति । यज्ञार्थमेवाज्यं, अन्यत्रानुपयोगात् तस्मात् यज्ञार्थेनैव यज्ञं प्रचरितुं युक्तम्। अयातयामत्वाय तद्भवति ॥

[2]अमेध्यं वा इत्यादि ॥ मनुष्यदर्शनात् । तेजोसि इति

न्तत्यै । तेजोऽसि तेजोऽनु प्रेहीत्याह ॥१७॥ तेजो वा अग्निः । तेज आज्यम् । तेजसैव तेजस्समर्धयति । अग्निस्ते तेजो मा विनैदित्याहाहिंसायै । स्फ्यस्य वर्त्मन्थ्सादयति । यज्ञस्य सन्तत्यै । अग्नेर्जिह्वाऽसि सुभूर्देवानामित्याह । यथायजुरेवैतत् । धाम्नेधाम्ने देवेभ्यो यजुषेयजुषे भवेत्याह । आशिषमेवैतामाशास्ते ॥१८॥ [3]तद्वा अतः पवित्राभ्यामेवोत्पुनाति । यजमानो वा आज्यम् । प्राणापानौ पवित्रे । यजमान एव प्राणापानौ दधाति । पुनराहारम् । एवमिव हि प्राणापानौ संचरतः । शुक्रमसि ज्योतिरसि तेजोऽसीत्याह । रूपमेवास्यैतन्महिमानं व्याचष्टे । त्रिर्यजुषा । त्रय इमे लोकाः ॥ १९ ॥ एषां लोकानामाप्त्यै । त्रिः । त्र्या-

---

गार्हपत्ये अधिश्रयणम् । तेजोनुप्रेहि इति हरणम् । अग्निस्त इत्याहवनीयाधिश्रयणम् । अग्नेर्जिह्वेत्याज्यावेक्षणम् ॥

[3]अतः कारणात् अस्मिन्नेव काले **पवित्राभ्यामुत्पुनाति** अवेक्षणदोषशान्त्यै । **पुनराहारमिति** पुनराहृत्य पुनराहृत्य प्रागुत्पूय आज्यस्थे एव प्रत्यगाहृत्य त्रिरुत्पुनाति । आभीक्ष्ण्ये णमुल् । **एवं हि प्राणापानौ सञ्चरतः** तयोः गच्छदागच्छद्रूपत्वात् । **शुक्र-**

वृद्धि यज्ञः । अथो मेध्यत्वाय । अथाज्यंवतीभ्यामपः । रूपमेवासामेतद्वर्णं दधाति । अपि वा उताहुः । यथा ह वै योषा सुवर्ण हिरण्यं पेशलं बिभ्रती रूपाण्यास्ते । एवमेता एतर्हीति । आपो वै सर्वा देवताः ॥ २० ॥ एषा हि विश्वेषां देवानां तनूः । यदाज्यम् । [4]तत्रोभयोर्मीमाꣳसा । जामि स्यात् । यद्यजुषाऽऽज्यं यजुषाऽप उत्पुनीयात् । छन्दसाऽप उत्पुनात्यजामित्वाय । अथो मिथुन-

मसीत्याद्यैराज्योत्पवनम् । त्रिरिति पुनर्वचनं त्रित्वस्य फलान्तरप्रदर्शनार्थम् । अथेति अथ आज्योत्पवनानन्तरं आज्यवतीभ्यां आज्यलिप्ताभ्यां पवित्रतनुभ्यामेव अपः प्रोक्षणीरुत्पूनाति, पवित्रयोः आज्यलिप्तयोः यद्रूपं एतदेव आसां अपां पूर्वं विशिष्टं अपां वर्णमिदानीं दधाति । अपि खल्वत्र यज्ञविद आहुः वदन्ति यथा काचित् योषा विलासिनी सुवर्णं शोभनवर्णं हिरण्यं हितरमणीयं हिरण्यसमानं वा पेशलं रूपसमृद्धम् । पिश अवयवे, औणादिको लप्रत्ययः । एतानि रूपाणि देहगुणान् बिभ्रती आस्ते अबाधितकान्तिर्वर्तते आज्यलिप्ताभ्यां उत्पूताः शोभन्ते । 'इदमोर्हिल्' 'एतेतौ रथोः' इत्येतादृशः ॥

[4]तत्रेति ॥ तथासति उभयोः अबाज्ययोः मीमांसा जिज्ञासा भवति तद्विदाम् । आज्यं अपश्च यदि 'शुक्रमसि'* इति यजुषोत्पुनीयात् । तत् जामि आलस्यजननं यत्स्यात्, तत्कथं कर्त

* सं. १-१-१०.

त्वार्य । सावित्रियर्चा । सवितृप्रसूतं मे कर्मास-दिति । सवितृप्रसूतमेवास्य कर्म भवति । पच्छो गायत्रिया त्रिंष्षमृद्धत्वाय । अद्भिरेवौषधीस्संनंयति । ओषधीभिः पशून् । पशुभिर्यजमानम् । [5]शुक्रं त्वा शुक्रायां ज्योतिस्त्वा ज्योतिष्यर्चिस्त्वाऽर्चिषीत्याह सर्वत्वाय । पर्याप्त्या अनन्तरायाय ॥

ईक्षत आह शास्ते लोका देवता भवति षट् ॥ ४ ॥

०यमिति ? तत्र निर्णयमाह—छन्दसा 'देवो वः'[1] इत्यनेनैव अप उत्पुनाति तदजामित्वाय भवति, मिथुनत्वाय च । सावित्रियर्चेति । 'देवो वः'[1] इत्यनया उत्पुनीयात् सवित्राऽनुज्ञातं मे कर्म स्यादिति । लेट्याडागमः । पच्छ इति । पादेन पादेन गायत्र्या उत्पुनीयात् त्रिष्षमृद्धत्वाय त्रेधा समृद्धत्वं यथा स्यादिति 'त्रिपदा गायत्री'[2] इति समृद्ध्यै त्रैविध्यमाह । अद्भिरिति । अद्भिः ओषधीभिश्च पशुभिश्च त्रेधा यजमानसमृद्धिः पच्छ उत्पवनात् गायत्र्याः । सन्नयनं संयोजनम् ॥

[5]शुक्रं त्वेत्याद्याः जुहूप्रभृति ध्रुवासु आज्यग्रहणमन्त्राः ॥ सर्वत्वायेति । 'धाम्ने धाम्ने'[1] इति वचनात् सर्वदेवस्थितिपर्याप्त्या-शासनात् कस्यचिदप्यनन्तरितत्वं लुप्तभागत्वं मा भूदिति ॥

इति तैत्तिरीयब्राह्मणे तृतीये तृतीये चतुर्थोऽनुवाकः.

---

[1] सं. १-१-१०. [2] सं. ३-२-९.

[1]देवासुरास्संयत्ता आसन् । स एतमिन्द्र आज्यस्यावकाशमपश्यत् । तेनावैक्षत । ततो देवा अभवन् । पराऽसुराः । य एवं विद्वानाज्यमवेक्षते । भवत्यात्मना । पराऽस्य भ्रातृव्यो भवति । ब्रह्मवादिनो वदन्ति । यदाज्येनान्यानि हवीꣳष्यभिघारयति ॥ २२ ॥ अथ केनाज्यमिति । सत्येनेति ब्रूयात् । चक्षुर्वै सत्यम् । सत्येनैवैनदभिघारयति । ईश्वरो वा एषोऽन्धो भवितोः । यश्चक्षुषाऽऽज्यमवेक्षते । निमील्यावेक्षेत । दाधारात्मञ्चक्षुः । अभ्याज्यं घारयति । [2]आज्यं गृह्णाति ॥ २३ ॥ छन्दाꣳसि

---

[1]देवासुरा इति ॥ आज्यस्यावकाशमिति 'अग्नेर्जिह्वा '* इत्यवेक्षणमन्त्रस्यैषा संज्ञा । आत्मनेति । प्रकृत्यादितृतीया । यदाज्येनेति । गतम् । सत्यं मतं साधु यथार्थग्रहणसामर्थ्यात् । अन्धो भवितोः भवितुमीश्वरः । 'ईश्वरे तोसुन्कसुनौ ' इति तोसुन् । तेजस्त्वादाज्यस्य । दाधारेति । आत्मनि चक्षुरविकलं धारयति स्थापयति । छान्दसो लिट्, तुजादित्वादभ्यासस्य दीर्घत्वम् । आज्यं चाभिघारयति निमीलनेनात्मनि स्थापितं भवति । अवेक्षणेनाज्यस्याभिघारणम् ॥

[2]आज्यं गृह्णातीति ॥ चतुर्ग्रहादिविशिष्टम् । छन्दांसि वा इति ।

---

[1] सं. १-१-१०.

सि वा आज्यम् । छन्दाꣳस्येव प्रीणाति । चतुर्जुह्वां गृह्णाति । चतुष्पादः पशवः । पशूनेवावरुन्धे । अष्टावुपभृति । अष्टाक्षरा गायत्री । गायत्रः प्राणः। प्राणमेव पशुषु दधाति । चतुर्ध्रुवायाम् ॥२४॥ चतुष्पादः पशवः । पशुष्वेवोपरिष्टात्प्रतितिष्ठति । यजमानदेवत्या वै जुहूः । भ्रातृव्यदेवत्योपभृत् । चतुर्जुह्वां गृह्णन्भूयो गृह्णीयात् । अष्टावुपभृति गृह्णन्कनीयः । यजमानायैव भ्रातृव्यमुपस्तिं करोति। [3]गौर्वै स्रुवः । चतुर्जुह्वां गृह्णाति । तस्माच्चतुष्पदी॥ २५ ॥ अष्टावुपभृति । तस्मादष्टाशफा । चतुर्ध्रुवायाम् । तस्माच्चतुस्स्तना । गामेव तथ्सꣳस्करोति। साऽस्मै सꣳस्कृतेषमूर्जं दुहे । यज्जुह्वां गृह्णाति। प्रयाजेभ्यस्तत् । यदुपभृति।प्रयाजानूयाजेभ्यस्तत्।

---

प्रधानसाधनत्वात् । अष्टावुपभृति गृह्णातीत्येव । एवं चतुर्ध्रुवायामित्यत्रापि । भूयः बहुतरम् । कनीय इति । गृह्णीयादित्येव । कनीयोऽल्पतरम् । 'युवाल्पयोः' इति कनादेशः । उपस्तिं गुणभूतं समीपे भवतीत्युपस्तिः । अस्तेः क्तिनि 'छन्दस्युभयथा' इति सार्वधातुकत्वात् भूभावाभावः, अल्लोपश्च ॥

[3]गौर्वा इति ॥ अभिमतधुक्त्वात् । चतुष्पदीति । 'पादोऽन्यत-

सर्वस्मै वा एतद्यज्ञाय गृह्यते । यद्ध्रुवायामाज्यम् ॥

अभिघारयति गृह्णाति ध्रुवायां चतुष्पदी
प्रयाजानूयाजेभ्यस्तद्वे च ॥५॥

[1]आपो देवीरग्रेपुवो अग्रेगुव इत्याह । रूपमेवासामेतन्महिमानं व्याचष्टे । अग्रं इमं यज्ञं नयताग्रे यज्ञपतिमित्याह । अग्रं एव यज्ञं नयन्ति । अग्रे यज्ञपतिम् । युष्मानिन्द्रोऽवृणीत वृत्रतूर्ये यूयमिन्द्रमवृणीध्वं वृत्रतूर्य इत्याह । वृत्रꣳ ह हनिष्यन्निन्द्र आपो वव्रे । आपो हेन्द्रं वव्रिरे । संज्ञामेवासामेतथ्सामानं व्याचष्टे । प्रोक्षितास्स्थेत्याह ॥ २७ ॥ तेनापः प्रोक्षिताः । [2]अग्निर्देवेभ्यो निलायत ।

रस्याम्' इति ङीप्, 'पादः पत्' इति पद्भावः ॥ अष्टात्रुपभृति गृह्णातीत्येव ॥

इति तैत्तिरीयब्राह्मणे तृतीये तृतीये पञ्चमोऽनुवाकः.

---

[1]आपो देवीरित्यादि ॥ गतम्* ॥ पुनः प्रोक्षण्यभिमन्त्रणं इध्मप्रोक्षणार्थम् ॥

[2]अग्निर्देवेभ्य इत्यादि ॥ कृष्णमृगो भूत्वा रूपं च तद्वीर्यं

* ब्रा. ३-२-५.

कृष्णो रूपं कृत्वा । स वनस्पतीन्प्राविशत् । कृष्णोऽस्याखरेष्ठोऽग्नये त्वा स्वाहेत्याह । अग्नय एवैनं जुष्टं करोति । अथो अग्नेरेव मेधमवरुन्धे । [3]वेदिरसि बरहिषे त्वा स्वाहेत्याह । प्रजा वै बरहिः । पृथिवी वेदिः ॥ २८ ॥ प्रजा एव पृथिव्यां प्रतिष्ठापयति । बरहिरसि स्रुग्भ्यस्त्वा स्वाहेत्याह । प्रजा वै बरहिः । यजमानस्स्रुचः । यजमानमेव प्रजासु प्रतिष्ठापयति । [4]दिवे त्वाऽन्तरिक्षाय त्वा पृथिव्यै त्वेति बरहिरासाद्य प्रोक्षति । एभ्य एवैनं लोकेभ्यः प्रोक्षति । अथ ततस्सह स्रुचा पुरस्ता-

---

कृत्वा निलायत निरगच्छत् । पूर्ववच्छत्वम् । कृष्ण इतीध्मप्रोक्षणम् । अग्नये जुष्टं प्रियं करोति । अथो अपि च अग्नेस्सकाशात् मेधं यज्ञं अवरुन्धे ॥

[3]वेदिरिति वेदिप्रोक्षणम् ॥ बर्हिरिति बर्हिःप्रोक्षणम् ॥

[4]अन्त र्वेद्यासाद्य बर्हिःप्रोक्षणं दिवे त्वेति ॥ लोकेभ्यः लोकसृष्ट्यर्थं सर्वलोकवृत्तिप्रजारूपेण बर्हिषः परिणामार्थम् । अथेति अथ प्रोक्षणानन्तरं तत एव हेतोः प्रजासृष्ट्यर्थत्वात् । यद्वा—ततः तेन स्रुक्स्थेन अग्रमूलोपसादनशेषेण पुरस्तात्प्रत्यश्चं ग्रन्थिं प्रत्युक्षति, सह स्रुचेति, न केवलेन हस्तेन । यथा

त्प्रत्यञ्चं ग्रन्थिं प्रत्युंक्षति । प्रजा वै बर्हिः । यथा सूत्यै काल आपः पुरस्ताद्यन्ति ॥ २९ ॥ तादृगेव तत् । [5]स्वधा पितृभ्य इत्याह । स्वधाकारो हि पितृणाम् । ऊर्ग्भव बर्हिषद्भ्य इति दक्षिणायै श्रोणेरोत्तरस्यै निनयति सन्तत्यै । मासा वै पितरो बर्हिषदः । मासानेव प्रीणाति । मासा वा ओषधीर्वर्धयन्ति । मासाः पचन्ति समृद्ध्यै । अनतिस्कन्दन् ह पर्जन्यो वर्षति । यत्रैतदेवं क्रियते ॥ ३० ॥ [6]ऊर्जा पृथिवीं गच्छतेत्याह । पृथिव्यामेवोर्जं दधाति । तस्मात्पृथिव्या ऊर्जा भुञ्जते।

---

सूतिकाले अग्रत आपो निर्गच्छन्ति तत्तुल्यमेतत्, ग्रन्थेः पुरस्तात् प्रत्युक्षणम् ॥

[5]स्वधेति ॥ दक्षिणस्याः श्रोणेः उत्तरस्याः प्रोक्षणशेषनिनयनम्। तत्र स्वधेति वचनं पितृणां स्वधाकारस्य प्रियत्वात् । तत्र बर्हिषद्भ्य इति निनयनात् बर्हिषदो मासाः प्रीणिता भवन्ति ते च प्रीणिताः ओषधीर्वर्धयन्ति । तथा कृते सर्वस्य समृद्धिः भवति। किञ्च—यत्र देशे एतदेवं क्रियते तत्र पर्जन्यः अनतिस्कन्दन् अतिबाधामकुर्वन् वर्षति ॥

[6]पृथिव्यां इति ॥ पृथिवीसम्बन्धिन्या ऊर्जा रसेन प्रजा भुञ्जते तृप्यन्ति । गतमन्यत् ॥

ग्रन्थिं विस्रꣳसयति । प्रजनयत्येव तत् । ऊर्ध्वं प्राञ्चमुद्गूढं प्रत्यञ्चमायच्छति । तस्मात्प्राचीनꣳ रेतो धीयते । प्रतीचीः प्रजा जायन्ते । [7]विष्णोस्स्तूपोऽसीत्याह । यज्ञो वै विष्णुः ॥ ३१ ॥ यज्ञस्य धृत्यै । पुरस्तात्प्रस्तरं गृह्णाति । मुख्यमेवैनं करोति। इयन्तं गृह्णाति । प्रजापतिना यज्ञमुखेन संमितम्। इयन्तं गृह्णाति । यज्ञपरुषा संमितम् । इयन्तं गृह्णाति । एतावद्वै पुरुषे वीर्यम् । वीर्यसंमितम् ॥ ३२ ॥ अपरिमितं गृह्णाति। अपरिमितस्यावरुद्ध्यै। तस्मिन्पवित्रे अपिसृजति । यजमानो वै प्रस्तरः। प्राणापानौ पवित्रे । यजमान एव प्राणापानौ दधाति । [8]ऊर्णाम्रदसं त्वा स्तृणामीत्याह । यथायजुरेवैतत् । स्वासस्थं देवेभ्य इत्याह । देवेभ्य ए-

---

[7] विष्णोरिति प्रस्तरग्रहणम् ॥ पुरस्तादिति कर्षन्निवाहवनीयं प्रति प्रस्तरमुपादत्ते । इयन्तमिति । प्रादेशपरिमितम् । प्रजापतिना यज्ञमुखेन तत्तुल्यम् । यज्ञपरुषा पर्वणा तुल्यम् । प्रादेशमात्रं च पुरुषे वीर्यस्थानम् । पश्चादपरिमितग्रहणात् अपरिमितलाभः । तस्मिन्नित्यादि । गतम् ॥

[8] ऊर्णाम्रदसमिति बर्हिषा वेदिं स्तृणाति ॥ स्वासस्थमिति

वैनथ्स्वासस्थं करोति ॥ ३३ ॥ बर्हिस्स्तृणाति । प्रजा वै बर्हिः । पृथिवी वेदिः । प्रजा एव पृथिव्यां प्रतिष्ठापयति । [9]अनतिदृश्नꣳ स्तृणाति । प्रजयैवैनं पशुभिरनतिदृश्नं करोति । धारयन्प्रस्तरं परिधीन्परि दधाति । यजमानो वै प्रस्तरः । यजमान एव तथ्स्वयं परिधीन्परिदधाति । [10]गन्धर्वोसि विश्वावसुरित्याह ॥ ३४ ॥ विश्वमेवायुर्यजमाने दधाति । इन्द्रस्य बाहुरसि दक्षिण इत्याह । इन्द्रियमेव यजमाने दधाति । मित्रावरुणौ त्वोत्तरतः परिधत्तामित्याह । प्राणापानौ मित्रावरुणौ । प्राणापानावेवास्मिन्दधाति । सूर्यस्त्वा पुरस्तात्पात्वित्याह । रक्षसामपहत्यै । कस्याश्चि-

देवानां शोभनासनस्थानाधिकरणम् । द्वन्द्वेन सह बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् ॥

[9] अनतिदृश्नमिति ॥ अतीत्य स्तरणं दृश्यते भूमिर्यत्र तदतिदृशम् । एवं क्रियमाणं प्रजया पशुभिश्च यजमानमनतिशून्यं करोति । धारयन्नित्यादि । गतम् ॥

[10] गन्धर्वोसीत्याद्याः परिधिपरिधानमन्त्राः ॥ विश्वमेवायुरिति । 'विश्वस्मात् ईषतः हिंसकाद्यजमानस्य परितो धाता रक्षकः' इति वचनात् । अपरिमितादिति । 'यतःकुतश्चिदभिशस्त्या हिं-

दुभिशँस्त्या इत्याह । अपरिमितादेवैनं पाति॥३५
[11]वीतिहोत्रं त्वा कव इत्याह । अग्निमेव होत्रेण समर्धयति । द्युमन्तꣳ समिधीमहीत्याह समिद्ध्यै । अग्ने बृहन्तमध्वर इत्याह वृद्ध्यै । विशो यन्त्रे स्थ इत्याह । विशां यत्यै । उदीचीनाग्रे निदधाति प्रतिष्ठित्यै । वसूनाꣳ रुद्राणामादित्यानाꣳ सदसि सीदेत्याह । देवतानामेव सदने प्रस्तरꣳ सादयति। [12]जुहूरसि घृताची नाम्नेत्याह ॥ ३६ ॥ असौ वै जुहूः । अन्तरिक्षमुपभृत् । पृथिवी ध्रुवा । तासां-

---

साया: ' इति वचनात् अपरिच्छिन्नात भयहेतोः यजमानं पाति अनतिशून्यं करोति ॥

[11]ऊर्ध्वसमिदाधानं वीतिहोत्रमिति ॥ होत्रेणेति । हूयतेऽनेनेति होत्रं स्तोत्रं इष्टस्तोत्रमिति वचनं स्तोत्रसमृद्धत्वायाग्नेः । होतव्यवचनो वा होत्रशब्दः । विश इति विधृत्योस्सादनम् । विशां प्रजानां यत्यै धारणाय भवति । उदीचीनाग्र इति ऊर्ध्वाग्र इत्येतत् । गोळापेक्षया उदीच्या ऊर्ध्वत्वात् । वसूनामिति विधृत्योः प्रस्तरसादनम् ॥

[12]जुहूरसीत्याद्याः स्रुचां प्रस्तरे सादनमन्त्राः ॥ घृताचीति । घृतमश्चति आधारत्वेनेति । 'ऋत्विक्' इत्यादिना क्विनि अनुनासिकलोपे 'अचः' इत्यकारलोपे 'चौ' इति दीर्घः ॥

मेतदेव प्रियं नाम । यद्घृताचीति । यद्घृताचीत्याह । प्रियेणैवैना नाम्ना सादयति । [13]एता असदन्थ्सुकृतस्य लोक इत्याह । सत्यं वै सुकृतस्य लोकः । सत्य एवैनास्सुकृतस्य लोके सादयति । ता विष्णो पाहीत्याह । यज्ञो वै विष्णुः । यज्ञस्य धृत्यै । पाहि यज्ञं पाहि यज्ञपतिं पाहि मां यज्ञनियमित्याह । यज्ञाय यजमानायात्मने । तेभ्य एवाशिषमाशास्तेऽनार्त्यै ॥ ३७ ॥

स्थेत्याह पृथिवी वेदिर्यन्ति क्रियते विष्णुर्वीर्यसंमितं करोत्याह पाति नाम्नेत्याह लोके सादयति षट्च ॥ ६ ॥

---

[13]एता असदन्निति सादितानां स्रुचामभिमन्त्रणम् ॥ धृत्या इति स्रुचां पातृत्वेन प्रार्थितत्वात् यज्ञस्ता न त्यजतीति तस्यैवावस्थानाय भवति । यज्ञाय यजमानाय यज्ञस्य नेत्रे अध्वर्यवे च आत्मने तेभ्यः एतेभ्यः त्रिभ्यः आशिषमाशास्ते । अनार्त्यै अपीडायै भवति ॥

इति तैत्तिरीयब्राह्मणे तृतीये तृतीये

षष्ठोऽनुवाकः.

[1]अग्निना वै होत्रा । देवा असुरानभ्यभवन् । अग्नये समिध्यमानायानुब्रूहीत्याह भ्रातृव्याभिभूत्यै । एकविꣳशतिमिध्मदारूणि भवन्ति । एकविꣳशो वै पुरुषः । पुरुषस्याप्त्यै । पञ्चदशेध्मदारूण्यभ्यादधाति । पञ्चदश वा अर्धमासस्य रात्रयः । अर्धमासशस्संवथ्सर आप्यते । त्रीन्परिधीन्परिदधाति ॥ ३८ ॥ ऊर्ध्वे समिधावादधाति । अनूयाजेभ्यस्समिधमतिशिनष्टि । षट्थ्सं पद्यन्ते । षड्वा ऋतवः । ऋतूनेव प्रीणाति । वेदेनोपवाजयति । प्राजापत्यो वै वेदः । प्राजापत्यः प्राणः । यजमान आहवनीयः । यजमान एव प्राणं दधाति ॥ ३९ त्रिरुपवाजयति । त्रयो वै प्राणाः । प्राणानेवास्मिन्दधाति । वेदेनोपयत्य स्रुवेण प्राजापत्यमाघार-

---

[1]अग्निना वा इत्यादि ॥ अग्नये समिध्यमानायेति सामिधनीसंप्रैषः । भ्रातृव्याभिभूत्या इत्यादि । दासीभारादिर्द्रष्टव्यः । एकविंशतिमिति । विभक्तिव्यत्ययः, 'दशहस्त्या अङ्गुलयो दशपद्या अत्मैकविंशः'* इत्युक्तम् । अर्धमासशः अर्धमासेनार्धमासेन । 'संख्यैकवचनाच्च' इति शस् । ऊर्ध्वे आघारसमिधौ । उपवाजयति समीपतस्संदीपयति । उपयत्येति । अधस्ताद्धृत्वा ॥

---

* सं. ६-१-१.

माघारयति। यज्ञो वै प्रजापतिः। यज्ञमेव प्रजापतिं मुखत आरभते। अथो प्रजापतिस्सर्वा देवताः। सर्वा एव देवताः प्रीणाति। [2]अग्निमग्नीत्त्रिस्त्रिस्संमृड्ढीत्याह। त्र्यावृद्धि यज्ञः ॥ ४० ॥ अथो रक्षसामपहत्यै। परिधीन्थ्संमार्ष्टि। पुनात्येवैनान्। त्रिस्त्रिस्संमार्ष्टि। त्र्यावृद्धि यज्ञः। अथो मेध्यत्वाय। अथो एते वै देवाश्वाः। देवाश्वानेव तथ्संमार्ष्टि। सुवर्गस्य लोकस्य समष्ट्यै। आसीनोऽन्यमाघारमाघारयति ॥ ४१ ॥ तिष्ठन्नन्यम्। यथाऽनो वा रथं वा युञ्ज्यात्। एवमेव तदध्वर्युर्यज्ञं युनक्ति। सुवर्गस्य लोकस्याभ्यूढ्यै। वहन्त्येनं ग्राम्याः पशवः। य एवं वेद। [3]भुवनमसि विप्रथस्वेत्याह। यज्ञो वै भुवनम्। यज्ञ एव यजमानं प्रजया प-

---

[2] अग्निमग्नीदिति संप्रैषः ॥ त्रिस्त्रिरिति। वीप्सया परिधीन्परिधींश्चेति गम्यते। हे अग्नीत्! आमन्त्रितानुदात्तत्वम्। अपि च एते देवाश्वाः परिधयः स्वर्गप्राप्तिसाधनत्वात्। आसीनः अन्यं प्रथमं, तिष्ठन् अन्यं द्वितीयं, आसित्वा स्थित्वा च यथा रथं वहनसामर्थ्याय युनक्ति युग्यैः एवं ताभ्यां आघाराभ्यां यज्ञं युनक्ति, स्वर्गस्याभ्यूढ्यै स्वर्गाभिमुख्येन वहनाय ॥

शुभिः प्रथयति । अग्ने यष्टरिदं नम इत्याह ॥४२॥ अग्निर्वै देवानां यष्टा । य एव देवानां यष्टा । तस्मा एव नमस्करोति । [4]जुह्वेह्यग्निस्त्वा ह्वयति देवयज्याया उपभृदेहि देवस्त्वा सविता ह्वयति देवयज्याया इत्याह । आग्नेयी वै जुहूः । सावित्र्युपभृत् । ताभ्यामेवैने प्रसूत आदत्ते । [5]अग्नाविष्णू मा वामवक्रमिषमित्याह । अग्निः पुरस्तात् । विष्णुर्यज्ञः पश्चात् ॥ ४३ ॥ ताभ्यामेव प्रतिप्रोच्यात्याक्रामति । विजिहाथां मा मा संताप्तमित्याहाहिंसायै । लोकं मे लोककृतौ कृणुतमित्याह । आशिषमेवैतामाशास्ते । [6]वि-

भुवनमसीत्यग्रेण जुहूपभृतौ प्राञ्चमञ्जलिं करोति ॥ यज्ञो वा इति । सर्वार्थभावनार्थत्वात् ॥

[4] जुह्वेहीति जुहूपभृतोराह्वानमन्त्रौ ॥ ताभ्यामिति । अग्निसवितृभ्यां प्रसूते अनुज्ञाते सती एने आदत्ते ॥

[5] अग्नाविष्णू इत्याक्रमतो जपः ॥ अग्निः आहवनीयः पुरस्तात्, यज्ञसाधनानि स्रुगादीनि पश्चात् प्रतिप्रोच्य निवेद्य । आशिषमिति । स्थानविषयाम् ॥

[6] विष्णोरिति स्थानकल्पनम् ॥ यद्यत्र इति । यत्र यज्ञस्तिष्ठति । 'सुपां सुलुक्' इति सप्तम्या लुक् ॥

ष्णोस्स्थानमसीत्याह । यज्ञो वै विष्णुः । एतत्खलु वै देवानामपराजितमायतनम् । यद्यज्ञः । देवानामेवापराजित आयतने तिष्ठति । [7]इत इन्द्रो अकृणोद्वीर्याणीत्याह ॥ ४४ ॥ इन्द्रियमेव यजमाने दधाति । समारभ्योर्ध्वो अध्वरो दिविस्पृशमित्याह वृद्ध्यै । आघारमाघार्यमाणमनु समारभ्य । एतस्मिन्काले देवास्सुवर्गं लोकमायन् । साक्षादेव यजमानस्सुवर्गं लोकमेति । अथो समृद्धेनैव यज्ञेन यजमानस्सुवर्गं लोकमेति । अह्रुतो यज्ञो यज्ञपतेरित्याहानार्त्यै । इन्द्रावान्स्वाहेत्याह । इन्द्रियमेव यजमाने दधाति । बृहद्भा इत्याह ॥ ४५ ॥ सुवर्गो वै लोको बृहद्भाः । सुवर्गस्य लोकस्य समष्ट्यै । [8]यजमानदेवत्या वै जुहूः । भ्रातृव्यदेवत्योपभृत् । प्राण आघारः । यथ्सꣳस्पर्शयेत् । भ्रातृव्येऽस्य प्राणं दध्यात् । असꣳस्पर्शयन्नत्या-

[7]इत इन्द्र इति द्वितीयाघारम् ॥ बृहद्भा इति स्रुच उद्गूहणम् । अग्ने बृहद्भा इति स्तुतिः । तादृशस्य स्वर्गस्य सम्यक् प्राप्त्यै भवति ॥

[8]संस्पर्शयेदिति ॥ जुहूपभृतौ । अत्याक्रामति प्रत्याक्रामति । पाहीति उदङ्कृत्याक्रामति । अग्निर्वावेति । तस्मात्पाहीत्यग्निरुच्यते ।

क्रामति । यजमान एव प्राणं दधाति । पाहि माऽग्ने दुश्चरितादा मा सुचरिते भजेत्याह ॥ ४६॥ अग्निर्वाव पवित्रम् । वृजिनमनृतं दुश्चरितम् । ऋजुकर्मꣳ सत्यꣳ सुचरितम् । अग्निरेवैनं वृजिनादनृताद्दुश्चरितात्पाति । ऋजुकर्मे सत्ये सुचरिते भजति । तस्मादेवमाशास्ते । आत्मनो गोपीथाय । [7]शिरो वा एतद्यज्ञस्य । यदाघारः । आत्मा ध्रुवा ॥ ४७॥ आघारमाघार्य ध्रुवाꣳ समनक्ति । आत्मन्नेव यज्ञस्य शिरः प्रतिदधाति । द्विस्समनक्ति । द्वौ हि प्राणापानौ । तदाहुः । त्रिरेव समञ्ज्यात् । त्रिधातु हि शिर इति । शिर इवैतद्यज्ञस्य । अथो त्रयो वै प्राणाः । प्राणानेवास्मिन्दधाति । [10]मखस्य शिरोऽसि संज्योतिषा ज्योतिरङ्क्तामित्याह । ज्योतिरेवास्मा उपरिष्टाद्दधाति । सुवर्गस्य लोकस्यानु-

---

वृजिनं कुटिलं कर्म । अनृतं असत्यं श्रेषरूपत्वात् तत् दुश्चरितं, तद्विपरीतं सुचरितम् । ऋजुकर्ममिति । 'अनसन्तान्नपुंसकात्' इत्यच् समासान्तः ॥

[9]शिरो वा इति ॥ प्राथम्यादविचलितत्वात् ध्रुवाया आत्मत्वम् । गतमन्यत् ॥

ख्यात्यै ॥ ४८ ॥

परिदधाति प्राणं दधाति हिं यज्ञो धारयति न-म इत्याह पश्वाद्वीर्याणीत्याह भा इत्याह भजेत्या-ह ध्रुवैवास्मिन्दधाति त्रीणि च ॥ ७ ॥

[1]धिष्णिया वा एते न्युप्यन्ते । यद्ब्रह्मा । यद्धो-ता । यदध्वर्युः । यदग्नीत् । यद्यजमानः । तान् यदन्तरेयात् । यजमानस्य प्राणान्थ्संकर्षेत् । प्रमा-युकस्स्यात् । पुरोडाशमपगृह्य संचरत्यध्वर्युः ॥ ४९ ॥ यजमानायैव तल्लोकꣳ शिꣳषति । नास्य प्राणान्थ्संकर्षति । न प्रमायुको भवति । पुरस्ता-

[10]मखस्येति जुहा ध्रुवासमञ्जनम् ॥ अनुख्यातिः अनुक्रमेण प्रकाशः ॥

इति तृतीये तृतीये सप्तमोऽनुवाकः.

——o——

[1]धिष्णिया वा इति ॥ गतम् ॥ तानिति । तान् ब्रह्मादीन् अन्तरा यदियात् गच्छेत् । छान्दसं गतित्वम् । यजमानस्य प्राणान् संकर्षेत् संगृह्य गच्छेत् । 'प्राणा वा एते यद्धिष्णियाः' * इति । ततः प्रमायुको मरणशीलः स्यात् । अपगृह्येति । अपादाय

* सं. ६-३-१.

त्प्रत्यङ्ङासीनः । इडाया इडामादधाति । हस्त्यार्  होत्रे । पशवो वा इडा । पशवः पुरुषः । पशुष्वेव पशून्प्रतिष्ठापयति । इडायै वा एषा प्रजातिः ॥ ५० ॥ तां प्रजातिं यजमानोऽनु प्रजायते । द्विरङ्गुलावनक्ति पर्वणोः । द्विपाद्यजमानः प्रतिष्ठित्यै । सकृदुपस्तृणाति । द्विरादधाति । सकृदभिघारयति । चतुस्संपद्यते । चत्वारि वै पशोः प्रतिष्ठानानि । यावानेव पशुः । तमुपह्वयते ॥ ५१ ॥ मुखमिव प्रत्युपह्वयेत । संमुखानेव पशूनुपह्वयते । पशवो वा इडा । तस्मात्साऽन्वारभ्या । अध्वर्युणा च यजमानेन च । उपहूतः पशुमानसानीत्याह । उप ह्येनौ ह्वयते होता । इडायै देवतानामुपह्वे । उपहूतः पशुमान्भवति । य एवं वेद ॥ ५२

लोकं शिंषति स्थानमवशेषयति । 'यजमानो वै पुरोडाशः'[1] इति तस्य स्थितत्वात् ततः प्राणसंकर्षणाभावात् प्रमायुको न भवति । अङ्गुलाविति । होतुः । चतुस्संपद्यत इति अवत्तम् । प्रतिष्ठानानि चरणानि । 'दैव्या अध्वर्यव उपहूताः'[2] इति होतुरभिज्ञाय 'उपहूतः पशुमानसानीति'[3] इत्यध्वर्युर्जपति । अतोऽध्वर्युयजमानौ द्वावपीति होतोपह्वयते । ततस्माहुपहूत इत्यात्मानमध्वर्युराह ॥

[1] ब्रा. ३-२-८. [2] ब्रा. ३-५-८. [3] सं. ९-६-२.

यां वै हस्त्यामिडामादधाति । वाचस्सा भागधेयम् । यामुपह्वयंते । प्राणानाꣳ सा । वाचं चैव प्राणाꣳश्चावरुन्धे । [2]अथ वा एतर्ह्युपंहूतायामिडायाम् । पुरोडाशस्यैव बर्‌हिषदो मीमाꣳसा । यजमानं देवा अब्रुवन् । हविर्नो निर्वपेति । नाहमभागो निर्वंप्स्यामीत्यंब्रवीत् ॥ ५३ ॥ न मयाऽभागयाऽनुवक्ष्यथेति वागंब्रवीत् । नाहमभागा पुरोऽनुवाक्या भविष्यामीति पुरोऽनुवाक्या । नाहमभागा याज्या भविष्यामीति याज्या । न मयाऽभागेन वषंट्करिष्यथेति वषट्कारः । यद्यजमानभागं निधाय पुरोडाशं बर्‌हिषदं करोति । तानेव तद्भागिनः करोति । चतुर्धा करोति । चतंस्रो दिशः । दिक्ष्वेव प्रतितिष्ठति । बर्‌हिषदं करोति ॥ ५४ ॥ यजमानो वै पुरोडाशः । प्रजा बर्‌हिः । यजमानमेव

---

[2] इडार्थं देवतानामुपहवे क्रियमाणे—मीमांसेति ॥ पुरोडाशस्य बर्हिषत्वं किमर्थं क्रियत इति मीमांसा क्रियते यज्ञविद्भिः । तत्र निर्णयार्थमर्थवादमाह—यजमानमित्यादि । अभागश्चेदहं न हविः निर्वप्स्यामीति यजमानोऽब्रवीत् । अभागया मया अनुवचनं न करिष्यथेति वागवोचत् । एवं पुरोऽनुवाक्यादिषु द्रष्ट-

प्रजासु प्रतिष्ठापयति । तस्मादस्थ्नाऽन्याः प्रजाः प्रतितिष्ठन्ति । मा̱ꣳसेना̱न्याः । अथो खल्वाहुः । दक्षिणा वा एता हविर्यज्ञस्यान्तर्वेद्यवरुध्यन्ते । यत्पुरोडाशं बर्हिषदं करोतीति । चतुर्धा करोति । चत्वारो होते हविर्यज्ञस्यर्त्विजः ॥ ५५ ॥ ब्रह्मा होताऽध्वर्युरग्नीत् । तमभिमृशेत् । इदं ब्रह्मणः । इदꣳ होतुः । इदमध्वर्योः । इदमग्नीध इति । यथैवादस्सौम्येऽध्वरे । आदेशमृत्विग्भ्यो दक्षिणा नीयन्ते । तादृगेव तत् । अग्नीधे प्रथमायादधाति ॥ ५६ ॥ अग्निमुखा ह्यृद्धिः । अग्निमुखामेवर्द्धिं यजमान ऋध्नोति । [3]सकृदुपस्तीर्य द्विरादधत् । उपस्तीर्य द्विरभिघारयति । षट्थ्संपद्यन्ते । षड्वा ऋ-

व्यम् । यदित्यादि । गतम् । तस्मादिति । खरमृदुसंयोगात् काश्चित्प्रजाः गवादयः अस्थ्ना प्रतितिष्ठन्ति, काश्चिन्मनुष्यादयः मांसेन । अथो खल्पित्यादि । गतम् । यथैवाद इत्यादि । सौम्ये अध्वरे ज्योतिष्टोमे ऋत्विग्भ्यो यथा दक्षिणाः आदेशं आदिश्य इदमस्मा इति नीयन्ते तत्तुल्यमेतत् चतुर्धाकृत्वाऽभिमर्शनम् । दिशेराभीक्ष्ण्ये णमुल् ॥

[3]सकृदिति ॥ ब्रह्मा नाम यज्ञस्य सविता अनुज्ञाता, तस्मात्तस्य तथा चर्या प्रसूत्यै भवति । अथ अन्ये कामं यथेष्टं

तर्वः । ऋतूनेव प्रीणाति । वेदेन ब्रह्मणे ब्रह्मभागं परिहरति । प्राजापत्यो वै वेदः । प्राजापत्यो ब्रह्मा ॥ ५७ ॥ सविता यज्ञस्य प्रसूत्यै । अथ काममन्येन । ततो होत्रे । मध्यं वा एतद्यज्ञस्य । यद्धोता । मध्यत एव यज्ञं प्रीणाति । अथाध्वर्यवे । प्रतिष्ठा वा एषा यज्ञस्य । यदध्वर्युः । तस्माद्धविर्यज्ञस्यैतामेवावृतमनु ॥ ५८ ॥ अन्या दक्षिणा नीयन्ते । यज्ञस्य प्रतिष्ठित्यै । अग्निमग्नीथ्सकृथ्सकृथ्संमृड्ढीत्याह । पराङिव ह्येतर्हि यज्ञः । 'इषिता दैव्या होतार इत्याह । इषितꣳ हि कर्म क्रियते । भद्रवाच्याय प्रेषितो मानुषस्सूक्तवाकाय सूक्ता ब्रूहीत्याह । आशिषमेवैतामाशास्ते । स्वगा दैव्या होतृभ्य इत्याह । यज्ञमेव तथ्स्वगा करोति । स्व-

---

अन्येन पृथक्पात्रेण भागं परिहरन्ति । आवृतमिति । यथोक्तमीमांसाक्रियामनुष्ठायैव अन्या दक्षिणा नीयन्ते अन्वाहार्यादयः । पराङिवेति । अस्मिन्काले समाप्तभूयिष्ठत्वात् पराङ्मुख इव यज्ञः, तस्मात् अग्निं परिधींश्च सकृत्संमृड्ढीति संप्रेष्यति ॥

'इषिता दैव्या इति सूक्तवाकाय संप्रैषः ॥ स्वगा दैव्या

स्तिर्मानुषेभ्य इत्याह । आशिषमेवैतामाशास्ते । शंयोर्ब्रूहीत्याह । शंयुमेव बार्हस्पत्यं भागधेयेन समर्धयति ॥ ५९ ॥

चरत्यध्वर्युः प्रजातिर्ह्वयते वेदान्ब्रवीद्बर्हिषदं करोत्यृत्विजो दधाति ब्रह्माऽनुकरोति चत्वारि च ॥८

[1]अथ स्रुचावनुष्टुग्भ्यां वाजवतीभ्यां व्यूहति । प्रतिष्ठा वा अनुष्टुक् । अन्नं वाजः प्रतिष्ठित्यै । अन्नाद्यस्यावरुध्यै । प्राचीं जुहूमूहति । जातानेव भ्रातृव्यान्प्रणुदते । प्रतीचीमुपभृतम् । जनिष्यमाणानेव प्रतिनुदते । स विषूच एवापोह्य सपत्नान् यजमानः । अस्मिन्लोके प्रतितिष्ठति ॥ ६० ॥ द्वाभ्याम् । द्विप्रतिष्ठो हि । [2]वसुभ्यस्त्वा रुद्रेभ्य-

इति शंयुवाकाय । स्वगाकरणं भागानां यथास्वकरणं आत्मगामीकरणम् ॥

इत्यष्टमोऽनुवाकः.

---

[1] अथ स्रुचाविसादि ॥ अनुष्टुग्भ्यां 'वाजस्य'* इत्यादिभ्याम् । विषूच इति नानादिग्देशपलायितान् ॥

[2] वसुभ्य इति जुह्वा परिध्यञ्जनम् ॥ त्रेधेति । अग्रमध्यमूलभागेन ॥

* सं. १-१-१३.

स्त्वाऽऽदित्येभ्यस्त्वेत्याह । यथायजुरेवैतत् । स्रुक्षु प्रस्तरमनक्ति । इमे वै लोकास्स्रुचः । यजमानः प्रस्तरः । यजमानमेव तेजसाऽनक्ति । त्रेधाऽनक्ति । त्रयं इमे लोकाः ॥ ६ १ ॥ एभ्य एवैनं लोकेभ्योऽनक्ति । अभिपूर्वमनक्ति । अभिपूर्वमेव यजमानं तेजसाऽनक्ति । [3]अक्तꣳ रिहाणा इत्याह । तेजो वा आज्यम् । यजमानः प्रस्तरः । यजमानमेव तेजसाऽनक्ति । वियन्तु वय इत्याह । वयं एवैनं कृत्वा । सुवर्गं लोकं गमयति ॥ ६ २ ॥ प्रजां योनिं मा निर्मृक्षमित्याह । प्रजायै गोपीथाय । [4]आप्यायन्तामाप ओषधय इत्याह । आप एवौषधीराप्याययति । मरुतां पृषतयस्स्थेत्याह । मरुतो वै वृष्ट्या ईशते । वृष्टिमेवावरुन्धे । दिवं गच्छ ततो नो वृष्टिमेरयेत्याह । वृष्टिर्वै द्यौः । वृष्टिमेवावरुन्धे ॥ ६ ३ ॥ यावद्वा अध्वर्युः प्रस्तरं प्रहरति । ता-

[3] अक्तं रिहाणा इति स्रुक्षु प्रस्तराञ्जनमन्त्रः ॥ वयः पक्षी ॥

[4] आप्यायन्तामित्याहवनीये प्रस्तरप्रहरणम् ॥ आपः इति विभक्तिव्यत्ययः । आयुष्पा इत्याहवनीयोपस्थानम् । आयुश्चक्षुश्चाविकलं आत्मनि स्थापयति ॥

वेदस्यायुर्मीयते । आयुष्पा अंग्नेऽस्यायुर्मे पाही-त्याह । आयुरेवात्मन्धत्ते । यावद्वा अंध्वर्युः प्रस्तरं प्रहरति । तावदस्य चक्षुर्मीयते । चक्षुष्पा अंग्नेऽसि चक्षुर्मे पाहीत्याह । चक्षुरेवात्मन्धत्ते । [5]ध्रुवाऽसी-त्याह प्रतिष्ठित्यै । [6]यं परिधिं पर्यधत्था इत्याह ॥ ६४ ॥ यथायजुरेवैतत् । अग्ने देव पणिभिर्वीयमाण इत्याह । अग्रयं एवैनं जुष्टं करोति । तं तं एतमनु जोषं भरामीत्याह । सजातानेवास्मा अनुकान्करोति । नेदेष त्वदपचेतयाता इत्याहानुख्यात्यै । [7]यज्ञस्य पाथ उप समितमित्याह । भूमानमेवोपैति । परिधीन्प्रहरति । यज्ञस्य समिष्ट्यै ॥ ६५ ॥ स्रुचौ संप्रस्रावयति । यदेव तत्र क्रूरम् ।

---

[5] ध्रुवाऽसीति भूम्यभिमर्शनम् ॥

[6] यं परिधिमिति मध्यमपरिधिप्रहरणम् ॥ अनुकान् अनुरक्तान् । अनुख्यातिः अन्वग्भावेन अवस्थानम् ॥

[7] यज्ञस्येतीतरावुपसमस्यति ॥ भूमानमिति बहुत्वमुपैति बहूनां प्रहरणात्, संप्रस्रावयति जुहूपभृतौ सह प्रकर्षेण स्रावयति जुह्वां उपभृतं स्रावयति । उपस्तिः गुणभूतः । व्याख्यातः * ॥

* ब्रा. ३-३-५.

तत्तेन शमयति । जुह्वामुपभृतम् । यजमानदेवत्या वै जुहूः । भ्रातृव्यदेवत्योपभृत् । यजमानायैव भ्रातृव्यमुपस्तिं करोति । [8]सङ्स्रावभागास्स्थेत्याह । वसवो वै रुद्रा आदित्यास्सङ्स्रावभागाः । तेषां तद्भागधेयम् ॥ ६६ ॥ तानेव तेन प्रीणाति । वैश्वदेव्यर्चा । एते हि विश्वे देवाः । त्रिष्टुग्भवति । इन्द्रियं वै त्रिष्टुक् । इन्द्रियमेव यजमाने दधाति । [9]अग्नेर्वामपन्नगृहस्य सदसि सादयामीत्याह । इयं वा अग्निरपन्नगृहः । अस्या एवैने सदने सादयति । सुम्नाय सुम्निनी सुम्ने मा धत्तमित्याह ॥ ६७॥ प्रजा वै पशवस्सुम्नम् । प्रजामेव पशूनात्मन्धत्ते । धुरि धुर्यौ पातमित्याह । जायापत्योर्गोपीथाय । [10]अग्नेऽदब्धायोऽशीततनो इत्याह । यथायजुरेवैतत् ।

---

[8]संस्रावभागा इति प्रहृतान् परिधीन् संस्रावेणाभिघारयति ॥ वैश्वदेव्यर्चेति । 'संस्रावभागास्स्थ'* इत्यनया । एते हीति । वस्वादयः ॥

[9]अग्नेर्वामिति धुरि स्फ्ये वा स्रुचौ सादयति ॥ धुर्यौ धुरो वोढारौ धुर्यौ यज्ञस्य नेतारौ ॥

[10]अग्नेऽदब्धायो इत्यन्वाहार्यपचने फलीकरणहोमः ॥ अतिरिक्तेन अतिरिक्तमाप्ना अभीष्टं फलं लभते ॥

---

* सं. १-१-१३.

पाहि माऽद्य दिवः पाहि प्रसित्यै पाहि दुरिष्ट्यै पाहि दुरद्मन्यै पाहि दुश्चरितादित्याह । आशिषमेवैतामाशास्ते । अविषं नः पितुं कृणु सुषदा योनिꣳ स्वाहेतीध्मसंवृश्चनान्यन्वाहार्यपचनेऽभ्याधायं फलीकरणहोमं जुहोति । अतिरिक्तानि वा इध्मसंवृश्चनानि ॥ ६८ ॥ अतिरिक्ताः फलीकरणाः। अतिरिक्तमाज्योच्छेषणम् । अतिरिक्त एवातिरिक्तं दधाति । अथो अतिरिक्तेनैवातिरिक्तमाप्त्वाऽवरुन्धे। [11]वेदिर्देवेभ्यो निलायत। तां वेदेनान्वविन्दन् । वेदेन वेदिं विविदुः पृथिवीम् । सा पप्रथे पृथिवी पार्थिवानि । गर्भं बिभर्ति भुवनेष्वन्तः । ततो यज्ञो जायते विश्वदानिरिति पुरस्तात्स्तम्बयजुषो वेदेन वेदिꣳ संमार्ष्ट्यनुवित्त्यै ॥ ६९ ॥ अथो यद्वेदश्च वेदिश्च भवतः । मिथुनत्वाय प्रजात्यै । प्रजापतेर्वा एतानि श्मश्रूणि । यद्वेदः । पत्निया उपस्थ

---

[11] अन्वविन्दन् अनुक्रमेणालभन्त ॥ वेदं दृष्ट्वा वेद्याः संमार्जनं तस्य अनुवित्त्यै क्रमेण लाभाय भवति । त्रिष्टुबेषा । मन्त्रार्थस्तु— वेदेन दर्भमयेन वेदिं लब्धवन्तो देवाः पृथिवीं विस्तीर्णाम् । अथ सा पृथिवी प्रथितवती पार्थिवानि च प्रथितानि ओषध्यादीनि ।

आस्यति । मिथुनमेव करोति । विन्दते प्रजाम् । वेदꣳ होताऽऽहवनीयांथ्स्तृणन्नेति । यज्ञमेव तथ्संतनोत्योत्तरस्मादर्धमासात् । तꣳ संततमुत्तरेऽर्धमास आलभते ॥ ७० ॥ तं कालेकाल आगते यजते । [12]ब्रह्मवादिनो वदन्ति । सत्वा अध्वर्युस्स्यात् । यो यतो यज्ञं प्रयुङ्क्ते । तदेनं प्रतिष्ठापयतीति । वाताद्वा अध्वर्युर्यज्ञं प्रयुङ्क्ते । देवा गातुविदो गातुं वित्वा गातुमितेत्याह । यत एव यज्ञं प्रयुङ्क्ते । तदेनं प्रतिष्ठापयति । प्रतितिष्ठति प्रजया पशुभिर्यजमानः ॥ ७१ ॥

---

सैव भुवनेषु अन्तर्गर्भं हविर्लक्षणं बिभर्ति । ततः हविर्लाभात् यज्ञो जायते । विश्वदानिः विश्वस्य श्रेयसो दाता । यद्वा—विश्वस्यानिष्टस्य खण्डयिता भक्षयिता । आहवनीयात् स्तृणन् गच्छति यावदुत्तरार्धमासं आलभते कार्त्स्न्येन परिगृह्णाति । ततः कालेकाले यागार्हे आगते तं यज्ञं यजते आराधयति ॥

[12]ब्रह्मवादिन इत्यादि ॥ यतः यज्ञं प्रयुङ्क्ते तत् तत्रैव यः प्रतिष्ठापयति स एवाध्वर्युः स्यात् भवितुमर्हतीति ब्रह्मवादिनो वदन्ति । कुतः तर्हि अध्वर्युः यज्ञं प्रयुङ्क्ते? इत्याह—वाताद्वा इति । वातः वायुः सर्वपरिस्पन्दाश्रयः क्रियाशक्तिरीश्वरस्य, ततः आदाय यज्ञं प्रयुङ्क्ते 'देवा गातुविदः'* इति समिष्टयजुर्होममन्त्रे

---

[1] सं. १-१-१३.

तिष्ठतीमे लोका गंमयति द्यौर्वृष्टिमेवावरुन्धे पर्यधत्था इत्याह समिंष्ट्यै भागधेयं धत्तमित्याह वा ईध्मसंवृश्चनान्यनुवित्त्यै लभते यजंमानः ॥९॥

[1]यो वा अयंथादेवतं यज्ञमुपचरंति । आ देवताभ्यो वृश्च्यते । पापीयान्भवति । यो यंथादेवतम् । न देवताभ्य आवृंश्च्यते । वसीयान्भवति । वारुणो वै पाशः । इमं विष्यामि वरुणस्य पाशमित्याह । वरुणपाशादेवैनां मुञ्चति । सवितृप्रसूतो यथादेवतम् ॥ ७२ ॥ न देवताभ्य आवृंश्च्यते । वसीया-

'वाति भाः'[2] इति वचनात् । यतः प्रयुज्यते तत्रैव यज्ञं प्रति ष्ठापयति । ततः प्रजया पशुभिश्च यजमानः प्रतिष्ठितो भवति ॥

इति नवमोऽनुवाकः.

---

[1]यो वा इत्यादि ॥ यो यस्य देवता तद्यथादेवतं, स्वया देवतया यज्ञं यो नोपचराति स देवताभ्य आवृश्च्यते पापतरश्च भवति । विपर्यये विपर्ययः । वसीयान वसुमत्तरः । 'विन्मतोर्लुक्' 'टेः' इति टिलोपः । इदानीं तां देवतां दर्शयति—वारुणो वा इति । 'इमं विष्यामि'[1] इति पत्न्या योक्त्रपाशविमोचनं

[1] सं. १-१-११.　　[2] सं. १-१-१०.

न्भवति । धातुश्च योनौ सुकृतस्यं लोक इत्याह । अग्निर्वै धाता । पुण्यं कर्म सुकृतस्यं लोकः । अग्निरेवैनां धाता । पुण्ये कर्मणि सुकृतस्यं लोके दधाति । स्योनं मे सह पत्या करोमीत्याह । आत्मनश्च यजमानस्य चानार्त्यै संत्वाय । [2]समायुषा संप्रजयेत्याह ॥ ७३ ॥ आशिषमेवैतामाशास्ते पूर्णपात्रे । अन्ततोऽनुष्टुभा । चतुष्पद्वा एतच्छन्दः प्रतिष्ठितं पत्नियै पूर्णपात्रे भवति । अस्मिन्लोके प्रतितिष्ठानीति । अस्मिन्नेव लोके प्रतितिष्ठति ।

---

सवित्राऽनुज्ञात एव यथादैवतमुपचरति ततः एनां पत्नीं वरुणपाशात् मुञ्चति । अनार्त्यै अखण्डनाय । द्यतेः 'अत्र उपसर्गात्तः' इति तत्त्वम् । सन्त्वाय नित्यं सङ्गत्वाय 'सह'[1] इति मन्त्रपदात् ससाधनक्रियावदुपसर्गात् भावप्रत्ययः ॥

[2]समायुषेति पूर्णपात्रानयने पत्न्याः जपः ॥ पूर्णपात्रविषयां एतामाशिषमाशास्ते । अनुष्टुभेति । 'समायुषा'[1] इत्यनया । पत्न्याः पूर्णपात्रे इदं चतुष्पत् अनुष्टुप् छन्दः प्रतिष्ठितमवस्थितं भवति यतः, तस्याभिप्रायं ब्रूमः—अस्मिन् लोके प्रतिष्ठितो भूयासं इत्यनेनाभिप्रायेण तत्तथा क्रियते, तस्मात् पत्नी अस्मिन् लोके प्रतितिष्ठति अनेन कर्मणा । अथो अपि च सर्वं वाङ्मयं अनुष्टुबेव मुख्यत्वात् । किञ्च—एतस्मादेव कारणात् वागेव

---

[1] सं. १-१-१०.

अथो वाग्वा अनुष्टुक् । वाङ्मिथुनम् । आपो रेतः प्रजननम् । एतस्माद्वै मिथुनाद्विद्योतमानस्स्तनयन्वर्षति । रेतस्सिञ्चन् ॥ ७४ ॥ प्रजाः प्रजनयन् । [3]यद्वै यज्ञस्य ब्रह्मणा युज्यते । ब्रह्मणा वै तस्य विमोकः । अद्भिश्शान्तिः । विमुक्तं वा एतर्हि योक्त्रं ब्रह्मणा । आदायैनत्पत्नी सहाप उपगृह्णीते शान्त्यै । अञ्जलौ पूर्णपात्रमानयति । रेत एवास्यां प्रजां दधाति । प्रजया हि मनुष्यः पूर्णः ।

---

आपो रेत इत्येतत् मिथुनं प्रजननं प्रजोत्पत्तिनिमित्तं भवति । अत एव कारणात् **एतस्मान्मिथुनात्** अद्भ्यो रेतसश्च हेतोः **विद्योतमानः** विद्युतं उत्पादयन् **स्तनयन्** शब्दायमानो हि **वर्षति,** तथा **रेतस्सिक्त्वा प्रजाः प्रजनयंश्च** शब्दायमानो भवति । तदिदं सर्वं पूर्णपात्रस्य अनुप्रतिष्ठितत्वात् भवति ॥

[3]**यद्वा** इत्यादि ॥ **ब्रह्मणा** मन्त्रेण यज्ञसंबन्धि **यद्युज्यते तस्य विमोकोपि ब्रह्मणैव** न्याय्यः । तत्राद्भिरेव **शान्तिः** सुखं भवति यागविमोकापचारक्षाळनात् । इदानीं च **योक्त्रं ब्रह्मणा विमुक्तं** तस्मादत्राप्यद्भिः भाव्यमित्याह—**आदायेति** । **एनत्** योक्त्रं अञ्जलावादाय तेन **सहाप उपगृह्णीते पत्नी,** तत् **शान्त्यै** भवति । उक्तं पूर्णपात्रानयनस्य प्रजाधारणं फलं, तत्र विशेषग्रहणे किं प्रमाणमित्याह—**प्रजयेति** । **प्रजयैव** मनुष्यस्य पूरणं भवति न क्षेत्रा-

मुखं विमृष्टे । अवभृथस्यैव रूपं कृत्वोत्तिष्ठति ॥

सवितृप्रसूतो यथादेवतं प्रजयेत्याह
सिञ्चन्मृष्ट एकं च ॥ १० ॥

[1]परिवेषो वा एष वनस्पतीनाम् । यदुपवेषः । य एवं वेद । विन्दते परिवेष्टारम् । तमुत्करे । [2]यं देवा मनुष्येषु । उपवेषमधारयन् । ये अस्मदप-चेतसः। तानस्मभ्यमिहाकुरु । उपवेषोपविड्ढि नः॥ ७६ ॥ प्रजां पुष्टिमथो धनम् । द्विपदो नश्चतुष्पदः।

---

दिना तस्मादेवमुक्तमिति । अवभृथस्थानीयं मुखविमार्जनं कृत्वा उत्तिष्ठति पत्नी ॥

इति तृतीये तृतीये दशमोऽनुवाकः.

---

[1]परिवेषो वा इति ॥ परिवेषः परितो व्याप्य तर्पयिता । उपवेषः शाखामूलजन्मा काष्ठविशेषः । एवं वेदिता तर्पयितारं लभते । तं उत्करे 'पुरस्तात् प्रत्यञ्चं उपगूहति' इति संबध्यते ॥

[2]यं देवा इति द्वे अनुष्टुभौ ॥ मन्त्रार्थस्तु—यं त्वां देवा मनुष्येषु मनुष्यार्थं यज्ञसिद्धये उपवेषं अधारयन् उत्पादितवन्तः । स त्वं हे उपवेष! ये अस्मत्तः अपचेतसः अपगतचित्ताः अपरक्तमनसः तान् अस्मभ्यं इह कर्मणि अग्रतः आविष्कुरु विधेयान् कु-

ध्रुवाननपगान्कुर्विति पुरस्तात्प्रत्यञ्चमुपगूहति । तस्मात्पुरस्तात्प्रत्यञ्चश्शूद्रा अवस्यन्ति । स्थविमत उपगूहति । अप्रतिवादिन एवैनान्कुरुते । [3]धृष्टिर्वा उपवेषः । शुचर्तो वज्रो ब्रह्मणा सꣳशितः । योपवेषे शुक् । साऽमुमृच्छतु यं द्विष्म इति ॥७७॥ अथास्मै नाम गृह्य प्रहरति । निरमुं नुद ओकसः । सपत्नो यः पृतन्यति । निर्बाध्येन हविषा । इन्द्र

रु वा । किञ्च—नः अस्माकं प्रजादिकं उपविड्ढि समीपे प्रापय । विषेः जौहोत्यादिकस्य छान्दसश्शपो लुक् । किञ्च—अस्मदीयान् द्विपदश्चतुष्पदश्च ध्रुवान् नित्यान् अनपगान् अस्मासु अनपरक्तचित्तांश्च कुरु । द्विपद इत्यत्र 'द्वित्रिभ्यां पाद्दन्' इति उत्तरपदान्तोदात्तत्वम् । स्वामिनः अग्रतः प्रतिमुखाः शूद्राः अवस्यन्ति अवतिष्ठन्ते चिकीर्षवः । स्थविमत इति । स्थूलात् प्रदेशादारभ्य । अप्रतिवादिनः अस्याग्रे प्रतिवदितुमसमर्थान् शूद्रान्करोति ॥

[3]धृष्टिर्वा इति ॥ अयमुपवेषः धृष्टिः धर्षणशीलः शुचा तापेन ऋतः प्राप्तः वज्रः वज्रस्थानीयः ब्रह्मणा मन्त्रेण संशितः तीक्ष्णीकृतः । तस्मादभिचरिता चेत् या उपवेषे शुक् दीप्तिः सा अमुं एतन्नामानं ऋच्छतु गच्छतु यं द्विष्मः इति अनेन मन्त्रेण उपगूहनं कृत्वा 'निरमुं नुदः' इत्यग्नौ प्रहरत्युपवेषम् । तिस्रोऽप्यनुष्टुभ एताः । हे उपवेष! अमुं एतन्नामानं अस्मच्छत्रुं ओकसः गृहात् निर्नुदः निष्कृष्य नुदः । लेणमध्यमः । यः अ-

एणं परांशरीत्। इहि तिस्रः परावतः। इहि पञ्च-जनाꣳ अति। इहि तिस्रोऽति रोचना यावत्। सूर्यो असंद्दिवि। परमां त्वा परावतम्॥ ७८॥ इन्द्रो नयतु वृत्रहा। यतो न पुनरायसि। शश्वतीभ्यस्समाभ्य इति। [1]त्रिवृद्वा एष वज्रो ब्रह्मणा सꣳशितः। शुचैवैनं विद्ध्वा। एभ्यो लोकेभ्यो

---

स्माकं सपत्नः भूत्वा पृतन्यति संग्रामं करोति निर्बाध्येन उत्कृष्टव्येन उपवेषाख्येन हविषा, यद्वा—निर्बाधनसाधनेन। करणे कृत्यः। एणं एनम्। छान्दसं णत्वम्। अस्मद्द्वेष्यं इन्द्रः पराशरीत् अपुनरावृत्तं नाशयतु। इहि परावतः परतरान् देशान् लोकत्रयलक्षणान् देवपितृमनुष्यलक्षणगतीर्वा आति अतीत्य गच्छ, पञ्चजनांश्चातीहि। ब्राह्मणादयो निषादपञ्चमाः पञ्चजनाः, पञ्च भूतानीत्येके। तिस्रः रोचनाः दीप्तिमतः अग्निविद्युदादित्यान् अतीहि। यावत् सूर्यः दिवि असत् स्यात्। लेट्याडागमः। परमां त्वेति। परमां परावतं दूरम्। पूर्ववद्गतिः। इन्द्रः त्वा नयतु प्रापयतु वृत्रहा वृत्रं हतवान्, यतो नीतस्त्वं न पुनरायसि नागच्छसि। इ गतौ भौवादिकः। शश्वतीभ्यः अक्षीणाभ्यः समाभ्यः संवत्सरेभ्यः परं नयति॥

[1]त्रिवृद्वा इत्येतेषां ब्राह्मणम्॥ एषः उपवेषः त्रिवृत् नवधारो वज्रः ब्रह्मणा च संशितः, तस्मात् ईदृशेनानेन एनं द्वेष्यं शुचा विद्ध्वा तापयित्वा लोकेभ्यश्च निर्णुद्य ततः वज्रेण भ्र-

निर्णुद्य । वज्रेण ब्रह्मणा स्तृणुते । हृतोऽसाववधिष्मामुमित्याह स्तृत्यै । यं द्विष्यात्तं ध्यायेत् । शुचैवैनमर्पयति ॥ ७१ ॥

नो द्विष्म इति परावर्तमर्पयति ॥११॥

प्रत्युष्टं दिवश्शिल्पमयज्ञो घृतं च देवासुरास्स एतमिन्द्र आपो देवीरग्निना धिष्णिया अथ स्रुचौ यो वा अयथादेवतं परिवेषो वा एकादश ॥ ११ ॥

प्रत्युष्टमयज्ञ एषा हि विश्वेषां देवानामूर्जा पृथिवीमथो रक्षसां तां प्रजातिं द्वाभ्यां तं कालेकाले नवसप्ततिः ॥ ७१ ॥

प्रत्युष्टꣳ—शुचैवैनमर्पयति ॥

हरिः ओम् ॥ श्रीकृष्णार्पणमस्तु.

---

ह्मणा च स्तृणुते छादयति मारयति वा । हतोऽसाववधिष्मामुमिति च द्वौ मन्त्रौ । अत्रामुमित्यस्य नामग्रहणे यं द्विष्यात् तं ध्यायेत् एनं शुचा प्राप्तं करोति ॥

इति भट्टभास्करमिश्रविरचिते यजुर्वेदभाष्ये ज्ञानयज्ञाख्ये

तृतीयेऽष्टके तृतीयप्रश्नस्समाप्तः.

समाप्तं पौरोडाशिकम्.



श्री

# चतुर्थप्रपाठकप्रारम्भः.

हरिः ओम् ॥ ब्रह्मणे ब्राह्मणमालभते । क्षत्राय राजन्यम् । मरुद्भ्यो वैश्यम् । तपसे शूद्रम् । तमसे तस्करम् । नारकाय वीरहणम् । पाप्मने

---

## हरिः ओम्.

अस्ति पुरुषमेधः पञ्चाहः । तत्रैते पुरुषाः पशवः विधीयन्ते— **ब्रह्मणे ब्राह्मणमालभत** इत्यादि ॥ चतुर्थ्यन्ता देवताः । द्वितीयान्ताः पशवः । ते च पर्यग्निकृता उत्सृज्यन्ते । वैश्वदेवं काण्डम् । **ब्रह्मणे** ब्रह्मवर्चसाय **ब्राह्मणं** ब्राह्मजातिवर्णजं ब्रह्मवर्चस्वन्तम् । **क्षत्राय** क्षतात् त्रायकाय बलाय **राजन्यं** क्षत्रियजातिं महाबलम् । 'राज्ञोऽपत्ये जातिग्रहणम्' इति नापत्यमात्रं राजन्यः । **मरुतो** देवानां विशः तेभ्यः **वैश्यं** वैश्यजातीयम्, उभयोर्विट्त्वात् । तपः कृच्छ्रादिदुःखहेतुः तस्मै **शूद्रं** शूद्रजातीयं दुःखजीविनम् । **तमसे** ध्वान्ताय **तस्करं** चोरं, तमःप्रियत्वात्तस्करस्य । 'तद्बृहतोः करपत्योः चोरदेवतयोः सुट्तलोपश्च' इति सुट् । **नारकाय** नरकाय । स्वार्थे बिदादित्वादञ् । नरकाध्यक्षाय **वीरहणं** वैदिकाग्न्युत्सादिनं नरकगामिनां मुख्यम् । **पाप्मने क्लीबं** अपगतपुंस्त्वं पापिष्ठम् । **आक्रयाय** सर्वतः क्रेत्रे **अयोगूं** अशास्त्रीययोगात् स्वयमेव भर्तारं गृहीतवतीं स्त्रीम् । आकारस्य छान्दस ऊकारः । ऊङ् वा छान्दसः ।

क्लीवम् । आक्रयायायोगूम् । कामाय पुंꣳश्चलूम् । अतिक्रुष्टाय मागधम् ॥ १ ॥

गीतार्य सूतम् । नृत्तार्य शैलूषम् । धर्माय सभाचरम् । नर्माय रेभम् । नरिष्ठायै भी-

---

सा हि स्वयमेवात्मानं दत्वा भर्तारं क्रीणाति । वर्णसंकरजोऽयोगूरिति केचित् । कामाय इच्छायै पुंश्चलूं साधारणस्त्रीं, सा हि कामेन पुंसि चलति । पूर्ववच्छान्दस ऊकारः, ऊञ्चा । अतिक्रुष्टाय[1] अतिक्षिप्ताय पुंश्चल्या अपि निन्दिताय मागधं मगधदेशभवं निन्दिताचारं, ब्राह्मण्यां वैश्येन जातो धूर्तो मागध इत्येके ॥

इति तैत्तिरीयब्राह्मणभाष्ये तृतीये चतुर्थे
पुरुषमेधे प्रथमोऽनुवाकः.

———०———

गीताय गानाय सूतं क्षत्रियेण ब्राह्मण्यां जातं गानजीविनम् । नृत्ताय शैलूषं अन्यस्मै स्वभार्याप्रदायिनं नर्तनजीविकम् । धर्माय सभाचरं सभायां नित्यं चरन्तं धर्मप्रवक्तारम् । नर्माय रेभं मेधाविनं चाटूक्तिकुशलम् । नरिष्ठायै कातरायै नरतमा नरिष्ठा कातरतमा, नृषु वा तिष्ठतीति नरिष्ठा अस्वतन्त्रा कातरतमा तस्यै भीमलं भीरुं चपलाक्षमित्येके । हसाय 'स्वनहसोर्वा' इत्यप् । कारिं विकटाचारं नृत्यन्निव यो गच्छति हासयति च

---

[1] "क्रुष्टायै . . . सायै . . . तायै" इति पाठान्तरम् ॥

मलम् । हसाय कारिम् । आनन्दाय स्त्रीषखम् । प्रमुदे कुमारीपुत्रम् । मेधायै रथकारम् । धैर्याय तक्षाणम् ॥ २ ॥

श्रमाय कौलालम् । मायायै कार्मारम् । रूपाय मणिकारम् । शुभे वपम् । शरव्याया इषु-

जनान् । आनन्दाय प्रशस्तसुखाय स्त्रीषखं स्त्रीणां नित्यसुहृदं विटम् । छान्दसं पत्वम् । प्रमुदे प्रकृष्टाय हर्षाय कुमारीपुत्रं दुहितुः पुत्रं प्रहर्षहेतुम् । मेधायै ग्रन्थार्थधारणशक्तायै बुद्ध्यै रथकारं रथस्य कर्तारं निपुणमतिम् । धैर्याय तक्षाणं वर्धकिं दृढघातिनम् ॥

इति तृतीये चतुर्थे द्वितीयोऽनुवाकः.

---

श्रमाय शान्तये कौलालम् । स्वार्थिकोऽण् । यः श्रमेणैव जीवति । मायायै विचित्रकरणशक्त्यै कार्मारं लोहकारम् । रूपाय शुक्लादिकाय मणिकारं माणिक्यादिविविधमणिसंस्कारकर्तारम् । शुभे शोभायै वपं वप्तारम् । पचाद्यच् । अधोवप्तारमिति केचित् । शरव्यायै शरणशक्त्यै । व्याख्यातं पदम्*। इषुसमूहाय वा । इषुकारं इषूणां संस्कर्तारम् । हेत्यै हिंसायै । 'ऊतियूति' इति क्तिन उदात्तत्वम् । धन्वकारं धनुषां संस्कर्तारम् ।

---

*सं. ५-६-१९.

कारम् । हेत्यै धन्वकारम् । कर्मणे ज्याकारम् । दिष्टाय रज्जुसर्गम् । मृत्यवे मृगयुम् । अन्तकाय श्वनितम् ॥ ३ ॥

सन्धये जारम् । गेहायोपपतिम् । निर्ऋत्यै परिवित्तम् । आर्त्यै परिविविदानम् । अराध्यै दिधिषूपतिम् । पवित्राय भिषजम् । प्रज्ञानाय

कर्मणे ज्याकारम् । ज्यां संस्कर्तारं कारूणां कुशलम् । दिष्टाय दैवाय भविष्यतायै रज्जुसर्गं उद्बन्धकं, स ह्यात्मविनिपाताय रज्जुं सृजति । कर्मण्यणि छान्दसं कुत्वम् । मृत्यवे मरणाय मृगयुं मृगाणां हन्तारम् । अन्तकाय प्राणापहारिणे श्वनितं श्वक्रीडाजीविनं श्वभिः नीतः प्राप्तः । छान्दसं ह्रस्वत्वम् । 'परादिश्छन्दसि' इत्युत्तरपदान्तोदात्तत्वम् ॥

इति तृतीये चतुर्थे तृतीयोऽनुवाकः.

---

सन्धये संघटनायै जारं पारदारिकं, स हि संघटयितारमपेक्षते । गेहाय वेश्मने उपपतिं प्रज्ञातजारम् । स हि तद्भर्तुर्गृहे तेनानुज्ञात एव तां भुङ्क्ते । निर्ऋत्यै अलक्ष्म्यै परिवित्तं यस्मात्पूर्वं कनीयान् ऊढभार्यः, स हि निर्ऋतिगृहीतत्वात् भार्यां न विन्दते । 'वित्तेर्विन्नश्च वित्तश्च' इति नत्वाभावः । 'संज्ञायामनाचितादीनाम्' इत्युत्तरपदान्तोदात्तत्वम् । आर्त्यै दुःखाय

नक्षत्रद॒र्॒शम् । निष्कृ॑त्यै पेशस्का॒रीम् । बलायो-
प॒दाम् । वर्णा॑यानू॒रु॒धम् ॥ ४ ॥

न॒दीभ्य॑ः पौञ्जि॒ष्टम् । ऋ॒क्षीका॑भ्यो॒ नैषा॑दम् ।
पु॒रु॒ष॒व्या॒घ्राय॑ दु॒र्मद॑म् । प्र॒यु॒द्भ्य॒ उन्म॑त्तम् । ग॒न्ध॒-

परिविविदानं ज्येष्ठात्पूर्वमूढभार्यम् । ताच्छीलिकश्शानच्, व्य-
त्ययेन शपः श्लुः । स हि ज्येष्ठपरिवर्जनेन भार्यां विन्दमानः
निन्दिताचारः दुःखभाजनं भवति । अराद्ध्यै असिद्ध्यै दि-
धिषूपतिं ज्यायस्यामनूढायां कनीयसी पूर्वमूह्यते सा दिधिषूः तस्याः
पतिं, तस्यामनूढायां तस्य हि तया न कदाचिदप्यभ्युदयराद्धिः।
पवित्राय शोधनसमर्थाय भिषजं वैद्यं, स हि शोधयति व्या-
धीन् । प्रज्ञानाय प्रकृष्टाय ज्ञानाय नक्षत्रदर्शं सांवत्सरं, स हि
ग्रहगत्यादिकं गोळनिर्माणादि च प्रज्ञानेन पश्यति । निष्कृत्यै
निष्कृतिकरणशक्त्यै पेशस्कारीं सुवर्णकारस्त्रियम् । सा हि पेशसां
रूपाणां विचित्राणां निर्मातुः भार्या । बलाय उपदां, अन्न-
मात्रप्रदानेन या कन्या गृह्यते, सा हि बलेनाभिभूयते । घुरु-
घुरायमाणकण्ठेत्येके । वर्णाय शुक्लादिगुणाय अनूरुधं परानु-
रोधेन निष्प्रयोजनं यः प्रवर्तते स हि गुणवन्नित्यपराधीनो भ-
वति । क्वचिच्छान्दसमुपसर्गदीर्घत्वम् ॥

इति तृतीये चतुर्थे चतुर्थोऽनुवाकः.

---

नदीभ्यः पौञ्जिष्टं कैवर्तम्, यो नदीर्न मुञ्चति । ऋक्षीका-
भ्यः शून्यस्थलीभ्यः । छान्दसं दीर्घत्वम् । नैषादम् । स्वा-

र्वाप्सराभ्यो व्रात्यम् । सर्पदेवजनेभ्योऽप्रतिपदम् । अवेभ्यः कितवम् । इर्यताया अकितवम् । पिशाचेभ्यो बिदलकारम् । यातुधानेभ्यः कण्टककारम् ॥ ५ ॥

उत्सादेभ्यः कुब्जम् । प्रमुदे वामनम् । द्वार्भ्य-

र्थिकोऽब्रू । स हि सर्वार्थशून्यः । पुरुषव्याघ्राय व्याघ्रवन्मूर्खाचारः पुरुषव्याघ्रः तस्मै दुर्मदं अस्थानमदम् । प्रयुद्भ्यः प्रकर्षेण योद्धृभ्यः उन्मत्तं उन्मादिनं, स हि सर्वं प्रबाधते । गन्धर्वाप्सराभ्यः, अप्सरसां अन्त्यलोपश्छान्दसः । व्रात्यं पतितसावित्रीकं त्रैवर्णिकेभ्यो निकृष्टम् । सर्पदेवजनेभ्यः सर्पेभ्यः, देवानां गुणभूतेभ्यो गन्धर्वेभ्यश्च अप्रतिपदं अप्रतिपत्तारं मूढम् । कर्तरि क्विप् । अवेभ्यः अवोभ्यः अन्नेभ्यः । अन्त्यलोपश्छान्दसः । कितवं द्यूतसक्तं अन्नार्थितया । इर्यतायै इरा अन्नं तत्र साधुः इर्यः तद्भावाय अकितवं कितवसदृशम्, स ह्यन्नसमृद्धो भूयासमिति कितववद्वर्तते । पिशाचेभ्यो बिदलकारं बिदलमयानां कर्तारम् । बिदलमूले पिशाचा इत्याहुः । पिशाचकल्पो वा बिदलकारः । यातुधानेभ्यो रक्षोभ्यः कण्टककारं सूच्यादिकारो शिल्पी यातुधानवत् क्षुद्रोपद्रवकारी ॥

इति तृतीये चतुर्थे पञ्चमोऽनुवाकः.

उत्सादेभ्यः शरीरक्लेशेभ्यः कुब्जं वक्रापराङ्गं, यस्य सर्वे

स्रामम् । स्वप्नायान्धम् । अधर्माय बधिरम् । संज्ञानाय स्मरकारीम् । प्रकामोद्यायोपसदम् । आशिक्षायै प्रश्निनम् । उपशिक्षाया अभिप्रश्निनम् । मर्यादायै प्रश्नविवाकम् ॥ ६ ॥

---

अवयवा अविधेयाः । प्रमुदे प्रकृष्टाय हर्षाय वामनं ह्रस्वाङ्गम्, स हि लघुकायत्वात् प्रहृष्टो भवति । द्वाभ्यः चक्षुरादिभ्यः स्रामं रोगिणम्, द्वाराणां शक्तिर्हन्यात् रोगी भवति । स्वप्नायान्धं हीनचाक्षुर्ज्ञानं, स्वप्ने हि सर्वे तादृशाः । अधर्माय बधिरं श्रोत्रज्ञानशून्यं, स ह्यधर्मबहुलः । संज्ञानाय सम्यग्बोधाय स्मरकारीं या स्त्री मन्त्रौषधादिभिः भर्तुस्संवननकारिणी कुशलबुद्धिः । प्रकामोद्याय निष्प्रयोजनं बहुप्रलापिने । 'वदस्सुपि क्यप्च' इति क्यप् । उपसदं असत्यपि प्रयोजने उपसदनशीलः उपसत्, स हि बहुप्रलापी पार्श्ववासरुचिर्भवति । 'सत्सूद्विष' इति क्विप् । आशिक्षायै अल्पशिक्षा आशिक्षा स्वय मभ्यूहः । 'शिक्ष विद्योपादाने' 'गुरोश्च हलः' इत्याकारः । तस्यै प्रश्निनं अभियोक्तारम् । उपशिक्षायै उपेत्य गुरून्या समीचीना शिक्षा तस्यै अभिप्रश्निनं उत्तरवादिनं पृष्टस्योपरि पुनः प्रश्नः अभिप्रश्नः । मर्यादायै शास्त्रव्यवस्थायै प्रश्नविवाकं प्राड्विवाकं निर्णेतारम् ॥

इति तृतीये चतुर्थे षष्ठोऽनुवाकः.

---

ऋत्यै स्तेनहृदयम् । वैरहत्याय पिशुनम् । विवित्यै क्षत्तारम् । औपद्रष्टाय संग्रहीतारम् । बलायानुचरम् । भूम्ने परिष्कन्दम् । प्रियाय प्रियवादिनम् । अरिष्ट्या अश्वसादम् । मेधाय वासःपल्पूलीम् । प्रकामाय रजयित्रीम् ॥ ७ ॥

भायै दार्वाहारम् । प्रभाया आग्नेन्धम् । नाके-

---

ऋत्यै ईत्यै ऋतीयतेः 'इन् सर्वधातुभ्यः' इतीन्प्रत्ययः । स्तेनहृदयं स्तेयप्रधानहृदयम् । वैरहत्याय वीरहत्यायुक्तो वीरहा तद्भावाय पिशुनं गोपनीयानां प्रकाशयितारम् । विवित्यै विवेकाय क्षत्तारं राजस्थानीयमन्त्रिमुख्यम् । औपद्रष्टाय उपद्रष्टा प्रत्यवेक्षिता तद्भावाय । अन्त्यलोपश्छान्दसः । उद्गात्रादिर्द्रष्टव्यः । सङ्ग्रहीतारं भाण्डागाराध्यक्षं करसङ्ग्रहकारिणं वा । बलाय अनुचरं सेवकम् । भूम्ने महत्त्वाय परिष्कन्दं, परिचारकम् । वीणावादिनमित्येके । प्रियाय प्रियवादिनम् । गतम् । अरिष्ट्यै अहिंसायै अश्वसादं अश्वारोहिणम् । मेधाय यज्ञाय शोभनाय वासःपल्पूलीं वाससः शोधयित्रीं रजकस्त्रियम् । प्रकामाय प्रकृष्टाय कामाय रजयित्रीं रञ्जयित्रीं वाससाम् । चित्रकारिणीमित्येके । छान्दसोऽनुनासिकलोपः ॥

इति तृतीये चतुर्थे सप्तमोऽनुवाकः.

---

भायै त्विषे दार्वाहारं इन्धनानामाहर्तारम् । प्रभायै प्रकृष्टत्विषे आग्नेन्धं, यो भूत्यर्थमग्निमिन्धे । कर्मण्यणन्तात् स्वार्थि-

स्य पृष्ठायाभिषेक्तारम् । ब्रध्नस्य विष्टपाय पात्रनिर्णेगम् । देवलोकाय पेशितारम् । मनुष्यलोकाय प्रकरितारम् । सर्वेभ्यो लोकेभ्य उपसेक्तारम् । अवर्त्यै वधायोपमन्थितारम् । सुवर्गाय लोकाय भागदुघम् । वर्षिष्ठाय नाकाय परिवेष्टारम् ॥८॥

कोऽणु । नाकस्य पृष्ठाय अविद्यमानदुःखस्य स्थानस्य यत्पृष्ठं प्रधानभूतं स्थानं तस्मै अभिषेक्तारं स्नापकम् । ब्रध्नस्य विष्टपाय आदित्यस्य लोकाय पात्रनिर्णेगं पात्राणां निर्णेक्तारम् । 'क्विन्प्रत्ययस्य कुः' इति कुत्वम्, करणे वा घञ् । देवलोकाय पेशितारं प्रशान्तस्य वैरस्य उत्थापयितारम् । पिश अवयवे । देवलोकेऽपि हि वैरं जनयति साधकानाम् । मनुष्यलोकाय प्रकरितारं स्निग्धानां वैरस्योत्पादनेन विश्लेषयितारं, स हि क्रूरस्वभावो भवति । सर्वेभ्यो लोकेभ्यः उपसेक्तारं वैरस्य शमयितारं, तस्य सर्वलोकापेक्षितत्वात् । अवर्त्यै वधाय कृच्छ्रापत्तिलक्षणवधाय उपमन्थितारं स्वयमुपेत्य वैरस्य जनयितारं, वैरस्यावर्तिजनकत्वात् । सुवर्गाय लोकाय भागदुघं, भागाहर्तारं कर्षकेभ्यः । 'दुहः कब्घश्च' इति कप् । वर्षिष्ठाय प्रवृद्धतमाय नाकाय सुखस्थानाय परिवेष्टारं भोजयितारम् । विषॢ व्याप्तौ ॥

इति तृतीये चतुर्थे अष्टमोऽनुवाकः.

अर्मेभ्यो ह॒स्ति॒पम् । ज॒वाया॑श्व॒पम् । पुष्ट्यै॑ गोपा॒लम् । तेज॑सेऽजपा॒लम् । वी॒र्या॑यावि॒पा॒लम् । इरा॑यै की॒नाशम् । की॒ला॒लाय॑ सुराका॒रम् । भ॒द्राय॑ गृह॒पम् । श्रेय॑से वि॒त्त॒धम् । अध्य॑क्षायानु॒क्ष॒त्ता॒रम् ॥ ९ ॥

म॒न्यवे॑ऽयस्ता॒पम् । क्रोधा॑य निस॒रम् । शोका-

अर्मेभ्यः गतिविशेषेभ्यः हस्तिपं गजारोहिणम् । जवाय वेगाय अश्वपं अश्वानां पातारम् । पुष्ट्यै गोपालं गवां पालयितारं, गावो हि पुष्टिहेतवः । तेजसे अजपालं अजानां पालयितारं, अजा हि तेजस्विनः हविष्वान् । वीर्याय अविपालं अवीनां पालयितारं वीर्यजत्वादवीनां 'वीर्याद्व्यसृज्यन्त'* इति । इरायै अन्नाय कीनाशं कर्षकं, सदा स्वीकारिणमित्यन्ये । कीलालाय पुराणाय वारिणे सुराकारं सुराया उत्पादयितारम् । भद्राय कल्याणाय गृहपं गृहाणां पालयितारं दौवारिकम् । श्रेयसे अभ्युदयाय वित्तधं राज्ञो धनस्य पालकम् । अध्यक्षाय प्रत्यक्षकरणाय अनुक्षत्तारं क्षत्तुरनन्तरं आयव्ययप्रत्यवेक्षिणं राज्ञः ॥

इति तृतीये चतुर्थे नवमोऽनुवाकः.

---

मन्यवे क्रोधजन्मने दीप्तये अयस्तापं अयस्तापयितारम् । क्रोधाय निसरं बद्धानां बहिर्निस्सारयितारम् । वधकारिणमेके ।

---

* सं. ७-१-१.

याभिसरम् । उत्कूलविकूलाभ्यां त्रिस्थिनम् । योगाय योक्तारम् । क्षेमाय विमोक्तारम् । वपुषे मानस्कृतम् । शीलायाञ्जनीकारम् । निर्ऋत्यै कोशकारीम् । यमायासूम् ॥ १० ॥

यम्यै यमसूम् । अथर्वभ्योऽवतोकाम् । संव-

शोकायाभिसरं रथपुरस्सरम् । उत्कूलविकूलाभ्यां कांक्षितादधिकलाभः उत्कूलः, कांक्षितांशो विकूलः, ताभ्यां त्रिस्थिनं त्रिषु स्थितशरीरवन्तं विकलशरीरतया रथमारुह्यैव यो गच्छति । योगाय अलब्धलाभाय योक्तारं रथस्य । क्षेमाय लब्धपालनाय विमोक्तारं रथस्यैव । वपुषे रूपकान्त्यै मानस्कृतं केशरचनाकारिणं; चर्मकारिणमेके । स्वार्थिकोऽण् । शीलाय स्व भावाय अञ्जनीकारं अक्ष्णोरञ्जयितारं, तेन हि अक्ष्णोस्स्वभावलाभः । ल्युटि छान्दस ईकारः । च्वा वा ईकारः । शलाका वा अञ्जनी । निरृत्यै पापदेवतायै कोशकारीं ताम्रलोहध्मात्रीं स्त्रियम् । यमाय प्राणहारिणे असूं सूतिरहितां स्त्रियम् । क्विबन्तेन बहुव्रीहौ 'नञ् सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् ॥

इति तृतीये चतुर्थे दशमोऽनुवाकः.

---

यम्यै यमस्य स्त्रियै यमसूं पुत्रयमळप्रसविनीम् । अथर्वभ्यः अभिचारप्रधानेभ्यः शाखाविशेषेभ्यः अवतोकां गर्भविस्रा-

थ्सरायं पर्यारिणीम् । परिवथ्सरायाविंजाताम् । इदावथ्सरायांपस्कर्द्वरीम् । इद्वथ्सरायातीत्वरीम् । वथ्सराय विजंर्जराम् । सर्वंथ्सराय पलिक्नीम् । वनाय वनपम् । अन्यतोऽरण्याय दावपम् ॥११॥

विणीं स्त्रियम् । संवत्सराय बार्हस्पत्ये युगे पञ्चवर्षे प्रथमादीनां संवत्सरादय आख्याः पर्यारिणीं प्रसवकालातिक्रमेण या प्रसूते । जननकालातिक्रमेण या गर्भं धत्ते इत्येके । स्त्रीपुंसौ पर्यायेण प्रतिवर्षं यस्याः प्रमीयेते सेत्यपरे । परिवत्सराय द्वितीयाय अविजातां अप्रसविनीं द्वितीयप्रसवरहिताम् । इदावत्सराय तृतीयाय अपस्कद्वरीं गर्भपरिणामात्प्रागेव ध्वस्तगर्भाम् । अपपूर्वात् स्कन्देरौणादिकः ष्वरच् । इद्वत्सराय चतुर्थाय अतीत्वरीं अतिशयेन प्रसवकालात्ययशीलाम् । 'इण्णशिजि' इति क्वरप् । वत्सराय पञ्चमाय विजर्जरां अप्रसूयैव जीर्णाम् । सर्वत्सराय, सर छद्मगतौ छान्दसः खच् , यस्सर्वं जगच्छादयति विधेयीकरोति तस्मै कालाय पलिक्नीं वृथा पलितां प्रथमवयस्येव पलिताङ्गीम् । 'छन्दसि क्नमेके' इति छन्दसि क्नम् । वनाय वनपं वनस्य पातारम् । अन्यतोऽरण्याय एकपार्श्वारण्याय पार्श्वान्तरजनपदाय देशाय दावपं अरण्याग्निपातारम् ॥

इति तृतीये चतुर्थे एकादशोऽनुवाकः.

---

सरोभ्यो धैवरम् । वेशन्ताभ्यो दाशम् । उपस्थावरीभ्यो बैन्दम् । नड्वलाभ्यश्शौष्कलम् । पार्याय कैवर्तम् । अवार्याय मार्गारम् । तीर्थेभ्य आन्दम् । विषमेभ्यो मैनालम् । स्वनेभ्यः पर्णकम् । गुहाभ्यः किरातम् । सानुभ्यो जम्भकम् । पर्वतेभ्यः किंपूरुषम् ॥ १२ ॥

---

सरोभ्यो धैवरं उभयतो जलं बध्वा तितउना मत्स्यग्राहिणम् । वेशन्ताभ्यः अत्यल्पाद्भ्यः दाशं बळिशेन मत्स्यग्राहिणम् । नावाऽन्तः प्रविश्य मत्स्यग्राहिणमेके । उपस्थावरीभ्यः तरुतीरादिपार्श्वोपस्थावरीभ्योऽद्भ्यः बैन्दं बिन्दं जालं तेन जीवतीति छान्दसोऽञ् । उडुबनिदले तरन् यो मत्स्यं गृह्णातीत्यन्ये । नड्वलाभ्यः नळसंयुतजलस्थिताभ्योऽद्भ्यः शौष्कलं बळिशजीवनं, महामत्स्यानुत्थाप्य ग्रहीतारमेके । पार्याय परतीरप्रभवाय जलाय कैवर्तं कूले मत्स्यानां पुञ्जीकृत्य हन्तारम् । अवार्याय अपरतीरप्रभवाय मार्गारं अन्तर्जले हस्ताभ्यां मत्स्यमार्गणशीलम् । तीर्थेभ्यः अवतारेभ्यः आन्दं तीर्थे सामिषयन्त्रबन्धनेन मत्स्यग्राहिणम् । सेतुबन्धनेनेत्येके । अदि बन्धने, अन्देन जीवतीति आन्दः । विषमेभ्यः अतीर्थभूतेभ्यः जलपर्यन्तेभ्यः मैनालं जालजीविनम् । महानद्यां यन्त्रजीविनमेके । स्वनेभ्यः सशब्दाभ्योऽद्भ्यः पर्णकं सविषं पर्णं जलस्योपरि स्थापयित्वा मत्स्यग्राहीणम् । स हि हस्तताडनसमुद्भूतशब्दसन्त्रासोत्थितान् गृह्णाति । गुहाभ्यः गह्वरेभ्यः किरातं पर्वतगुहावा-

प्रतिश्रुत्काया ऋतुलम् । घोषाय भषम् । अन्ताय बहुवादिनम् । अनन्ताय मूकम् । महसे वीणावादम् । क्रोशाय तूणवध्मम् । आक्रन्दाय दुन्दुभ्याघातम् । अवरस्पराय शङ्खध्मम् । ऋभुभ्योऽजिनसन्धायम् । साध्येभ्यश्चर्मम्णम् ॥ १३ ॥

सिनम् । सानुभ्यः पर्वतशिखरेभ्यः जम्भकं सानुचरम् । गात्राणां जृम्भयितारमेके । पर्वतेभ्यः किंपूरुषं गायकं पर्वतवासिनम् ॥

इति तृतीये चतुर्थे द्वादशोऽनुवाकः.

---

प्रतिश्रुत्कायै प्रतिश्रुत्यै ऋतुलं देशराजवार्ताकथनशीलम् । प्रारब्धं सुष्ठु समापयितारमेके । घोषाय नादाय भषं अनिबद्धप्रलापिनं वृथा घोषसारम् । अन्ताय अन्तवते शब्दाय बहुवादिनं अतिदुर्भाषणकुशलं झडिति वक्तव्यावक्तव्यानाम् । अनन्ताय अनिष्ठितशब्दाय मूकं अप्रतिवक्तारं वक्तव्यानाम् । महसे पूजिताय शब्दाय वीणावादं वीणावादनकुशलम् । क्रोशाय महाशब्दाय तूणवध्मं मुरवस्य ध्मातारम् ध्माशब्दस्य 'आतोऽनुपसर्गे कः' । वंशवादिनमेके । आक्रन्दाय समन्तात् घोषणयाय दुन्दुभ्याघातं पटहस्य वादयितारम् । अवरस्पराय अवरोपि परः प्रकृष्टो यस्मिन् शब्दे सति, छान्दसं सत्वम् । यद्वा—अवरानपि स्पृणोति प्रीणयतीति अवरस्परः शब्दः सर्वेषां हर्षहेतुः तस्मै शङ्खध्मं शङ्खस्य ध्मातारम् । ऋभुभ्यः देवविशेषेभ्यः कालसन्धान-

बीभ॒त्साये॑ पौल्क॒सम् । भूत्यै॑ जाग॒रणम् । अभू॑त्यै स्वप॒नम् । तु॒लायै॑ वा॒णि॒जम् । वर्णा॑य हिरण्यका॒रम् । विश्वे॑भ्यो दे॒वेभ्य॑स्सिध्म॒लम् । प॒श्चा॒द्दो॒षाय॑ ग्ला॒वम् । ऋत्यै॑ जनवा॒दिन॑म् । व्यृ॑द्ध्या अपग॒ल्भम् । स॒ꣳश॒राय॑ प्र॒च्छि॒दम् ॥ १४ ॥

हेतुभ्यः अजिनसन्धायं चर्मचीरसन्धानजीविनम् । साध्येभ्यः देवविशेषेभ्यः कालसाद्गुण्यहेतुभ्यः चर्मम्णं कषायं पाययित्वा चर्मणां मार्दवकारिणम् । म्ना अभ्यासे, पूर्ववत्कः ॥

इति तृतीये चतुर्थे त्रयोदशोऽनुवाकः.

---

बीभत्सायै पौल्कसं अतिनिकृष्टां जातिम् । भूत्यै अभिवृद्ध्यै जागरणं प्रबोधशीलं अवहितम् । अभूत्यै स्वपनं प्रमादभूयिष्ठम् । तुलायै परिच्छेदविशेषाय वाणिजं तुलासूत्रजीविनम् । वणिगेव वाणिजः स्वार्थिकोऽण् । वर्णाय हिरण्यकारम् । गतम् । विश्वेभ्यो देवेभ्यः सिध्मलं कुष्ठरोगिणम्, तत्कोपजन्यत्वात्तस्य । 'सिध्मादिभ्यश्च' इति लच् । पश्चाद्दोषाय कुष्ठव्यतिरिक्ताय देहदोषाय ग्लावं नित्यकृशवपुषं, तज्जन्यत्वात्कार्श्यस्य । ग्लायतेः क्विबन्तात् मत्वर्थीयो वकारः । ऋत्यै अरुणाय आर्तत्वाय जनवादिनं जनानां परिवदनशीलम् । व्यृद्ध्यै ऋद्ध्यभावाय अपगल्भं अपगतधार्ष्ट्यं लज्जामूकम् । संशराय संकीर्णत्वाय प्रध्वंसाय प्रच्छिदं प्रकर्षेण भेत्तारं शल्यानामुद्धर्तारम् ॥

इति तृतीये चतुर्थे चतुर्दशोऽनुवाकः.

---

हसा॑य पु॒ꣳश्च॒लूमाल॑भते । वी॒णा॒वा॒दं ग॒ण॑कं गी॒ताय॑ । याद॑से शाबु॒ल्याम् । न॒र्माय॑ भद्रव॒तीम् । तूणव॒ध्मं ग्रा॑म॒ण्यं॑ पाणिसं॒घा॒तं नृ॒त्ताय॑ । मोदा॑याऽनुक्रोश॑कम् । आ॒न॒न्दाय॑ तल॒वम् ॥ १५ ॥

अ॒क्ष॒रा॒जाय॑ कित॒वम् । कृ॒ताय॑ सभा॒विन॑म् ।

हसाय निन्दितहासाय पुंश्चलूं पुंश्चलीम् । व्याख्यातेयम्* । पुनरालभतिग्रहणं विस्मरणशीलानामनुग्रहार्थम् । वीणावादं वीणावादनशीलं गणकं श्रुतिस्वरमण्डलादिगणनविदं च गीताय । अत्रेयं प्रक्रिया—यत्र एकस्यै देवतायै एकः पशुरालभ्यते तत्र देवतां प्रथमं निर्दिश्य पशुं विदधाति । यत्र त्वेकस्यै देवतायै अनेकपश्वालम्भः तत्र सर्वान् पशून् स्वरूपेण दर्शयित्वा पश्चाद्देवतां विदधाति । यथा—'वीणावादं गणकं गीताय, तूणवध्मं ग्रामण्यं पाणिसंघातं नृत्ताय, प्राणमपानं व्यानमुदानं समानं तान्वायवे, अथैतानरूपेभ्यः' इति । यादसे ग्राहाय शाबुल्यां श्वित्रशबलशरीराम् । वर्णान्यत्वं छान्दसम् । भावप्रत्ययान्तान्मत्वर्थीयोऽकारः । श्वित्रिणी हि यादांसीव भीतिं जनयति । तादृशभर्तृमतीमेके । नर्माय प्रियवचनाय भद्रवतीं भद्रलक्षणयुक्तशरीराम् । मोदाय हर्षाय अनुक्रोशकं गणमध्ये जनानामाह्वातारं हृष्टान्तरात्मानम् । आनन्दाय तलवं काहळादिषूदनम् । मुखवाद्यकारिणमेके ॥

इति तृतीये चतुर्थे पञ्चदशोऽनुवाकः.

अक्षराजाय कितवं किं तवेति वर्तमानं धूर्तम् । कृताय युगाय

* ब्रा. ३-४-१.

त्रेताया आदिनवदर्शम् । द्वापराय बहिस्सदम् । कलये सभास्थाणुम् । दुष्कृताय चरकाचार्यम् । अध्वने ब्रह्मचारिणम् । पिशाचेभ्यस्सैलगम् । पिपासायै गोव्यच्छम् । निर्ऋत्यै गोघातम् । क्षुधे गोविकर्तम् । क्षुत्तृष्णाभ्यां तम् । यो गां विकृन्तन्तं माꣳसं भिक्षमाण उपतिष्ठते ॥ १६ ॥

---

**सभाविनं** सभावन्तं द्यूताय सभायामधिष्ठातारम् । 'बहुळं छन्दसि' इति विनिः । **त्रेतायै** युगाय **आदिनवदर्शं** मर्यादायां देवनस्य द्रष्टारं परीक्षकम् । आकारो मर्यादायां, दीव्यतेः ल्युटि विनिमयः, लघूपधगुणाभावश्च । **द्वापराय** युगाय **बहिस्सदं** बहिस्सदनशीलं स्वयमदीव्यन्तं द्यूतज्ञम् । **कलये** युगाय **सभास्थाणुं** अदेवनकालेऽपि सभां यो न मुञ्चति सभायां स्थाणुकल्पः दीव्य[ति]दर्शनकुतूहली स्वयमज्ञः । **दुष्कृताय** दुःखेन करणाय **चरकाचार्यं** वंशनर्तनस्य शिक्षयितारम् । **अध्वने ब्रह्मचारिणम्** । **पिशाचेभ्यः सैलगं** यः पथिकानां वस्त्राण्यपहृत्य शैलं गच्छति, व्यञ्जनविकारश्छान्दसः । **पिपासायै गोव्यच्छं** गवां विवासयितारं अपहर्तारम् । त्रासयितारमेके । इच्छे वर्णविकारः । धात्वन्तरं वा । **निर्ऋत्यै** पापदेवतायै **गोघातं** कण्टकयष्ट्यादिभिः गवां मारयितारम् । **क्षुधे गोविकर्तं** गवां विशसितारम् । कृती छेदने । **क्षुत्तृष्णाभ्यां** बुभुक्षापिपासाभ्यां **तम्** । कं? **यो गां विकृन्तन्तं** मांसं गवां विशसितारं क्षु-

भूम्यै पीठसर्पिणमालभते । अग्नयेऽंसलम् । वायवे चाण्डालम् । अन्तरिक्षाय वंशनर्तिनम् । दिवे खलतिम् । सूर्याय हर्यक्षम् । चन्द्रमसे मिर्मिरम् । नक्षत्रेभ्यः किलासम् । अह्ने शुक्लं पिङ्गलम् । रात्रियै कृष्णं पिङ्गाक्षम् ॥ १७ ॥

त्पीडितं मांसं भिक्षमाणः भिक्षणेन हेतुना । हेतौ शानच् । उपतिष्ठते उपसङ्गच्छति । सङ्गतिकरण आत्मनेपदम् ॥

इति तृतीये चतुर्थे षोडशोऽनुवाकः.

---

भूम्यै पीठसर्पिणं यो भग्नचरणः दारुमयपीठावलम्बी भूम्यां सर्पति खञ्जः । अग्नये अंसलं पीनांसम् । वायवे चाण्डालम् । स्वार्थिकोऽण् । अतिकोपनमेके । चडि कोपे । अन्तरिक्षाय वंशनर्तिनं वंशाग्रनृत्तजीविनम् । दिवे द्युलोकाय खलतिं केशशून्यशिरसम् । सूर्याय हर्यश्वाय हर्यक्षं हरिताक्षम् । चन्द्रमसे उद्भवाभिभविने मिर्मिरं पुनःपुनः मिषद्दृष्टिम् । मी श्लेषणे यङ्लुकि हलादिश्शेषाभावः, पचाद्यच्, कपिलकादित्वात् लत्वाभावः । नक्षत्रेभ्यः श्वेतबिन्दुतुल्येभ्यः किलासं कृष्णबिन्दुचितशरीरम् । अह्ने शुक्लं शुक्लदेहं पिङ्गलं पिङ्गळाक्षम् । रात्र्यै कृष्णं कृष्णदेहं पिङ्गाक्षम् ॥

इति तृतीये चतुर्थे सप्तदशोऽनुवाकः.

वाचे पुरुषमालभते । प्राणमपानं व्यानमुदानꣳ समानं तान् वायवे । सूर्याय चक्षुरालभते । मनश्चन्द्रमसे । दिग्भ्यश्श्रोत्रम् । प्रजापतये पुरुषम् ॥ १८ ॥

अथैतानरूपेभ्य आलभते । अतिह्रस्वमतिदीर्घम् । अतिकृशमत्यꣳसलम् । अतिशुक्लमतिकृष्णम् । अतिश्लक्ष्णमतिलोमशम् । अतिकिरिटम-

वाचे पुरुषं वाचः पूरकं शरीरम् । प्राणादीन् तस्मिन् शरीरे स्थितान् वायुवृत्तिभेदान् । सूर्याय चक्षुः तस्मिन्नेव शरीरे स्थितम् । चन्द्रमसे मनः । मनसः प्रथमनिर्देशः सर्वप्रवृत्तिहेतुत्वेन तस्य प्राधान्यात् । दिग्भ्यः श्रोत्रं तत्रस्थम् । प्रजापतये सर्वपुरुषसमष्टिभूताय पुरुषं शरीरानुप्रविष्टमात्मानम् ॥

इति तृतीये चतुर्थे अष्टादशोऽनुवाकः.

---

अथैतानित्यादि ॥ एतान् वक्ष्यमाणानतिह्रस्वादीन् पुरुषानरूपेभ्य आलभते । यथा कुत्सितः पुत्रोऽपुत्रः, एवं कुत्सितमात्रमत्रापि नञाऽभिधीयते । अतिह्रस्वादयो गताः । अतिकिरिटः अत्यल्पदन्तः । अतिदन्तुरः अत्युन्नतदन्तः । अतिमिर्मिरः अत्यर्थं निमिषन्निमिषद्दृष्टिः । अतिमेमिषः सदा विस्फारिताक्षः स्तब्धदृष्टिः । मिषेर्यङ्लुगन्तात् पचाद्यच् । आशायै बुद्ध्ये जामिं अन्येनोढां

तिदन्तुरम् । अतिमिर्मिरमतिमेमिषम् । आशायै जामिम् । प्रतीक्षायै कुमारीम् ॥ १९ ॥

ब्रह्मणे गीताय श्रमाय सन्धये नदीभ्यः उथ्सादेभ्य ऋत्यै भाया अर्मेभ्यो मन्यवे यम्यै दशदश सरोभ्यो द्वादश प्रतिश्रुत्कायै बीभथ्सायै दशदश हसाय सप्ताक्षराजाय त्रयोदश भूम्यै दश वाचे षडथ नवैकान्न विंशतिः ॥ १९ ॥

ब्रह्मणे यम्यै नवदश ॥ १९ ॥ ब्रह्मणे—कुमारीम् ॥

हरिः ओम् ॥ श्रीकृष्णार्पणमस्तु ॥

कृष्णयजुर्ब्राह्मणे तृतीयाष्टके

चतुर्थप्रपाठकस्समाप्तः.

---

अन्यस्मै दत्ता, विधवेत्यन्ये । या निवृत्ताधिकारा जामित्वं भजते ऊढदुहितेत्यपरे । प्रतीक्षायै प्रत्यागमनार्थिन्यै ऋद्ध्यै कुमारीं अनूढां कन्यां, सा हि भर्तारं प्रतीक्षते ॥

इति श्री भट्टभास्करमिश्रविरचिते तैत्तिरीयब्राह्मणभाष्ये

ज्ञानयज्ञाख्ये तृतीयेऽष्टके चतुर्थप्रपाठके

पुरुषमेधे एकोनविंशोऽनुवाकः.

समाप्तश्च प्रपाठकः.



# पञ्चमप्रपाठकप्रारम्भः.

---

हरिः ओम् ॥ सत्यं प्रपद्ये । ऋतं प्रपद्ये । अमृतं प्रपद्ये । प्रजापतेः प्रियां तनुवमनार्तां प्रपद्ये । इदमहं पञ्चदशेन वज्रेण । द्विषन्तं भ्रातृव्यमवक्रामामि । योऽस्मान्द्वेष्टि । यं च वयं द्विष्मः । भूर्भुवस्सुवः । हिम् ॥ १ ॥ सत्यं दश ॥ १ ॥

---

अथ इष्टिहौत्रमारभ्यते । प्राजापत्यं काण्डम् । तत्र पुरस्तात्सामिधेनीनां होता अन्तराऽऽहवनीयमुत्करं च प्रतीचीनं गच्छन् जपति— सत्यं प्रपद्य इत्यादि ॥ वाचिकं तथात्वं सत्यं, मानसं तथात्वं ऋतं, द्विप्रकारमेतत्वरहितं यज्ञं यथातथा वा इदं कर्म प्रपद्ये आरभे । अमृतं अमृतत्वहेतुः यथातथा प्रपद्ये । प्रजापतेः प्रियां अनार्तां आर्तिरहितां तनुवं शरीरभूतमिदं कर्म ईश्वरस्य क्रियाशक्तेः वातात्मिकायाः परिणामविशेषं प्रपद्ये । यस्मादेवं तस्मात्, इदमिति क्रियाविशेषणम् । पञ्चदशेन पञ्चदशस्तोमसदृशेन पञ्चदशधारेण वज्रेण द्विषन्तं भ्रातृव्यं शत्रुं अवक्रामामि अवष्टभ्य पीडयामि । ममायमारम्भः तस्यैवाक्रमणमिति । योऽस्मान् द्वेष्टि अस्माभिरविज्ञातः । यं च वयं द्विष्मः तेनाविज्ञाताः । तत एवं कृते भूर्भुवस्सुवः त्रिष्वपि लोकेषु हिं गन्ता भवामि, विश्वं व्याप्य तिष्ठामि, विश्वस्य प्रीणयिता भवामि, यागद्वारेण विश्वं धारयामि । हि गतौ, हिवि प्रीणने, अन्यतरस्येदं छान्दसं रूपम् ॥

इति तैत्तिरीयब्राह्मणे तृतीये पञ्चमे इष्टिहौत्रे प्रथमोऽनुवाकः.

---

[1]प्र वो वाजा अभिद्यवः। हविष्मन्तो घृताच्या। देवाञ्जिगाति सुम्नयुः। [2]अग्न आयाहि वीतये। गृ-

[1]'अन्तर्वेद्यन्यः पादो भवति बहिर्वेद्यन्यः'* इत्यनेन क्रमेण तिष्ठन् सामिधेनीरन्वाह—प्रवो वाजा इत्याद्याः सर्वा गायत्र्यः॥ हे ऋत्विग्यजमानाः! वः युष्माकं सामर्थ्येन वाजाः वाजनशीला मासा भवन्ति, अभिद्यवः अभिगतदीप्तयश्च, वृद्धिविशेषेण विलक्षणदीप्तयोऽर्धमासा भवन्ति। हविष्मन्तः हविर्भुजोऽग्न्यादयः देवा भवन्ति घृताच्या गवा सह। सा च घृताची भवति। अञ्चतेः क्विनि नकाराकारयोर्लुप्तयोः 'चौ' इति पूर्वपदस्य दीर्घत्वं, अन्तोदात्तत्वं च। यज्ञश्चायं देवान् जिगाति प्रकर्षेण गच्छति तेषां भोगहेतुर्भवति। गाङ् गतौ, व्यत्ययेन परस्मैपदम्, शपः श्लुः, अभ्यासस्य चेत्वम्। यद्वा—गा स्तुतौ, छन्दसि गतिकर्मा द्रष्टव्यः। सुम्नयुः सुखमात्मन इच्छन्। यजमानश्चायं देवान् प्रजिगातीत्येव। एवं 'इदमसीदमसि'† इति यज्ञफलभूतवाजादिसाधनतया तद्भावेन स्तुत्यस्य प्रियं धाम फलभोगस्थानमवरुन्धे॥

[2]अग्न आयाहीति॥ हे अग्ने! आयाहि आगच्छ वीतये तव पानाय, हव्यदातये हविषां च देवेभ्यो दानाय, गृणानः अहो प्रशस्तं कर्मेति शब्दयन्। कर्मणि वा छान्दसो यगभावः। स्तूयमानः। अथ आगत्य देवानां होता आह्वाता भूत्वा बर्हिषि यज्ञार्थं निषत्सि निषीद। छान्दसश्शपो लुक्। हव्यदातिशब्दोऽयं दासीभारादिर्द्रष्टव्यः॥

*सं. २-६-११. †सं. २-६-७.

णानो हव्यदातये । नि होता सत्सि बर्हिषि । [3]तं त्वा समिद्भिरङ्गिरः । घृतेन वर्धयामसि । बृहच्छोचा यविष्ठ्य । [4]स नः पृथु श्रवाय्यम् ॥२॥ अच्छा देव विवाससि । बृहदग्ने सुवीर्यम् । [5]ईडेन्यो नमस्यस्तिरः । तमांसि दर्शतः । समग्निरिध्यते वृषा । [6]वृषो अग्निस्समिध्यते । अश्वो न देववाहनः ।

[3]तं त्वेति ॥ व्याख्याता 'उद्धन्यमानमस्याः' इत्यत्र* ॥

[4]स न इति ॥ हे देव! अग्ने! स त्वं नः अस्माकं पृथु विस्तीर्णं विस्तीर्णो वा त्वं श्रवाय्यं श्रवणीयम् । औणादिक आय्यप्रत्ययः । बृहत् महत् सुवीर्यं शोभनवीर्यहेतुं अच्छ अस्माकमाभिमुख्येन विवाससि विभातं कुरु प्रकाशयेति यावत् । 'निपातस्य च' इति अच्छेत्यस्य दीर्घत्वम् । वसेर्णिचि 'छन्दस्युभयथा' इति शप आर्धधातुकत्वात् णिलोपः ॥

[5]ईडेन्य इति ॥ अयमग्निः ईडेन्यः स्तुत्यः नमस्यः 'नमो वरिवः' इति क्यच् । तिङन्तादच्नो यत् । तमांसि तिरः तिरस्कुर्वन् दर्शतः दर्शयिता सर्वस्य दर्शनीयशरीरो वा ईदृशः यः समिध्यते सम्यग्दीप्यते । वृषा वर्षिता कामानां प्रधानभूतो वा ॥

[6]वृषो अग्निरिति ॥ वृषः प्रधानभूतोऽयमग्निः समिध्यते देववाहनः देवार्थस्य हविषो वोढा, अश्वोन अश्व इव देववाहः देवानां वोढा अश्वेन तुल्यः तं खलु सर्वे हविष्मन्तः यज-

* आ॰ १-२-१.

तꣳ ह॒विष्मन्त॒ ईडते । [7]वृष॑णं त्वा व॒यं वृ॑षन् । वृषा॑ण॒स्समि॑धीमहि ॥ ३ ॥ अग्ने॒ दीद्य॑तं बृ॒हत् । [8]अ॒ग्निं दू॒तं वृ॑णीमहे । होता॑रं वि॒श्ववे॑दसम् । अ॒स्य य॒ज्ञस्य॑ सु॒क्रतु॑म् । [9]स॒मि॒द्ध्यमा॑नो अध्व॒रे । अ॒ग्निः पा॑व॒क ईड्य॑ः । शो॒चिष्के॑श॒स्तमी॑महे । [10]समि॑द्धो

मानाः ईडते स्तुवन्ति याचन्ते वा । तस्मात् अस्माभिरपि अयं समिध्यत इति ॥.

[7]वृषणं त्वेति ॥ हे वृषन्! सेक्तः! त्वां वृषणं सेक्तारं वयं वृषाणः त्वत्प्रसादेन सेक्तारः समिधीमहि सम्यग्दीपयामः हे अग्ने! दीद्यतं स्वभावत एव बृहत् भृशं दीप्यमानम् । दीदीतिः दीप्तिकर्मा छान्दसः ॥

[8]अग्निं दूतमित्यादि ॥ अग्निं दूतं हितकारिणं सर्वेषां होतारं आह्वातारं विश्ववेदसं विश्वस्य वेदितारं अस्य यज्ञस्य सम्बन्धिनं सुक्रतुं शोभनकर्माणं शोभनप्रज्ञानं वा । 'क्रत्वादयश्च' इत्युत्तरपदाद्युदात्तत्वम् ॥

[9]समिध्यमान इति ॥ योऽग्निः अध्वरे अस्मिन्कर्मणि समिध्यमानः पावकः शुद्धिहेतुः ईड्यः स्तुत्यः शोचींषि दीप्तयः केशस्थानीया यस्यासौ शोचिष्केशः तं अग्निं ईमहे प्राप्नुमः ॥

[10]समिद्ध इति ॥ हे अग्ने! आहुत आहुत्या आराधित! स त्वं देवान्याक्षि । यजेः लेटि शपो लुक् । हे स्वध्वर! सुष्ठु

अग्न आहुत । देवान् यक्षि स्वध्वर । त्वꣳ हि ह- व्यवाडसि । [11]आजुहोत दुवस्यत । अग्निं प्रयत्यध्वरे । वृणीध्वꣳ हव्यवाहनम् । [12]त्वं वरुण उत मित्रो अ- ग्ने । त्वां वर्धन्ति मतिभिर्वसिष्ठाः । त्वे वसु सुषण-

निर्वर्तितयाग! कस्मात्त्वमेवमुच्यस इति चेत् त्वं हि हव्यवाट् हव्यानां वोढा देवेष्टप्रापयिताऽसि । 'हि च' इति निघाताभावः ॥

[11]वसिष्ठराजन्यव्यतिरिक्तानां परिधानीया—आजुहोतेति ॥ इम मग्निं आजुहोत आहुतिभिः प्रीणयत । दुवस्यत परिचरत । प्रयति अविच्छेदेन प्रवर्तमाने अध्वरे । 'शतुरनुमः' इति नद्या उदात्तत्वम् । 'उदात्तस्वरितयोर्यणः' इति ततः परोकारः स्वर्यते । अध्वरस्य अविच्छेदप्रवृत्त्यर्थं हव्यवाहनं हविषां वोढारं एनं एवं वृणीध्वं हे ऋत्विग्यजमानाः! । वरणक्रमश्चानन्तरानुवाके वक्ष्यते। 'हव्येऽनन्तःपादम्' इति ञ्युट् ॥

[12]अथ वसिष्ठराजन्यानां परिधानीया—त्वं वरुण इति त्रि ष्टुप् ॥ हे अग्ने! त्वमेव वरुणः मित्रोऽपि त्वमेव, तत्कारित्वात्त्वां, वर्धन्ति वर्धयन्ति । 'छन्दस्युभयथा' इति शप आर्धधातुक त्वात् णिलोपः । 'अणावकर्मकात्' इति परस्मैपदम् । मतिभिः प्रज्ञाभिः वसिष्ठाः प्रशस्यतमाः त्वामेव स्तुत्या वर्धयन्ति । स्तुत्या हि स्तोतव्यो वर्धते, मतिमतां हि स्तुतिः समीचीना प्रवर्तते, अतः ते त्वां वर्धयन्ति । तस्मात् त्वामेव स्तुवतां अस्माकं त्वे त्वया हेतुना 'सुपां सुलुक्' इति शे आदेशः । वसु वसूनि

**नानि सन्तु । यूयं पात स्वस्तिभिस्सदा नः ॥४॥**
**अवार्यमिधीमह्यसि सप्त च ॥ २ ॥**

**[1]अग्ने महाँ असि ब्राह्मण भारत । असावसौ।**

धनानि । तेनैव जसो लुक् । **सुषणनानि** शोभनदानानि । सुषामादित्वात् षत्वम् । अस्माकं **सन्तु** । यद्वा—त्वे त्वयि । सप्तम्याश्शे आदेशः । सुष्ठु सननानि यानि हविर्लक्षणानि वसूनि अस्माकं धनानि त्वयि सन्तु । **यूयं पातेति** व्याख्यातम्* । पूजार्थमेकस्मिन्बहुवचनम् ॥

इति तैत्तिरीये ब्राह्मणे इष्टिहौत्रे द्वितीयोऽनुवाकः.

---

[1]सामिधेनीरनूच्य प्रवरमाह—**अग्ने महान् असीति** ॥ हे **अग्ने!** स्वभावत एव त्वं **महानसि** । रुत्वानुनासिकावुक्तौ । अयं च अपरो महत्त्वहेतुः अस्तीत्याह—हे **ब्राह्मण!** ब्राह्मणानां संबन्धिन्! तैराराधितत्वात्, जात्या वा ब्राह्मणोसि । किञ्च—हे **भारत!** देवभरणपराः यजमानाः भरताः तेषां संबन्धिन्! स्वयं च देवेभ्यो हव्यस्य भर्तः! । अथ यजमानविशेषसम्बन्धेनाग्नेः महानुभावत्वमाह—**असावसौ** पूर्वस्याविद्यमानत्वात् द्वयोरप्यामन्त्रिताद्युदात्तत्वम् । प्रवराम्नाताः यजमानगोत्रर्षयः सामान्येन निर्दिश्यन्ते । नेदं द्विर्वचनम्, तेन द्वितीयस्यानुदात्तत्वाभावः । यथाप्रवरं मन्त्रविशेषा निर्देष्टव्याः । यथा—भार्गव च्यावनाप्नवानौर्व जाम-

---

*ब्रा. २-८-९.

[2]देवेद्धो मन्विद्धः । ऋषिष्टुतो विप्रानुमदितः । कविशस्तो ब्रह्मसꣳशितो घृताहवनः । प्रणीर्यज्ञानाम् । रथीरध्वराणाम् । अतूर्तो होता । तूर्णिर् हव्यवाट् । आस्पात्रं जुहूर्देवानाम् ॥ ५ ॥ चमसो देवपानः । अराꣳ इवाग्ने नेमिर्देवाꣳस्त्वं परिभूरसि । आवह

---

दग्नश्च इति । भृगूणाममुतोऽर्वाञ्चः प्रतीयन्ते । तत्र भार्गवादिशब्दैः भृग्वादिसंबन्धितया तैराराधितोऽग्निरुच्यते ॥

[2]प्रवरमुक्त्वा निविदोऽन्वाह—देवेद्धः देवैः ऋत्विग्भिः अमरैर्वा इन्धितः । सर्वत्र 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । मन्विद्धः मनुनाऽपि देवार्थं प्रागेवेद्धः । ऋषिष्टुतः ऋषिभिः दर्शनवद्भिरपि भृग्वादिभिः स्तुतः । विप्रानुमदितः विप्रैः मेधावद्भिः श्रुतवद्भिः अनुमदितः अनुमोदितः । कविशस्तः कविषु क्रान्तदर्शनेषु शस्तः । ब्रह्मसंशितः ब्रह्मणा ऋगादिना मन्त्रेण निशितीकृतः घृताहवनः घृतनिर्वर्तिताहुतिः, प्रियतमत्वात्तस्याः । प्रणीः प्रकृष्टो नेता यज्ञानाम् । रथीः रंहयिता अध्वराणां देवेषु । 'इयाडियाजीकाराणामुपसंख्यानम्' इतीकारः । ताद्धर्म्यात्ताच्छब्द्यम् । अतूर्तः केनचिदपि हिंसितुमशक्यः होता देवानामाह्वाता । तुर्वी हिंसायाम् । तूर्णिः सर्वदुरितोत्तीर्णः दुरितेभ्यस्तारयिता वा । हव्यवाट् हव्यानां वोढा देवेषु । 'वहश्च' इति ण्विः । आस्पात्रं अयोमयं पात्रं अयसा निर्मिता जुहूरिव देवानां प्रियत्वात् । देवेषु च प्रक्षेपणसाधनत्वात्, यथा जुह्वाऽग्नौ प्रक्षिप्यते एवमग्निना देवेषु हविः प्रक्षिप्यते । अयसो लो-

देवान् यजमानाय । [3]अग्निमग्न आवह । सोममावह । अग्निमावह । प्रजापतिमावह । अग्नीषोमावावह । इन्द्राग्नी आवह । इन्द्रमावह । महेन्द्रमावह । देवाꣳ आज्यपाꣳ आवह । अग्निꣳ होत्रायावह । स्वं महिमानमावह । आ चाग्ने देवान् वह ।

---

यश्छान्दसः । अयस्मयादित्वाद्भत्वम्, वनस्पत्यादित्वात् आद्युदात्तत्वम् । चमसः पानपात्रं, चमु अदने । देवपानः देवाः पिबन्ति येन देवपानार्हः । अरानित्यादि । हे अग्ने! अरान् नेमिरिव देवान् परिभूः परितो भावयिता त्वमसि । 'अभितः परितः' इति द्वितीया। गतार्थत्वात्तसेरप्रयोगः । स त्वमावह सन्निधापय देवान् यजमानाय यजमानार्थं यागनिर्वृत्त्यर्थम् । यथोक्तगुणकस्त्वमेव तत्र प्रभुरिति ॥

[3]निविदोऽनूच्य देवता आवाहयति या यक्ष्यमाणा भवन्ति—अग्निमित्यादि ॥ आवाह्यत्वेनावोढृत्वेन चोभाभ्यां धर्माभ्यां एकोऽग्निः स्मर्यते । तत्र यष्टव्यात्मा आवाह्यः । भोक्तृत्वेन स्थितः आवोढा । तत्राग्निस्सोमश्चाज्यभागयोः । अथाग्निराग्नेयस्याष्टाकपालस्य । प्रजापतिरुपांशुयाजस्य । अग्नीषोमावग्नीषोमीयस्य एकादशकपालस्य । इन्द्राग्नी ऐन्द्राग्नस्य एकादशकपालस्य अमावास्यायां सन्नयतः । इन्द्रमहेन्द्रौ सान्नाय्यस्य । देवाः आज्यपाः प्रयाजादीनाम् । अथाग्निं स्विष्टकृतं होत्राय यज्ञाय यज्ञत्वाय आवह । होतव्याय वा हविषे, तस्य स्विष्टत्वाय । तदर्थं स्वं आत्मीयं महिमानं महत्त्वं आवह । हे अग्ने! इत्थं देवान्यष्टव्यानावह । तत आहूतान् सुयजा शोभनयजनेन

सुयजा च यज जातवेदः ॥ ६ ॥

देवानामिन्द्रमावह षट्च ॥३॥

[1]अग्निर् होता वेत्वग्निः । होत्रं वेत्तु प्रावित्रम् । स्मो वयम् । साधु ते यजमान देवता । घृतवती-

यागेन यज च हे जातवेदः! जातप्रमाज्ञान! जानासि हि तथा कर्तुम् । 'चवायोगे प्रथमा' इति प्रथमा तिङ्विभक्तिर्निहन्यते ॥

इति तैत्तिरीये ब्राह्मणे तृतीये पञ्चमे इष्टिहोत्रे तृतीयोऽनुवाकः.

---

[1]स्रुचावादापयति—अग्निर्होतेति ॥ अयमग्निः होता देवानां यष्टा वेतु पिबत्वाज्यम् । अग्निमयं होत्रं यज्ञं होतव्यं वा हविः वेत्तु यथाव ज्ज्ञानातु । प्रावित्रं प्रकर्षेण तर्पणं पाकं वा सर्वेषाम् । किञ्च—वयमपि मनु ष्यहोतारः स्मः यथा सन्तो वर्तामहे यथा सर्वदा यष्टारस्स्याम । दैवहो- तृमात्रेण यागानिर्वृत्तेरित्थमुक्तम् । हे यजमान! तव साधु साधयित्र्येव देवता अभिप्रेतस्य, साधु वाऽभिप्रेतं संपादयिष्यति संपादयतु वा । हे अध्वर्यो! त्वं तदर्थं घृतवतीं घृतपूर्णां स्रुचं जुहूं आस्यस्व आदत्स्व आक्षेप आदानम् । 'उपसर्गादस्यत्योह्योर्वा वचनम्' इत्यात्मनेपदम् । स्रुचमिति सामान्येन जुहूपभृतोरभिधानम् । 'यद्वे इव ब्रूयात्'* इति द्विवचनप्रतिषेधात् । यद्वा—जुह्वा एव ग्रहणं होमसाधनत्वात् तामे- वादापयति, तदर्थत्वादितरा तामनुगच्छत्येव । 'द्वे इव'* इति चार्थस्य

*सं. २-६-९.

मध्वर्यो स्रुचमास्यस्व । देवायुवं विश्ववाराम् । ईडामहै देवाꣳ ईडेन्यान् । नमस्याम नमस्यान् । यजाम यज्ञियान् ॥ ७॥

अग्निर् होता नव ॥ ४ ॥

[1]समिधो अग्न आज्यस्य वियन्तु । तनूनपादग्न आज्यस्य वेतु । इडो अग्न आज्यस्य वियन्तु । बर्हिरग्न आज्यस्य वेतु । स्वाहाऽग्निम् । स्वाहा

प्रतिषेधः, न शब्दमात्रस्य. तेन द्वयोरसामान्यग्रहणं युक्तमेव तस्याः भ्रातृव्यदेवत्यत्वात्, तस्माज्जुहूमेवादापयति । देवायुवं देवानामाहुतिभिः मिश्रयित्रीम् । यौतेः क्विप् । 'ऊश्च गमादीनाम्' इति ऊकारः । देवान्वा भोक्तृत्वेन कामयमानाम् । 'क्याच्छन्दसि' इत्युप्रत्यये तन्वादित्वात् उवङ् । विश्ववारां विश्वेऽपि वरितारो यस्याः सर्वसिद्धिहेतुत्वात् । विश्वकालवर्तिनीं वा । ईडामहा इत्यादि । ईडेन्याः स्तोतव्याः नमस्याः परिचरणार्हाः यज्ञिया यज्ञार्हाः । 'मनुष्या वा ईडेन्याः'* इति ब्राह्मणम् ॥

इति तैत्तिरीये ब्राह्मणे तृतीये पञ्चमे चतुर्थोऽनुवाकः.

---

[1]प्रयाजे स्वाहाऽग्निमित्यादि ॥ अग्नयादीन् जुषाणाः स्वाहाकरणदेवताः आज्यस्य वियन्तु । हे अग्ने! इति । होत्रदिति ।

* सं. २-५-९.

सोमम् । स्वाहाऽग्निम् । स्वाहा प्रजापतिम् । स्वाहाऽग्नीषोमौ । स्वाहेन्द्राग्नी । स्वाहेन्द्रम् । स्वाहा महेन्द्रम् । स्वाहा देवाꣳ आज्यपान् । स्वाहाऽग्निꣳ होत्राज्जुषाणाः । अग्न आज्यस्य वियन्तु ॥ ८ ॥

इन्द्राग्नी पञ्च च ॥ ५ ॥

[1]अग्निर्वृत्राणि जङ्घनत् । द्रविणस्युर्विपन्यया । समिद्धश्शुक्र आहुतः । जुषाणो अग्निराज्यस्य वेतु । त्वꣳ सोमासि सत्पतिः । त्वꣳ राजोत वृत्रहा । त्वं भद्रो असि क्रतुः । जुषाणस्सोम आज्य-

चतुर्थ्यर्थे पञ्चमी । सुष्ठु हूयते यथा या च स्वयमेवेत्थं कर्तव्यमित्याह, सा पञ्चमप्रयाजदेवता । तस्या अग्न्यादिभेदेन बहुत्वमुपचर्यते । गतमन्यत् ॥

इति तैत्तिरीये ब्राह्मणे तृतीये पञ्चमे पञ्चमोऽनुवाकः.

---

[1]आज्यभागयोः पुरोनुवाक्ये—अग्निर्वृत्राणीति गायत्र्यौ ॥ व्याख्याते अग्निकाण्डे* । जुषाण इत्यादिके यजुषी याज्ये । प्रियमाणोऽग्निराज्यस्य वेतु पिबतु । सुहितार्थयोगे चतुर्थी ज्ञापिता, चतुर्थ्यर्थे षष्ठी । एवं जुषाणः सोमः इत्यादि । गतम् । अत्रा-

*सं. ४-३-१३.

स्य ह॒विषो॑ वेतु । अ॒ग्निः प्र॒त्नेन॒ जन्म॑ना । शुम्भा॑-
न॒स्त॒नुव॒ꣳ॒ स्वाम् । क॒विर्वि॑प्रेण वावृधे । जु॒षा॒णो
अ॒ग्निराज्य॑स्य वेतु । सोम॑ गी॒र्भिष्ट्वा॑ व॒यम् । व॒र्ध-
या॑मो व॒चोवि॑दः । सु॒मृ॒डी॒को न॒ आवि॑श । जु॒षा॒-
णस्सोम॒ आज्य॑स्य ह॒विषो॑ वेतु ॥ ९ ॥

स्वा॑ꣳ षट्च॑ ॥ ६ ॥

अ॒ग्निर्मू॒र्धा दि॒वः क॒कुत् । पतिः॑ पृ॒थि॒व्या अ॒यम् ।
अ॒पाꣳ रेता॑ꣳसि जिन्वति । भुवो॑ य॒ज्ञस्य॒ रज॑सश्च

ग्नेराज्यादन्यद्धविरस्ति । सोमस्य नास्ति । अतस्सोमस्येदमाज्यं हविरिति मत्वाऽऽह । प्रत्नेन पुराणेन आत्मीयेन जन्मना हविः-प्रक्षेपजन्मना शोभया जननीयेन वा हविषा स्वां तनुवं शुम्भानः शोभयमानस्सन् कविः क्रान्तदर्शनः वावृधे वर्धताम् । छान्दसो लिट्, तुजादित्वादभ्यासस्य दीर्घः । गीर्भिः सूक्तिभिः वर्धयामः महायशसं कुर्मः । यस्मात् वयं वचोविदः वचसां वेदितारः वाग्योगविदः, अतः त्वं सुमृडीकः सुष्ठु सुखयिता भूत्वा नः अस्मान् आविश अनुप्रविश्य अनुगृहाण । याज्या गता जुषाण इति ॥

इति तैत्तिरीयब्राह्मणे तृतीये पञ्चमे षष्ठोऽनुवाकः.

[1] अथ हविषां याज्यानुवाक्याः—अग्निर्मूर्धेत्याद्याः ॥ तत्रैव व्या-

नेता । यत्रा नियुद्भिस्सचसे शिवाभिः । दिवि मूर्धानं दधिषे सुवर्षाम् । जिह्वामग्ने चकृषे हव्यवाहम् । प्रजापते न त्वदेतान्यन्यः । विश्वा जातानि परि ता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु ॥ १० ॥ वयꣳ स्याम पतयो रयीणाम् । स वेद पुत्रः पितरꣳ स मातरम् । स सूनुर्भुवथ्स भुवत्पुनर्मघः । स द्यामौर्णोदन्तरिक्षꣳ स सुवः । स विश्वा भुवो अभवथ्स आऽभवत् । अग्नीषोमा सवेदसा । सहूती वनतं गिरः । सं देवत्रा बभूवथुः । युवमेतानि दिवि रोचनानि । अग्निश्च सोम सक्रतू अधत्तम् ॥ ११ ॥ युवꣳ सिन्धूꣳ रभिशस्तेरवद्यात् । अग्नीषोमावमुञ्चतं गृभीतान् । इन्द्राग्नी रोचना दिवः । परि वाजेषु भूषथः । तद्वां चेति प्रवीर्यम् । श्नथद्वृत्रमुत सनोति वाजम् । इन्द्रा यो अग्नी सहुरी सपर्यात् । इरज्यन्ता वसव्यस्य भूरेः । सहस्तमा सहसा वाजयन्ता । एन्द्र सानसिꣳ रयिम् ॥

ख्याताः त्रयोदश* । अग्निं स्विष्टकृतमिति याज्या स्विष्टकृतः । जुष-

*सं. ४-४-४, १-८-१४, २-२-१२, २-३-१४, ४-२-११, ३-४-११, १-४-२०.२१, ४-३-१३.

१२॥ सजित्वानꣳ सदासहम्। वर्षिष्ठमूतये भर। प्रसंसाहिषे पुरुहूत शत्रून् । ज्येष्ठस्ते शुष्म इह रातिरस्तु। इन्द्रा भर दक्षिणेना वसूनि। पतिस्सिन्धूनामसि रेवतीनाम् । महाꣳ इन्द्रो य ओजसा । पर्जन्यो वृष्टिमाꣳ इव । स्तोमैर्वथ्सस्य वावृधे । महाꣳ इन्द्रो नृवदाचर्षणिप्राः ॥१३॥ उत द्विबर्हा अमिनस्सहोभिः । अस्मद्रियंग्वावृधे वीर्याय। उरुः पृथुस्सुकृतः कर्तृभिर्भूत् । पिप्रीहि देवाꣳ उशतो यविष्ठ । विद्वाꣳ ऋतूꣳर् ऋतुपते यजेह । ये दैव्या ऋत्विजस्तेभिरग्ने । त्वꣳ होतृणामस्यायजिष्ठः । [2]अग्निꣳ स्विष्टकृतम्। अयाडग्निरग्नेः प्रिया धामानि । अयाट्थ्सोमस्य प्रिया धामानि ॥१४॥

तां हविः इत्यन्तं यजुः । शिष्टा त्रिष्टुप् । अग्नेयदद्येति तत्रैव व्याख्याता* ॥

[2]यजुश्च व्याख्यायते ॥ यस्मात् अग्निं स्विष्टकृतं अग्निः दैव्यो होता अयाट् यजति । छान्दसोऽड् हलन्तलक्षणायां वृद्धौ इडभावे रूपम्। तत् अग्नेः आज्यभागाग्नेः प्रियाणि धामानि जन्मानि तेजांसि वा यजति, येषु स यष्टव्यो भवति। एवं अयाट्सोमस्येत्यादि द्रष्ट-

* सं. ४-३-१३.

अया॑ड्ग्नेः प्रि॒या धामा॑नि । अया॑ट्प्र॒जाप॑तेः प्रि॒या धामा॑नि । अया॑ड्ग्नीषोम॑योः प्रि॒या धामा॑नि । अ-या॑डिन्द्राग्नि॒योः प्रि॒या धामा॑नि । अया॒डिन्द्र॑स्य प्रि॒-या धामा॑नि । अया॑ण्मह॒न्द्रस्य॑ प्रि॒या धामा॑नि । अया॑ड्दे॒वाना॑माज्य॒पानां॑ प्रि॒या धामा॑नि । यक्ष॑द॒ग्नेर् होतुः॑ प्रि॒या धामा॑नि । यक्ष॒त्स्वं म॑हि॒मान॑म् । आ-य॑जता॒मेज्या॒ इषः॑ । कृ॒णोतु॒ सो अ॑ध्व॒रा जा॒तवे॑-दाः । जु॒षता॑ꣳ ह॒विः । अग्ने॒ यद॒द्य वि॒शो अ॑ध्वरस्य होतः । पाव॑क शोचे॒ वेष्ट्वꣳ हि यज्वा॑ । ऋ॒ता य॑जा-

व्यम् । यद्वा—ये यजामहे अग्निं स्विष्टकृतमिति यष्टव्यानामादेशः । लिङ्गं चेदं यष्टव्यानामादेशस्य यथा ये यजामहे अग्निं, येयजामहे सोममिति । तद्वा स्विष्टकृत् अग्निः अग्न्यादीनां प्रियाणि धामानि यजतीति योज्यम् । एवं अयं अग्नेः होतुः होतृसंपादिनः स्विष्टकृतश्च प्रियाणि धामानि यक्षत् यजति । लेटि 'सिब्बहुलं लेटि' इति सिप् । स्वं च महिमानं यक्षत् 'स्वं महिमानमावह'* इत्यावहनीयतया उक्तमिदानीं यजतु । अथ एज्याः अस्मदभिमुख्येन आगमयितव्याः अस्मभ्यं देयाः इषः अन्नानि आयजतां आगमयतु । यद्वा—अन्या अपि देवताः एज्याः एष्टव्याः इषः भागमिच्छतीः प्राप्ताः अयमग्निः आयजतां इषतर्पयतु । किञ्च—सः अग्निः स्विष्टकृत् अध्वरा अध्वरं

*ब्रा. ३-५-३.

सि महिना वि यद्भूः । हव्या वह यविष्ठ या ते अद्य ॥ १५ ॥

अस्त्वधत्त रयिं चर्षणिप्रास्सोमस्य
प्रिया धामानीषष्वद्गं ॥ ७ ॥

[1]उपहूत रथन्तर सह पृथिव्या । उप मा रथन्तर सह पृथिव्या ह्वयताम् । उपहूतं वामदेव्य सहान्तरिक्षेण । उप मा वामदेव्य सहान्तरिक्षेण ह्वयताम् । उपहूतं बृहथ्सह दिवा । उप मा बृहथ्सह दिवा ह्वयताम् । उपहूतास्सप्त होत्राः । उप मा सप्त होत्रां ह्वयन्ताम् । उपहूता धेनुस्सहर्षभा । उप मा धेनुस्सहर्षभा ह्वयताम् ॥१६॥ उपहूतो भक्षस्सखा । उप मा भक्षस्सखा ह्वय-

यज्ञं हिंसकरहितं कृणोतु करोतु । 'सुपां सुलुक्' इत्याकारः । यद्वा अध्वराः हिंसकरहिताः इषः करोतु । किञ्च—अयं स्विष्टकृत् अग्निः इदं हविः जुषतां सेवताम् । अग्ने यद्द्येति गतम् ॥

इति तैत्तिरीयब्राह्मणे तृतीये पञ्चमे सप्तमोऽनुवाकः.

---

[1]अथेडोपाह्वानं—उपहूतं रथन्तरमित्यादि ॥ रथन्तरादीनां साम्नां प्राथम्यादिना पृथिव्यादिभिः उपहूतत्वम् । यद्वा—रममाणानां

ताम् । उप॑हूतां(४) हो । इडोप॑हूता । उप॑हूतेडा । उपो॑ अ॒स्मा२ इडा॑ ह्वयताम् । इडोप॑हूता । उप॑हूतेडा । मा॒न॒वी घृ॒तप॑दी मैत्रावरु॒णी । ब्रह्म॑ दे॒वकृ॑त॒मुप॑हूतम् ॥ १७ ॥ दैव्या॑ अध्व॒र्यव॒ उप॑हूताः । उप॑हूता मनु॒ष्याः । य इ॒मं य॒ज्ञमवा॑न् । ये य॒ज्ञप॑तिं॒ वर्धा॑न् । उप॑हूते॒ द्यावा॑पृथि॒वी । पू॒र्व॒जे ऋ॒ताव॑री । दे॒वी दे॒वपु॑त्रे । उप॑हूतो॒ऽयं यज॑मानः । उत्त॑रस्यां देवय॒ज्याया॒मुप॑हूतः । भूय॑सि हवि॒ष्कर॑ण॒ उप॑हूतः । दि॒व्ये धाम॒न्नुप॑हूतः । इ॒दं मे॑ दे॒वा ह॒विर्जु॑षन्ता॒मिति॒ तस्मि॒न्नुप॑हूतः । विश्व॑मस्य प्रि॒यमुप॑हूतम् । विश्व॑स्य प्रि॒यस्योप॑हूत॒स्योप॑हूतः ॥ १८ ॥

स॒हर्ष॑भा ह्वयता॒मुप॑हूत२ हवि॒ष्कर॑ण॒ उप॑हूतश्च॒त्वारि॑ च ॥ ८ ॥

तरं तारकं रथंतरं अन्नं तत्पृथिव्या सह उपहूतमित्यर्थः । शिष्टं स्पष्टम्* ॥

इति तैत्तिरीये ब्राह्मणे तृतीये पञ्चमे अष्टमोऽनुवाकः.

---

*सं. २-६-७.

¹दे॒वं ब॒र्हिः । व॒सु॒वने॑ वसु॒धेय॑स्य वे॒तु । दे॒वो न॒राशꣳसः॑ । व॒सु॒वने॑ वसु॒धेय॑स्य वे॒तु । दे॒वो अ॒ग्निस्स्वि॑ष्ट॒कृत् । सु॒द्रवि॑णा म॒न्द्रः क॒विः । स॒त्यम॑न्मा॒ऽऽय॒जी होता॑ । होतु॑र् होतु॒राय॑जीयान् । अग्ने॒ यान्दे॒वानया॑ट् । याꣳ अपि॑प्रेः । ये ते॑ हो॒त्रे अम॑-

¹देवं बर्हिरिति ॥ सौत्रामण्यां ऋगरुणातः* । एवमुत्तरौ द्रष्टव्यौ। सुद्रविणाः शोभनधनः सकारान्तं शब्दान्तरमिदम् । मन्द्रः मन्दनशीलः मन्दयिता वा सर्वेषां, कविः क्रान्तदर्शनः, सत्यमन्मा सत्यमनसः, अमोघमतिः, आयजी मर्यादया यथाविधानं यष्टा, होतुर्होतुः सर्वस्मात् अन्यस्माद्धोतुः आयजीयान् अतिशयेनायष्टा, 'तुश्छन्दसि' इति आयष्टृशब्दात् ईयसुन् । हे अग्ने! ईदृशस्त्वं यान् देवान् अयाट् अयाक्षीः । पूर्वादिडभावो वृद्धिश्च । याꣳ नित्यस्य रुत्वानुनासिकावुक्तौ । यांश्च देवान् अपिप्रेः अप्रीणयः । प्रीणातेर्लेङि 'बहुलं छन्दसि' इति शपः श्लुः । ये च ते तव होत्रे होतृकृत्ये याजमाने अमत्सत अमाद्यन् तेषु देवेषु दिवि स्थितेषु तां त्वदीयां ससनुषीं हवींषि देवेभ्यो दत्तवतीम् । सनोतेः लिटः क्वसुरादेशः । होत्रां होतृक्रियां देवंगमां देवानेव गच्छन्तीम् । 'गमश्च' इति खच् । तां इमां एरय आभिमुख्येन प्रापय, इमं च यज्ञं एरय देवानां भोगाय कुरु । हे अग्ने! स्विष्टकृत् शोभनयजनकारी च होता अभूः अभवः

*ब्रा. २-६-१०.

थ्सत । ताꣳ सꣳसनुषीꣳ होत्रां देवंगमाम् । दिवि देवेषु यज्ञमेरयेमम् । स्विष्टकृच्चाग्ने होताऽभूः । वसुवने वसुधेयस्य नमोवाके वीहि ॥ ११ ॥

अपिप्रेः पञ्च च ॥ ९ ॥

[1]इदं द्यावापृथिवी भद्रमभूत् । आर्ध्म सूक्तवाकम् । उत नमोवाकम् । ऋध्यास्म सूक्तोच्यमग्ने । त्वꣳ

छान्दसो लुङ् । 'चवायोगे प्रथमा' इति निघाताभावे आट उदात्तत्वम् । इदं चास्तु—वसुवने वसुनो वननाय नमसः अन्नस्य वाकाय वक्तव्यत्वाय दानभोगादौ वश्यत्वाय हे अग्ने! इदमाज्यं वीहि पिब । वनोतेः क्विपि तादर्थ्ये चतुर्थी । दधातेः भावे अचो यत् । चतुर्थ्यर्थे 'बहुलं छन्दसि' इति षष्ठी । वचेर्घञ्, निमित्तात्सप्तमी ॥

इति तैत्तिरीये ब्राह्मणे तृतीये पञ्चमे नवमोऽनुवाकः .

———

[1]सूक्तवाकाय प्रेषितः ब्रवीति—इदमिति ॥ हे द्यावापृथिव्यौ! इदं प्रस्तुतं भद्रं कल्याणं अस्माकं अभूत् संपन्नम् । भद्रं विशेष्यते—आर्ध्म ऋद्धिं गताः सूक्तवाकं सूक्तान्युच्यन्ते सम्यागिष्टं सम्यग्दत्तं इदमस्य भद्रमस्त्विति यथातथा कर्मसमृद्धिं प्राप्ताः युवयोः प्रसादात् । किञ्च—नमोवाकं नमः अन्नं हविर्लक्षणं तदुच्यते - 'नमो देवेभ्यः' इति । देवानां तृप्तिजननतया यथा विस्रब्धं वक्तुं शक्यते तथा आर्ध्म,

[1]अस्मिन्ननुवाके अन्तिमं वाक्यम्.

सूक्तवागसि । उपश्रितो दिवःपृथिव्योः । ओमन्वती तेऽस्मिन् यज्ञे यजमान द्यावापृथिवी स्ताम्। शंगये जीरदानू । अत्रस्नू अप्रवेदे । उरुगव्यूती अ-

इदं हि दुष्प्रापमुभयम् । इत्थं क्रियाविशेषणतया नेयम् । यद्वा—ऋद्धिविशेषावेतौ, सामान्यर्द्धेः विशेषर्द्धिः कर्म, यथा—'यामेव मनुर् ऋद्धिमार्ध्नोत्'* इति । किञ्च—ऋद्ध्यास्म ऋद्धिं प्राप्ताः स्म । सूक्तोच्यं सूक्तान्युच्यन्ते यथा तथा सूक्तवचनविशिष्टां ऋद्धिं प्राप्ताः स्म नैतावदेव, हे अग्ने! त्वत्प्रसादादिदमस्तु । छान्दसः क्यप् । कस्मात्पुनः त्वं एवं प्रार्थ्यस इति चेत्—त्वं खलु सूक्तवाक् सूक्तानां वाचयिताऽसि। यद्वा—सूक्तं यथातथा त्वमेव ब्रवीषि त्वद्वाचि स्थितं यदि सूक्तं, नो चेदसूक्तं, तस्मात् त्वामेव प्रार्थयामहे । त्वं हि उपश्रितः उपेत्य सर्वैः आश्रितः दिवःपृथिव्योः द्यावापृथिव्योः वर्तमानैः, तस्मात् वयमपि त्वां प्रार्थयामह इति । दिवो दिवस्पात्वश्छान्दसः । यद्वा—यजमानविशेषणमिदं, हे यजमान! त्वं हि द्यावापृथिव्योरुपश्रितः वृष्ट्यादिना धारकत्वेन उपकारी स्थितः, अतः ते तव द्यावापृथिव्यौ अस्मिन् यज्ञे अनेन यज्ञेन हेतुना ओमन्वती अवनवत्यौ अन्नवत्यौ वा वृष्ट्यादिना प्रजारक्षणसमर्थे स्तां भवताम् । 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । अवतेरौणादिके मनिनि ऊठि गुणे 'अनो नुट्' इति नुट् । शंगये सुखग्रहे सुखानामेव निष्पत्तिस्थाने स्तामित्येव । सर्वत्र जीरदानू जीवयित्र्यौ सर्वस्य । जीवेरदानुक् । अत्रस्नू अत्रसनशीले, अत्रासयित्र्यौ वा अप्रवेदे अप्रवेदशीले प्रवेदनं प्रवदो

*सं. ६-६-६.

भयंकृतौ ॥२०॥ वृष्टिद्यावा रीत्यापा । शम्भुवौ मयोभुवौ । ऊर्जस्वती च पयस्वती च । सूपचरणा च स्वधिचरणा च । तयोराविदि । [2]अग्निरिदꣳ हविरजुषत । अवीवृधत महो ज्यायोऽकृत । सोम इदꣳ हविर-

निवेदनं, करिष्यमाणस्योपकारस्य अविकथनस्वभावे । यद्वा—याथात्म्येन प्रवेदयितुमशक्ये । उरुगव्यूती वितीर्णगोप्रचारे प्रभूततृणोदकत्वात् । 'गोर्यूतौ छन्दसि' इत्यवादेशः । अभयंकृतौ अभयस्य कर्त्र्यौ । क्विपि पूर्वपदस्य छान्दसो मुमागमः । वृष्टिद्यावा वृष्टेरभिगमयित्र्यौ । द्यु अभिगमने, विचि गुणे 'ओतो णित्' इति तपरकरणाद्वृद्धिः । यद्वा—वृष्टिनिमित्ता द्यौः दीप्तिः ययोः । द्यौरिति दीप्तिवचनः रीत्यापा रीत्या स्वभावेन विश्वमाप्तवत्यौ । यद्वा—रिङ् स्रवणे रीत्यापा स्रवदुदके । छान्दसं दीर्घत्वम् । 'सुपां सुलुक्' इत्याकारः। शंभुवौ रोगशमनादिलक्षणस्य सुखस्य भावयित्र्यौ । अन्तर्भावितण्यर्थाद्भवतेः क्विप् । ण्यन्तादेव वा क्विपि 'बहुलमन्यत्रापि' इति णिलुक् । मयोभुवौ प्रवृत्तिलक्षणस्य सुखस्य भावयित्र्यौ, ऊर्जस्वती च पयस्वती च एका द्यौः पयस्वती अन्नवती चैका पृथिवी सूपचरणा च एका द्यौः सुष्ठूपचरितव्या । 'छन्दसि गत्यर्थेभ्यः'' इति युच्, ल्युडन्तो वा बहुव्रीहिः । स्वधिचरणा च एका पृथिवी सुष्ठु अधिचरितव्येति । पूर्ववद्युच् । बहुव्रीहिर्वा । तयोः तादृश्योः द्यावापृथिव्योः आविदि आवेदने ताभ्यामन्यतमे वा ॥

[2]अग्निः आज्यभागदेवता इदं हविः आज्यभागलक्षणं अजुषत असेवत । अतिक्रान्तमप्याधारभूतं कर्म इदं हविरित्युच्यते । एवं

जुषत । अवीवृधत महो ज्यायोऽकृत । अग्निरिदꣳ हविरजुषत ॥ २१ ॥ अवीवृधत महो ज्यायोऽकृत। प्रजापतिरिदꣳ हविरजुषत । अवीवृधत महो ज्यायोऽकृत । अग्नीषोमाविदꣳ हविरजुषेताम् । अवीवृधेतां महो ज्यायोऽक्रातम् । इन्द्राग्नी इदꣳ हविरजुषेताम् । अवीवृधेतां महो ज्यायोऽक्राताम् । इन्द्र इदꣳ हविरजुषत । अवीवृधत महो ज्यायोऽकृत । महेन्द्र इदꣳ हविरजुषत ॥ २२ ॥ अवीवृधत महो ज्यायोऽकृत । देवा आज्यपा आज्यमजुषन्त । अवीवृधन्त महो ज्यायोऽक्रत । अग्निर् होत्रेणेदꣳ हविरजुषत । अवीवृधत महो

---

सोमादिषु द्रष्टव्यम् । अवीवृधत अवर्धयच्चात्मनो महः तेजः ज्यायोऽकृत प्रशस्यतरं च आत्मनो महः अकृत कृतवान् । यद्वा—अग्निरिदं हविरजुषत, अवीवृधत चास्मान्, प्रशस्यतरं महश्चास्माकं कृतवान् । यद्वा—अवीवृधत चास्माकं महः, इतोपि प्रशस्यतरं महः अस्माकमुपर्युपरि अकृत करिष्यति । छान्दसो लुङ् । सोमादिषु गतम् । अक्रातामिति 'मन्त्रे घस' इति च्लेर्लुक् । एवमक्रतेत्यत्रापि । अग्निर्होत्रेण सुष्ठु कृतत्वकरणेन स्विष्टकृत् इदं हविरजुषत । किंच—अस्यां देवंगमायां देवगामिन्यां होत्रायां होत्रे ऋधत् ऋध्नोतु होता दैव्यो मानुषश्च । यद्वा—अस्यां होत्रायां

ज्यायोऽकृत । अस्यामृधद्धोत्रायां देवंगमायाम् । आशास्तेऽयं यजमानोऽसौ । [3]आयुराशास्ते । सुप्रजास्त्वमाशास्ते । सजातवनस्यामाशास्ते ॥ २३ ॥ उत्तरां देवयज्यामाशास्ते । भूयो हविष्करणमाशास्ते । दिव्यं धामाशास्ते । विश्वं प्रियमाशास्ते । यदनेन हविषाऽऽशास्ते । तदश्यात्तदृध्यात् । तदस्मै देवा रासन्ताम् । तदग्निर्देवो देवेभ्यो वनते ।

यागे अयं यजमान ऋध्नोतु पुनःपुनर्यजताम्, सर्वां वा ऋद्धिं प्राप्नोतु । एवमहमाशासे, अयमपि यजमान इद माशास्ते । ऋधेर्लेटि व्यत्ययेन शः । असावित्यत्र यजमाननाम गृह्यते विष्णुशर्मा रुद्रशर्मेति । ब्राह्मणं च—'यर्हि होता यजमानस्य नाम गृह्णीयात्'* इति ॥

[3]इदानीं ऋद्धिविशेषानेकैकश्येनाह—आयुः शतवर्षप्रमाणम् । सुप्रजास्त्वं शोभनापत्यत्वम् । 'नित्यमसिच्प्रजामेधयोः' इति समासान्तः, छान्दसं दीर्घत्वम् । सजातवनस्यां समानजातीयैः प्राणैर्वा वननं सेव्यत्वमात्मन इच्छतीति क्यजन्तात् 'अःप्रत्ययात्' इत्यकारप्रत्ययः । उत्तरां उत्तरकालभाविनीं देवयज्यां दर्शपूर्णमासादिकां भूयः बहुतरं हविष्करणं यागं, दिव्यं दिवि भवं धाम स्थानम् । किंबहुना—सर्वं प्रियमात्मन आशास्ते । किं च—यदनेन प्रशस्ततराज्येन प्रह्रियमाणेन हविषाऽऽशास्ते तदश्यात् तत्फलं भुञ्जीत, तच्च

* सं. १-७-४.

वयमग्नेर्मानुषाः । इष्टं च वीतं च । उभे च नो द्यावापृथिवी अꣳहसस्पाताम् । इह गतिर्वामस्येदं च । नमो देवेभ्यः ॥ २४ ॥

अभयंकृतावकृताग्निरिदꣳ हविरजुषत महेन्द्र इदꣳ हविरजुषत सजातवनस्यामाशा-स्ते वीतं च त्रीणि च ॥१०॥

---

फलं ऋध्यात् समृद्धमस्य भवतु । तदस्मै यजमानाय देवा अग्रचाद्यः रासन्तां संसाधयन्ताम् । तत्फलमस्मै दातुं अग्निः देवस्सन् देवेभ्यो देवसकाशात् वनते संभजते । वयं च मानुषास्सन्तः अग्नेरेव प्रसादेन मनुष्यसकाशात्तस्मै दातुं वनामः । किं पुनस्तत्फलमित्याह—इष्टं यागनिमित्तं स्वर्गादिकम् । वीतं अशनखाद्यादिरूपं यदस्ति तन्मानुषम् । किं च—उभे द्यावापृथिव्यौ अंहसः पापात् कर्मापचारनिमित्तात् पातां रक्षताम् । इह हविषि वामस्य वननीयस्य धनस्य गतिः व्याप्तिः । इदं च एतद्धविर्लक्षणं नमः अन्नं देवेभ्यः अस्त्विति शेषः । यद्वा—इदमेव नमः प्रशस्तं हविः देवेभ्य एव देवा एवाश्नन्ति ॥

इति तैत्तिरीये ब्राह्मणे तृतीये पञ्चमे
दशमोऽनुवाकः

[1]तच्छंयोरा वृणीमहे। गातुं यज्ञाय। गातुं यज्ञपतये। दैवीं स्वस्तिरस्तु नः। स्वस्तिर्मानुषेभ्यः। ऊर्ध्वं जिगातु भेषजम्। शं नो अस्तु द्विपदे। शं चतुष्पदे ॥ २५ ॥

तच्छंयोरष्टौ ॥ ११ ॥

[1]आ प्यायस्व [2]सं ते। [3]इह त्वष्टारमग्रियं [4]तन्नं-

[1]शंयुवाकाय प्रेषितो ब्रवीति—तच्छंयोरित्यादि ॥ तत् तादृशं प्रशस्तफलं शंयोः बार्हस्पत्यादौ [देः] आवृणीमहे प्रार्थयामहे, किं पुनस्तत्? गातुं गमनं देवान्प्रति यज्ञाय यज्ञस्य, यज्ञपतये यजमानस्य च गातुं देवस्थानं प्रति गमनं वृणीमहे। अत्रैवं संपत्स्यमाना नः अस्माकं दैवी स्वस्तिः देवनिमित्तं विघ्नोपशमनमस्माकमस्तु। मानुषेभ्यश्च होतृभ्यः या स्वस्तिः सा चास्माकमस्तु। किंच—ऊर्ध्वं जिगातु उद्गच्छतु भेषजं सर्वानिष्टशामनमेतत्कर्म सर्वोच्छ्रितमस्तु। किंच अस्माकं सम्बन्धिने द्विपदे मनुष्यादये चतुष्पदे च गवादये शं सुखं अस्तु। द्विपदोऽन्तोदात्तत्वमुक्तम् ॥

इत्येकादशोऽनुवाकः.

1—4अथ पत्नीसंयाजानां याज्यानुवाक्याः—आ प्यायस्वेत्याद्याः ॥ 'आ प्यायस्व समेतु ते, संते पयांसि' इति त्रिष्टुभौ 'मा नो हिंसीत्' इत्यत्र व्याख्याते *। 'इह त्वष्टारमग्रियं, तन्नस्तुरीपमध पोषयित्नु' इति गायत्रीत्रिष्टुभौ 'अग्निना रयिमश्नवत्' इत्यत्र व्याख्याते† ॥

* सं. ४-२-७. † सं. ३-१-११.

स्तुरीपम् । [5]देवानां पत्नीरुशतीरवन्तु नः । प्राव-न्तु नस्तुजये वाजसातये । याः पार्थिवासो या अपामपि व्रते । ता नो देवीस्सुहवाश्शर्म यच्छत । [6]उत ग्ना वियन्तु देवपत्नीः । इन्द्राण्यग्नाय्यश्विनी राट् । आ रोदसी वरुणानी शृणोतु । वियन्तु दे-

[5]देवानां पत्नीरिति ॥ देवानां पत्नयः इन्द्राण्याद्याः सेनादयो वा 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । उशतीः उशत्यः कामयमानाः अस्मद्धितानि ता अस्मानवन्तु रक्षन्तु प्राप्नुवन्तु वा । किञ्च—अस्माकं तुजये अपत्याय वाजसातये अन्नलाभाय च ता देव्यः प्रावन्तु प्रकर्षेण तृप्यन्तु । किञ्च—याः पार्थिवासः पृथिव्यां भवाः । 'आज्जसेरसुक्' याश्च अपां व्रते कर्मस्थाने अन्तरिक्षे । अपिशब्दात् पूर्वोक्ताश्च दिवि भवाः इन्द्राण्याद्याः तास्सर्वाः यूयं सुहवाः सुखेनाह्वातव्याः आह्वानप्रयोजनस्य सद्यः कर्त्र्यः अस्मभ्यं शर्म सुखं यच्छत दत्त हे देव्यः । । उत्तरोऽर्थः प्रत्यक्षकृतः ॥

[6]उत ग्ना वीति त्रिष्टुप् ॥ ग्ना अपि गायत्र्यादयोपि छन्दांसि इदमाज्यं वियन्तु पिबन्तु, देवपत्न्यश्च इन्द्राण्याद्याः । इन्द्रस्य पत्नी इन्द्राणी 'इन्द्र-वरुण" इति ङीष् आनुक । अग्नेः पत्नी अग्नायी 'वृषाकप्यग्नि' इति ङीष् । अश्विनोः पत्नी अश्विनी । 'पुंयोगात्' इति ङीष् । राट् दीप्यमाना । रोदसी द्यौः पृथिवी चेति शाकल्यः । रोदना द्रुद्रः तस्य पत्नी रोदसी इत्यप्रसन्नत्र्ययास्कः । वरुणस्य पत्नी वरुणानी सा चास्मदभिमतमाशृणोतु अनुमन्यतां वियन्तु पान्तु

वीर्यं ऋतुर्जनीनाम् ॥२६॥ [7]अग्निर् होता गृहपतिस्स राजा । विश्वा वेद जनिमा जातवेदाः । देवाना-मुत यो मर्त्यानाम् । यजिष्ठस्स प्रयजतामृतावा । [8]वयमु त्वा गृहपते जनानाम् । अग्ने अकर्म समिधा बृहन्तम् । अस्थूरिणो गार्हपत्यानि सन्तु ।

---

आज्यमिति यावत् । एवं एताः सर्वा अपि देव्यः वियन्तु पिबन्तु । आज्यं पुनर्वचनं कालविधानार्थं । तदाह—यः ऋतुः कालः आत्मीयः जनीनां जायानां तत्र पिबन्त्विति । कः पुनरसः ? भुक्तवत्सु पुरुषेष्विति सामर्थ्याद्गम्यते ॥

[7]अग्निर्होतेति ॥ अग्निः होता देवानां आह्वाता । गृहपतिः गृहाणां पाता स एव राजा दीप्यमानः । क इत्याह—विश्वा जनिमा जन्मानि यो वेद जानाति । जातवेदाः जातानां वेदिता जातप्रज्ञो वा । केषां जन्मानि ? देवानां मर्त्यानां च । किञ्च—स एव यजिष्ठः यष्टृतमः प्रयजतां मध्ये तत्तुल्यः प्रकृष्टो यष्टा ऋतावा सत्यवान् यज्ञवान्वा । मत्वर्थीयो वतिः । यष्टृशब्दात् 'तुश्छन्दसि' इति इष्ठन्प्रत्ययः ॥

[8]वयमु त्वेति त्रिष्टुप् ॥ हे अग्ने ! गृहपते ! जनानां मध्ये वयमेव त्वां समिधा संदीपनेन तेजसा बृहन्तं अकर्म कृतवन्तः स्म । तस्मात् नः अस्माकं अस्थूरि अक्लिष्टानि । सुपां सुलुक् । गार्हपत्या-नि गृहपतिना संयुक्तानि कर्माणि सन्तु । किञ्च—तिग्मेन तीक्ष्णेन अप्रधृष्येण तेजसा नः अस्मान् संशिशाधि तीक्ष्णीकुरु समृद्धान्

तिग्मेनं नस्तेजंसा सꣳ शिशाधि ॥ २७ ॥

जनीनामष्टौ च ॥ १२ ॥

[1]उपहूतꣳ रथन्तरꣳ सह पृथिव्या । उप मा रथन्तरꣳ सह पृथिव्या ह्वयताम् । उपहूतं वामदेव्यꣳ सहान्तरिक्षेण । उप मा वामदेव्यꣳ सहान्तरिक्षेण ह्वयताम् । उपहूतं बृहथ्सह दिवा । उप मा बृहथ्सह दिवा ह्वयताम् । उपहूतास्सप्त होत्राः । उप मा सप्त होत्रां ह्वयन्ताम् । उपहूता धेनुस्सहर्षभा । उप मा धेनुस्सहर्षभा ह्वयताम् ॥ २८ ॥ उपहूतो भक्षस्सखा । उप मा भक्षस्सखा ह्वयताम् । उपहूतां(४)हो । इडोपहूता । उपहूतेडा । उपो अस्माꣳ इडा ह्वयताम् । इडोपहूता । उपहूतेडा । मानवी घृतपदी मैत्रावरुणी । ब्रह्म देवकृतमुपहूतम् ॥ २९ ॥ दैव्या अध्वर्यव उपहूताः । उपहूता मनुष्याः । य इमं यज्ञमवान् । ये यज्ञपतीं वर्धान् ।

कुर्विति । 'वा छन्दसि ' इत्यपित्वे प्रतिषिद्धे ङित्वाभावात् ' अङितश्च ' इति धिभावः ॥

इति तैत्तिरीये तृतीयेऽष्टके पञ्चमप्रपाठके द्वादशोऽनुवाकः.

उपहूते द्यावापृथिवी । पूर्वजे ऋतावरी । देवी देवपुत्रे । उपहूतेयं यजमाना । इन्द्राणीवाविधवा । अदितिरिव सुपुत्रा । उत्तरस्यां देवयज्यायामुपहूता । भूयसि हविष्करण उपहूता । दिव्ये धामन्नुपहूता । इदं मे देवा हविर्जुषन्तामिति तस्मिन्नुपहूता । विश्वमस्याः प्रियमुपहूतम् । विश्वस्य प्रियस्योपहूतस्योपहूता ॥ ३० ॥

सहर्षभा ह्वयतामुपहूतꣳ सुपुत्रा षट्च ॥१३॥

सत्यं प्रवोऽग्ने महानग्निर् होता समिधोऽग्निर्वृत्राण्यग्निर्मूर्धोपहूतं देवं बर्हिरिदं द्यावापृथिवी तच्छंयोरा प्यायस्वोपहूतं त्रयोदश ॥ १३ ॥

सत्यं वयꣳ स्याम वृष्टिद्यावा त्रिꣳशत् ॥ ३० ॥

सत्यमुपहूता.

[1] अथ पत्नीसंयाजे सोमाह्वानम्—उपहूतं रथन्तरमित्यादि ॥ पूर्वमेव व्याख्याता* । यज्ञपत्नीमित्यादि स्त्रीलिङ्गतो विशेषः । गतमन्यत् ॥

इति श्री भट्टभास्करमिश्रविरचिते यजुर्वेदभाष्ये तृतीयेऽष्टके पञ्चमप्रश्ने इष्टिहौत्रं नाम त्रयोदशोऽनुवाकः

प्रश्नश्च समाप्तः.

* आ. ३-५-८.

श्री.

# षष्ठप्रपाठकप्रारम्भः.

हरिः ओम् ॥ अञ्जन्ति त्वामध्वरे देवयन्तः । वनस्पते मधुना दैव्येन । यदूर्ध्वस्तिष्ठाद्द्रविणेह धत्तात् । यद्वा क्षयो मातुरस्या उपस्थे । [2]उच्छ्रय-

---

[1]अथ पशुहौत्रमारभ्यते वैश्वदेवं काण्डम् । तत्र 'यूपायाज्यमानय' इत्युक्ते अन्वाह—अञ्जन्तीति त्रिष्टुबेषा ॥ हे वनस्पते! यूप! विकारे प्रकृतिशब्दः । त्वामञ्जन्ति म्रक्षयन्ति स्निग्धत्वाय, अध्वरे अध्वरनिमित्तं अध्वरः सिद्ध्येदिति, देवयन्तः देवानिच्छन्तः मधुना मधुरसेन याज्येन दैव्येन देवानां सम्बन्धिना । उक्तं च—'एतद्वै देवानां मधु । यद्घृतम्' इति । किमर्थमञ्जन्ति—यदूर्ध्वः उच्छ्रितः तिष्ठात् तिष्ठेः स्थास्यसि, लेटयाडागमः । यदिदं प्रयोजनं एतदर्थमञ्जन्ति । यद्वा—हेतौ । द्रविणानि धनानि यागसिद्धिद्वारेण इह कर्मणि अस्माकं धत्तात् दध्याः उत्पादयेः दास्यसि वा, एतदर्थं चाञ्जन्ति । यद्वा—यतश्च हेतोः अस्याः मातुः निर्मात्र्याः श्रेयसां वेदेः उपस्थे पार्श्वदेशे क्षयः निवसेः निवत्स्यसि वा तदनुरूपं चाञ्जन्ति । क्षियतेः लेटि शपो लुकि अडागमः ॥

[2]यूपायोच्छ्रीयमाणायानुब्रूहीत्युक्तोऽन्वाह—उच्छ्रयस्वेति ॥ अनुष्टुबेषा । हे वनस्पते! यूप! ऊच्छ्रयस्व उत्तिष्ठ पृथिव्यास्स-

स्व वनस्पते । वर्ष्मन्पृथिव्या अधि । सुमिती मीयमानः । वर्चोधा यज्ञवाहसे । [3]समिद्धस्य श्रयमाणः पुरस्तात् । ब्रह्म वन्वानो अजरꣳ सुवीरम् ॥ १ ॥ आरे अस्मदमतिं बाधमानः । उच्छ्रयस्व महते सौभगाय । [4]ऊर्ध्व ऊषुणं ऊतये । तिष्ठा देवो न सविता । ऊर्ध्वो वाजस्य सनिता यदञ्जि-

न्वन्धिनि वर्ष्मन् प्रधानभूते अस्मिन् देशे अधि उपरि सुमिती सुमित्या शोभनेन प्रक्षेपेण । 'सुपां सुलुक्' इति पूर्वसवर्णदीर्घत्वं तृतीयायाः । मीयमानः प्रक्षिप्यमाणः स्थाप्यमानः वर्चोधाः दीप्तेर्धाता दाता वा कस्मै ? यज्ञवाहसे यज्ञस्य वोढ्रे यजमानाय ॥

[3]समिद्धस्येति त्रिष्टुप् ॥ समिद्धस्य दीप्तस्य आहवनीयस्य पुरस्तात् पूर्वस्यां दिशि श्रयमाणः तिष्ठन् ब्रह्म परिबृढं इदं कर्म वन्वानः संभजमानः अजरं अविनाशि फलं सुवीरं कल्याणपुत्रादिसमृद्धिहेतुं आरे अन्तिके क्षिप्रमेव अस्मत् अस्मत्सकाशात् अमतिं अज्ञानं बाधमानः नाशयन् उच्छ्रयस्व उत्तिष्ठ महते सौभगाय सुश्रीकत्वाय । 'सुभगान्मत्रे' इत्यण् ॥

[4]ऊर्ध्व ऊषुण इति त्रिष्टुप्प्रकारः 'संते वायुः' इत्यत्र व्याख्यातः* ॥

* सं ४-१-४.

भिः । वाघद्भिर्विह्वयामहे । [5]ऊर्ध्वो नः पाह्यꣳहसो निकेतुना । विश्वꣳ समत्त्रिणं दह । कृधी न ऊर्ध्वाञ्चरथाय जीवसे । विदा देवेषु नो दुवः ॥ २ ॥ [6]जातो जायते सुदिनत्वे अह्नाम् । समर्य आ विदथे वर्धमानः । पुनन्ति धीरा अपसो मनीषा ।

[5]ऊर्ध्वो नः इति सतःपङ्क्तिः ॥ ऊर्ध्वः उच्छ्रितः त्वं अस्मान् पाहि अंहसः पापात् निपाहि नियतं रक्ष, केतुना प्रज्ञया विश्वं च अत्रिणं भक्षणशीलं रक्षःप्रभृति संदह समूहीकृत्य दह । किञ्च—अस्मानपि ऊर्ध्वान् उच्छ्रितान् कृधि कुरु । 'श्रुशृणुपृकृवृभ्यश्छन्दसि' इति धिभावः । 'बहुलं छन्दसि' इति शपो लुक् । ऊर्ध्वानित्यस्य अम्परे 'नश्छव्यप्रशान्' इति व्यत्ययेन न क्रियते । रथाय रंहणाय गमनाय जीवसे जीवितुं जीवनाय वा । किञ्च—देवेषु नः अस्माकं दुवः परिचर्यां विदाः वेदय । विदेर्लेटि व्यत्ययेन आडागमश्च ॥

[6]जातो जायते इति त्रिष्टुप् ॥ जातः नित्यप्रादुर्भूतः आजायते पुनरप्यस्मदाभिमुख्येन प्रादुर्भवति । अह्नां सुदिनत्वे अह्नां मध्ये शोभने यागार्हे दिवसे । स्वार्थिको भावप्रत्ययः । यद्वा—अह्नां सुदिनत्वाय यागनिर्वृत्त्या शोभनाय पुनराजायते क ? विदथे यज्ञगृहे कीदृशे ? समर्ये सङ्गरणस्थाने ऋत्विजाम् । अधिकरणे यत् । मर्त्यसहिते वा । तत्र वर्धमानः उच्छ्रयमाणः । यद्वा—सः त्वं मर्ये मर्त्येषु वर्धमानः । स इत्युदात्त उपपन्नो भवति । किञ्च—तमिमं पुनन्ति शोधयन्ति प्रक्षालनादिना अपसः अपस्विनः कर्मिणः ऋत्विजो यजमाना वा

देवया विप्र उदियर्ति वाचम् । [7]युवा सुवासाः परिवीत आगात् । स उ श्रेयान्भवति जायमानः । तं धीरासः कवय उन्नयन्ति । स्वाधियो मनसा देवयन्तः । [8]पृथुपाजा अमर्त्यः । घृतनिर्णिक्स्वा-

धीराः धीमन्तः मनीषा मनीषया प्रज्ञया । 'सुपां सुलुक्' इत्याकारः । किञ्च—देवया देवेच्छया, क्यजन्तादकारप्रत्ययः । देवगामी वा, यातेः विच् । विप्रः विशेषेण पूरयिता । प्रातेः 'आतश्चोपसर्गे' इति कः । वाचं स्तुतिलक्षणां उदियर्ति उद्गमयति स्तुतिं जनयति, स्तुत्यो भवतीति यावत् । ऋसृ गतौ, शपः श्लौ 'अर्तिपिपर्त्योश्च' इत्यभ्यासस्येत्वम् । यद्वा—त्वामधिकृत्य अयं विप्रः होता वाचं स्तुतिलक्षणां उदियर्ति उच्चारयति त्वां स्तौति, स त्वं उच्छ्रयस्वेति ॥

[7]यूपाय परिवीयमाणायानुब्रूहीत्युक्तेऽन्वाह—युवा सुवासा इति त्रिष्टुप् ॥ यथा कश्चित् युवा सुवासाः शोभनवासाः एति अग्रतः आगच्छति एवमयं परिवीतः रशनया वेष्टितः आगात् आगतः संपन्न इति यावत् । स एव हि जायमानो दिनेदिने निष्पद्यमानः श्रेयान् प्रशस्यतरः भवति । तं खलु धीरासः धीमन्तः कवयः क्रान्तदर्शिनः उन्नयन्ति ऊर्ध्वं नयन्ति गुणैः उच्छ्रितं स्तुत्यं कुर्वन्ति स्वाधियः स्वाधीयमानाः स्वयमेव ध्यायन्तीति स्वाधियः छान्दसं दीर्घत्वम् । मनसा देवयन्तः देवान् प्राप्तुमिच्छन्तः यजमानाः इति यावत् । तस्मात् वयमपि तथा कुर्म इति ॥

[8]समिध्यमानवतीं समिद्धवतीं चान्तरेण पृथुपाजवत्यौ धाय्ये दधाति—पृथुपाजा इति, गायत्र्यौ ॥ पृथुपाजाः विस्तीर्णबलः अमर्त्यः

हुतः ॥३॥ अग्निर्यज्ञस्य हव्यवाट् । [9]तꣳ सबाधो यतस्रुचः । इत्था धिया यज्ञवन्तः । आचक्रुरग्निमूतये । [10]त्वं वरुण उत मित्रो अग्ने । त्वां वर्धन्ति मतिभिर्वसिष्ठाः । त्वे वसु सुषणनानि सन्तु । यूयं पात स्वस्तिभिस्सदा नः ॥ ४ ॥

सुवीरं दुवस्स्वाहुतोऽष्टौ च ॥ १ ॥

[1]होता यक्षदग्निꣳ समिधा सुषमिधा समिद्धं

अमरणधर्मा घृतानिर्णिक् घृतरूपः स्वाहुतः सम्यगाहुतः अग्निः अयं यज्ञस्य हव्यवाट् हविषां वोढा भवति यथोक्तगुणः, तस्मादेनं तादृशं कुर्म इति ॥

[9]तमिति ॥ तमिमं अग्निं सबाधः ऋत्विजः यतस्रुचः सदा व्यापृतस्रुचः इत्था इत्थं अनेन प्रकारेण धिया प्रज्ञया कर्मणा वा यज्ञवन्तः सम्यग्यजमानाः आचक्रुः आकुर्वन्ति ऊतये तर्पणाय आत्मनः रक्षणाय अस्माकं, वयमपि तथा कुर्मः ॥

[10]परिधानीया— त्वं वरुण इति ॥ इष्टिहौत्रे व्याख्याता * । अत्र पाठात् सर्वेषामियं परिधानीया ॥

इति तैत्तिरीये ब्राह्मणे तृतीये पशुहौत्रे प्रथमोऽनुवाकः.

---

[1]प्रयाजप्रैषान् मैत्रावरुण आह—होता यक्षदग्निमित्यादि ॥ ऋचो यजूंषि व्यामिश्रिताश्च मन्त्राः सौत्रामण्यां गतप्रायाः । होता

---

* ब्रा. ३ ५-२.

नाभा पृथिव्याः सङ्गथे वामस्य । वर्ष्मन्दिव इडस्पदे वेत्वाज्यस्य होतर्यज । होता यक्षत्तनूनपातमदितेर्गर्भं भुवनस्य गोपाम् । मध्वाऽद्य देवो देवेभ्यो देवयानान्पथो अनक्तु वेत्वाज्यस्य होतर्यज । [3]होता यक्षन्नराशꣳसं नृशस्तं नॄꣳः प्रणेत्रम् ।

दैव्यो यक्षत् यजतु अग्निं समिधा समिदाख्यया प्रयाजदेवतया सह सुषमिधा शोभनसमिन्धनेन समिद्धं नाभा नाभौ पृथिव्याः वेद्याः उत्तरनाभौ, सर्वस्या वा पृथिव्याः नाभिस्थानीयायां वेद्यां, किमर्थम्? सङ्गथे सङ्गमनार्थं वामस्य वननीयस्य धनस्य हविराख्यस्य अस्माकं वा वननीयस्य धनस्य अभिमतस्य प्राप्त्यर्थं दिवोपि वर्ष्मन् उच्छ्रिते तत्र स्थाने । यद्वा—द्युलोकवासिनामुच्छ्रयार्थे इडः अन्नस्य वृष्टेर्वा पदे उत्पत्तिस्थाने अग्निं यजतु, स चाग्निः वेतु पिबतु आज्यस्य अस्य समिद्भिस्सह, होतः! मानुष! त्वमपि यज ॥

[2]होता यक्षत्तनूनपातं तनूनपान्नामानं प्रयाजदेवतां अदितेः देवमातुः पृथिव्या वा गर्भं भुवनस्य भूतजातस्य गोप्तारं, स चाग्निः देवः मध्वा मधुसदृशेनाज्येन अद्य अस्मिन्नहि देवयानान् पथो- मार्गान् पानीयानि भक्ष्याणि हवींषि अनक्तु स्वादु करोतु । वेत्वित्यादि गतम् ॥

[3]होता यक्षत् यजतु नराशंसं नराशंसाख्यं अग्निं नृशंसं नृभिः शस्तं स्तुतं नॄः प्रणेत्रं नृषु प्रकृष्टं नयनं यस्य तादृशं, विभक्तिव्यत्ययेन द्वितीयाया अलुक् । 'नॄन्पे' इति रुत्वानुनासिकौ ।

गोभिर्वपावान्थ्स्याद्वीरैश्शक्तीवान्रथैः प्रथमयावा हिरण्यैश्चन्द्री वेत्वाज्यस्य होतर्यज । [4]होता यक्षदग्निमिड ईडितो देवो देवाꣳ आवक्षद्दूतो हव्यवाडमूरः । उपेमं यज्ञमुपेमां देवो देवहूतिमवतु वेत्वाज्यस्य होतर्यज । [5]होता यक्षद्बर्हिस्सुष्टरीमोर्णम्रदा अस्मिन् यज्ञे वि च प्र च प्रथताꣳ स्वा-

---

सन्नाग्निः अस्मिन् यजमाने गोभिः वपावान् अकृशः स्यात् भवतु । गोसमृद्धिहेतुर्भवत्विति यावत् । वीरैः पुत्रादिभिः शक्तीवान् कर्मवान् स्यात् सर्वार्थसाधनसमर्थो वा । छान्दसं दीर्घत्वम् । 'छन्दसीरः' इति वत्वम् । रथैः प्रथमयावा प्रथमयायी रथयायिनां प्रधानः स्यात् । 'आतो मनिन्' इति वनिप् । हिरण्यैः चन्द्री आह्लादी स्यात् । हितरमणीयैर्वा कर्मभिः हिरण्यवान् स्यात् । वेत्वित्यादि गतम् ॥

[4]होता यक्षत् यजतु अग्निमिडः इडंसंज्ञकं, स च देवः सर्वैरीडितः देवान् आवक्षत् आवहतु, दूतः हितकारी हव्यवाट् हविषां वोढा, अमूरः अमूढः, मुर्छेरन्त्यलोपः । इमं यज्ञं उपावतु उपेत्य रक्षतु, इमां च देवहूतिं देवाह्वानं उपावतु उपेत्य फलवतीं करोतु । देवहूतिः दासीभारादिर्द्रष्टव्यः । वेत्वित्यादि गतम् ॥

[5]होता यक्षत् यजतु अग्निं बर्हिस्संज्ञिकं, सुष्टरीम शोभनस्तरणं, औणादिक इमनिच् दीर्घत्वम् । यद्वा—तृजन्तात् 'तुरिछन्दसि' इति इमनिच् । ऊर्णम्रदाः ऊर्णावत् मृदु, मृदं क्षोदे

सस्थं देवेभ्यः । एमेनदद्य वसवो रुद्रा आदित्या-स्सदन्तु प्रियमिन्द्रस्यास्तु वेत्वाज्यस्य होतर्यज ॥ ५ ॥ [6]होता यक्षद्दुरं ऋष्वाः कवष्योऽकोषधावनी-रुदाताभिर्जिहतां वि पक्षोभिश्श्रयन्ताम्। सुप्रायणा अस्मिन् यज्ञे विश्रयन्तामृतावृधो वियन्त्वाज्यस्य होतर्यज । [7]होता यक्षदुषासानक्ता बृहती सुपेशा-

---

असुनि लिङ्गव्यत्ययः । उपमानपूर्वपदप्रकृतिस्वरत्वम् । तच्च अस्मिन् यज्ञे विप्रथतां विविधं प्रथतां प्रप्रथतां प्रकर्षेण प्रथतां च, स्वासस्थं शोभनासनाय पर्याप्तं देवेभ्यो देवार्थं ईमिति अव-धारणे । एनत् बर्हिः अद्य अस्मिन्नह्नि वस्वादयः आसदन्तु । छान्दसः शपो लुक् । प्रियमस्त्विन्द्रस्य । वेत्वित्यादि गतम् ॥

[6]होता यक्षत् यजतु दुरः द्वारमंज्ञिकमग्निं, ऋष्वाः महतीः हिंस्रा वा कवष्यः कवाटवतीः सुषिरव्यापिनीर्वा । अकोषधावनीः याः कोषैः छिद्रैः धावन्ति ताः कोषधावन्यः अतथाविधाः ताः द्वाराः आताभिः दिग्भिः दीप्तिभिर्वा उज्जिहतां उद्गच्छन्तु । महाकाशाः महादीप्तयो वा भवन्त्यः उत्तिष्ठन्तु । पक्षोभिः पार्श्वैः विश्रयन्तां विविधं श्रयन्तां, अस्मिंश्च यज्ञे सुप्रायणाः सुखेन प्रापणीयाः । 'छन्दसि गत्यर्थेभ्यः' इति युच् । ऋतावृधः ऋतस्य सत्यस्य वा वर्धयित्र्यः विश्रयन्तां विविधं श्रयन्तां सेव-न्ताम् । वियन्त्वित्यादि गतम् ॥

[7]होता यक्षत् यजतु उषासानक्ता अहश्च रात्रिश्च महत्यौ

सा नृ॒ᳶ पति॑भ्यो॒ योनि॑ कृण्वा॒ने । सꣳ॒स्मय॑माने॒ इन्द्रे॑ण दे॒वैरे॒दं ब॒र्हिस्सी॑दतां वी॒तामाज्य॑स्य॒ होत॒र्यज॑ । [4]होता॑ यक्ष॒द्दैव्या॒ होता॑रा म॒न्द्रा पोता॑रा क॒वी प्रचे॑तसा । स्वि॑ष्टम॒द्यान्यः क॑रदि॒षा स्व॑भिगू॑र्तम॒न्य ऊ॒र्जा सत॑वसे॒मं य॒ज्ञं दि॒वि दे॒वेषु॑ धत्तां वी॒तामा॒ज्य॑स्य॒ होत॒र्यज॑ । [5]होता॑ यक्षत्ति॒स्रो दे॒वीर॒पसा॑म॒प-

---

सुपेशसा सुपेशसौ कल्याणरूपे । पूर्ववदाकारः । नॄन् पतिभ्यो नृणां पतिभ्यो देवेभ्यः, षष्ठीस्थाने पूर्ववद्द्वितीया, पूर्ववद्रुत्वानुनासिकौ । योनिं कारणं यागकालं कृण्वाने कुर्वाणे संस्मयमाने संभूय हर्षेण स्मितं कुर्वाणे इन्द्रेण देवैश्च स्मयेन वा हर्षो लक्ष्यते । तथाविधे इदं बर्हिः यज्ञमासीदताम् । वीतामित्यादि गतम् ॥

[4]होता यक्षत् यजतु दैव्यौ होतारौ मन्द्रौ तर्पणौ पोतारौ शोधयितारौ कवी क्रान्तदर्शिनौ प्रचेतसा प्रकृष्टज्ञानौ तयोः अन्यः एकः अद्य अस्मिन्कर्मणि अह्नि स्विष्टं शोभनयागसंबन्धं इषा अन्नेन हविषा करत् करोतु । छान्दसे लुङि 'कृमृदृरुहिभ्यः' इत्यङ् । 'बहुलं छन्दस्यमाङ्योगेऽपि' इत्यडभावः । अन्यश्च स्वभिगूर्तं शोभनाभिप्रेतफलसंबन्धं करदित्येव । ऊर्जा रसेन सतवसा सबलया सवृद्धिकया वा इमं च यज्ञं दिवि देवेषु धत्तां स्थापयताम् । वीतामित्यादि गतम् ॥

[5]होता यक्षत् तिस्रो देवीरपसामपस्तमाः । उभयत्र मत्व-

स्तमा अच्छिद्रमद्येदमपस्तन्वताम् । देवेभ्यो देवी-
देवमपो वियन्त्वाज्यस्य होतर्यज । [10]होता यक्ष-
त्त्वष्टारमचिष्टुमपाकꣳ रेतोधां विश्रवसं यशोधाम् ।
पुरुरूपमकामकर्शनꣳ सुपोषः पोषैस्स्यात्सुवीरो
वीरैर्वेत्वाज्यस्य होतर्यज । [11]होता यक्षद्वनस्पतिमु-
पावस्त्रक्षद्धियो जोष्टारꣳ शशमन्नरः । स्वदात्स्व-

र्घीयो लुप्यते । कर्मवतां मध्ये कर्मवत्तमा इदं अस्मदीयं अपः
कर्म यागं अच्छिद्रं अविगुणं तन्वतां कुर्वतां अद्य अस्मिन्न-
हनि । इदं देवेभ्यो देवार्थमपः कर्म देवं देवनशीलं अ-
भिमतफलप्रदानसमर्थं च कुर्वतां देवीः देव्यः देवनशीलाः । वि-
यन्त्वित्यादि गतम् ॥

[10]होता यक्षत् यजतु त्वष्टारं अचिष्टुं अश्नेन गमनेन
स्तुत्यं शोभनाञ्जनं, छान्दसी रूपसिद्धिः । यद्वा—अचिष्टुं चे-
ष्टनरहितं स्थिरं अपाकं अबालं प्राज्ञं अतो रेतोधां रेतसः
उदकस्य धातारं दातारं वा विश्रवसं विविधान्नं विविधयशसं
वा यशोधां यशसो दातारं पुरुरूपं बहुरूपं अकामकर्शनं का-
मानामनाशयितारं सः अस्मिन्यजमाने पोषैः धनादिसमृद्धिभि
सुपोषः स्यात् तद्धेतुरस्य भवतु, वीरैः पुत्रादिभिश्च सुवीरोऽ
स्तु । वेत्वित्यादि गतम् ॥

[11]होता यक्षत् वनस्पतिं वानस्पत्यं यूपाधारं कीदृशं? धियः
जोष्टारं बुद्धेः प्रीणयितारं सेवितारं वा, हृदयंगमं उपावस्र

धितिर् ऋतुथाऽद्य देवो देवेभ्यो हव्याऽवाडुत्वाज्यस्य होतर्यज । [12]होता यक्षदग्निꣳ स्वाहाऽऽज्यस्य स्वाहा मेदसस्स्वाहा स्तोकानाꣳ स्वाहा स्वाहाकृतीनाꣳ स्वाहा हव्यसूक्तीनाम् । स्वाहा देवाꣳ आज्यपान्थ्स्वाहाऽग्निꣳ होत्राज्जुषाणा अग्न आज्यस्य वियन्तु होतर्यज ॥ ६ ॥

प्रियमिन्द्रस्यास्तु वेत्वाज्यस्य होतर्यज सुवीरो वीरैर्वेत्वाज्यस्य होतर्यज चत्वारि च ॥२॥

अग्निं तनूनपातं नराशꣳसमग्निमिड ईडितो

---

क्षत्, उपावसृजतु । लेटि सिप्प्रत्ययः । पश्वर्थं विसृजतु । कः ? शशमत् शमयन् शमिता पशोर्यजमानः नरः नेता । शमेः व्यत्ययेन शप श्लुः । किञ्च—स ऋतुथा काले क्रियमाणः अद्य अस्मिन्नह्नि स्वदात् स्वदयतु हव्यानि स्वधितिः स्वधितिमान् स्वधितिसंस्कृतः । यद्वा—स्वस्मिन् आत्मनि निहितः देवार्थं नियुक्तत्वात्, देवेभ्यो हव्यानि स्वादूकरोतु, यथाकृत्वा देवेभ्यो हव्या हव्यानि अवाट् वहतु । वहेश्छान्दसे लुङि वृद्धाविडभावे रूपम् । देवः देवनशीलः । वेत्वित्यादि गतम् ॥

[12]होता यक्षत् यजतु अग्निं स्वाहाकारदेवताश्च आज्यादीनि यजन्तु । अग्निं च स्विष्टकृतं होत्रार्थं यज्ञस्य स्विष्टकृतत्वाय ।

बर्हिर्दुरं उषासानक्ता दैव्यां तिस्रस्त्वष्टारं वनस्पतिमग्निम् । पञ्च वेत्वेको वियन्तु द्विर्वीतामेको वियन्तु द्विर्वेत्वेको वियन्तु होतर्यज ॥

[1]समिद्धो अद्य मनुषो दुरोणे । देवो देवान् यजसि जातवेदः । आ च वह मित्रमहश्चिकित्वान् ।

हे अग्ने! आज्यस्य वियन्तु पिबन्तु । हे होतः! त्वमपि यज । 'होता यक्षत् समिधेन्द्रम्'* इत्यत्र सौत्रामण्यां व्याख्यातम् । शिष्टं तत एव द्रष्टव्यम् ॥

इति तैत्तिरीये ब्राह्मणे तृतीये षष्ठे द्वितीयोऽनुवाकः.

---

[1]अथाग्नियः प्रयाजानां याज्याः इह पाठात्सर्वार्थाः समिद्धो अद्येत्याद्याः ॥ सर्वास्त्रिष्टुभः । समिद्धः संदीप्तः अद्य अस्मिन्कर्मणि मनुषो मनुष्यस्य यजमानस्य दुरोणे गृहे अभ्रचगारे देवः देवनशीलः त्वं यजसि यज हविषा तर्पय । हे जातवेदः! जातानां वेदितः! तदर्थं आवह च देवान् हे मित्रमहः! मित्राणां सुहृदां पूजयितः! चिकित्वान् जानन् स्वाधिकारम् । कितेर्लिटः क्वसुरादेशः । त्वं खलु देवानां दूतः हितकारी कविः क्रान्तदर्शनः प्रचेताः प्रकृष्टज्ञानश्चासि ॥

*ब्रा. २-३-७.

त्वं दूतः कविरसि प्रचेताः । [2]तनूनपात्पथ ऋतस्य यानान् । मध्वा समञ्जन्त्स्वदया सुजिह्व । मन्मानि धीभिरुत यज्ञमृन्धन् । देवत्रा चं कृणुह्यध्वरं नः । [3]नराशंसस्य महिमानमेषाम् । उपस्तोषाम यजतस्य यज्ञैः ॥ ७ ॥ ते सुक्रतवश्शुचयो

[2]तनूनपात्पथ इति ॥ हे तनूनपात्! अग्ने! पथः मार्गान् कीदृशान् ऋतस्य यज्ञस्य यानान् यज्ञः यैः याति समाप्तिं गच्छति तानि मार्गस्थानि हवींहि मध्वा मधुरसेन समञ्जन् निम्रक्षयन् अभिव्यक्तरसानि कुर्वन् स्वदय स्वादूकुरु । सांहितिकं दीर्घत्वम् । हे सुजिह्व! सुज्वाल! मन्मानि मननानि अस्मदभिप्रेतानि धीभिः कर्मभिः आत्मीयैः ऋन्धन् ऋद्धानि कुर्वन्। ऋधेर्व्यत्ययेन श्नम् । यज्ञं वा अस्मदीयं ऋन्धन् फलसमृद्धं कुर्वन् अस्माकं अध्वरं देवत्रा देवेषु कृणुहि कुरु । 'उतश्च प्रत्ययात् छन्दो वा वचनम्' इति हेर्लोपाभावः । 'देवमनुष्य' इति त्रप्रत्ययः ॥

[3]नराशंसस्येति ॥ नराशंसस्य नरैः शंसनीयस्य अग्नेः यजतस्य यजनीयस्य महिमानं माहात्म्यं उपस्तोषाम उपेत्य स्तुमः । लेटचाडागमः । 'सिब्बहुळं लेटि' इति सिप् । एषां ऋत्विग्यजमानानां यज्ञैः यजनप्रकारैः स्तुमः । किमर्थमिति चेत् ? एवं स्तुते ते देवाः सुक्रतवः शोभनप्रज्ञानाः शुचयः शुद्धाः धियंधाः कर्मणां ज्ञानानां वा धातारः दातारः । दधातेः छान्द-

धियंधाः । स्वदन्तु देवा उभयानि हव्या । [4]आजुह्वान ईड्यो वन्द्यश्च । आयाह्यग्ने वसुभिस्सजोषाः । त्वं देवानामसि यह्व होता । स एनान् यक्षीषितो यजीयान् । [5]प्राचीनं बर्हिः प्रदिशा पृथिव्याः । वस्तोरस्या वृज्यते अग्रे अह्नाम् । व्युं

सः खलु । 'इच एकाचः' इत्यम्भावः । स्वदन्तु आस्वदन्तां उभयानि आज्यपुरोडाशलक्षणानि । सोमे चेत् सोमात्मकानि हव्या हवींषि । 'शेश्छन्दसि' इति लोपः ॥

[4]आजुह्वान इति ॥ आजुह्वानः देवानामाह्वानकुशलः । लिटः कानचि संप्रसारणम् । ईड्यः स्तुत्यः वन्द्यः नमस्कार्यश्च । 'ईडवन्द' इति उभयत्राद्युदात्तत्वम् । हे अग्ने! ईदृशस्त्वं आयाहि अस्मद्यज्ञं आगच्छ वसुभिः देवैः सजोषाः समानप्रीतिः त्वं खलु देवानां होता आह्वाता असि, हे यह्व! प्रभूत! स त्वं एनान् देवान् यक्षि यज । यजेर्लेटि शपो लुक् । इषितः अस्माभिरध्येषितः यजीयान् यष्टृतमः मनुष्ययष्टुः । 'तुश्छन्दसि' इति ईयसुन्प्रत्ययः ॥

[5]प्राचीनं बर्हिरिति ॥ प्राचीनं प्रागायतस्तरणम् । 'विभाषाऽञ्चेः' इति खः । बर्हिः दर्भमयः । पृथिव्याः प्रादिशा प्रथमदिशा प्राच्या परिनिष्पादितम् । यद्वा—प्रदिशा मन्त्रेण 'आच्छेत्ता'* इत्यनेन पृथिव्या अस्याः वेद्याः वस्तोः छादनार्थम् । 'छन्दस्युभयथा' इति

* सं. १-१-२.

प्रथते वितरं वरीयः । देवेभ्यो अदितये स्योनम् ॥ ८ ॥ [6]व्यचस्वतीरुर्विया विश्रयन्ताम् । पतिभ्यो न जनयश्शुम्भमानाः । देवीर्द्वारो बृहतीर्विश्वमिन्वाः । देवेभ्यो भवथ सुप्रायणाः । [7]आ सुष्वयन्ती यजते

---

तोसुन् । सार्वधातुकत्वादिडभावः । यद्वा—देवेभ्यो अदितये च वस्तोः वासार्थं प्राच्या दिशो वृज्यते आह्रियते । 'त आवहन्ति कवयः पुरस्तात्'* इति दर्शनात् । 'अथो यदेतदुक्त्वा यतः कुतश्चाहरति । तत्प्राच्या एव दिशो भवति'† इति ब्राह्मणम् । कदेत्याह—अग्रे अह्नां पूर्वेद्युः पूर्वाह्णे वा तच्च व्युप्रथते । उकारोऽवधारणे । विविधमेव प्रथते वितरं अतिशयेन विप्रथते । 'अमु च छन्दसि' इत्यमुप्रत्ययः । वरीयः उरुतरं देवार्थं अदित्यर्थं च यथा स्योनं सुखं भवति तथा वितरं विप्रथत एव ॥

[6]व्यचस्वतीरिति ॥ विविधगमनाः, गमागमवत्त्वात्, उर्विया उरु क्रियाविशेषणम् । 'इयाडियाच्' इतीयाजादेशः । विश्रयन्तां विविधावकाशा भवन्तु । पतिभ्यो जनयो न जाया इव मैथुने शुम्भमानाः शोभमानाः हे देवीः! देवनवत्यः! हे द्वारः! द्वारभूता अग्निविशेषाः! हे बृहतीः! बृहत्यः! हे विश्वमिन्वाः! विश्वस्य प्रीणयित्र्यः! । मीञ् प्रीणने । विश्वव्यापिन्यो वा । इवि व्याप्तौ । ता यूयं देवेभ्यो सुप्रायणाः सुखेन प्रापणीया भवथ भूयास्त ॥

[7]आसुष्वयन्तीति ॥ सुष्ठु आयन्त्यौ गच्छन्त्यौ अविच्छेदेन

---

* सं. १-१-२.  † ब्रा. ३-२-२.

उपाके । उषासानक्ता सदतां नि योनौ । दिव्ये योषणे बृहती सुरुक्मे । अधि श्रियꣳ शुक्रपिशं दधाने । [8]दैव्या होतारा प्रथमा सुवाचा । मिमाना यज्ञं मनुषो यजध्यै ॥ १ ॥ प्रचोदयन्ता विदथेषु

---

वर्तमाने । छान्दसष्ठकारलोपः । इ गतौ, भौवादिकः । यद्वा—शोभनं स्मयमाने । छान्दसं वर्णान्यत्वं, परस्मैपदं च । परस्परमुपजातहर्षस्मिते । यद्वा—स्वयन्त्यौ शोभया वर्धमाने । छान्दसं व्यञ्जनान्यत्यम् । सर्वत्र 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । यजते यजनीये उपाके प्रत्यासन्ने उपक्रान्ते वा जनानूक्षितुं उषासानक्ता अहोरात्रे दिव्ये दिविभवे योषणे योषिताविव प्रीणयित्र्यौ मिश्रयित्र्यौ वाऽभिमतस्य बृहती महत्यौ सुरुक्मे सुष्ठु दीप्ते श्रियं शुक्रपिशं निर्मलरूपम् । पिश अवयवे, क्विप् । आधिदधाने अधिकं धारयन्त्यौ ईदृश्यौ एते योनौ कारणभावे आनिषदताम् । छान्दसे लङि लृदित्वादङ् । लेटि वा छान्दससीदादेशः ॥

[8]दैव्या होतारेति ॥ दैव्यौ देवेषु भवौ । सर्वत्र 'सुपां सुलुक्' इत्याकारः । होतारौ प्रथमा प्रधानौ मनुष्यहोतुः । सुवाचा शोभनस्तोत्रौ यज्ञं मिमाना उत्सादयन्तौ मनुषो मनुष्यस्य यजमानस्य यजध्यै यजमानाय यजमानेन यष्टुम् । तुमर्थे अध्यैप्रत्ययः । मनुशब्दपर्यायो मनुश्शब्दः । प्रचोदयन्तौ सर्वान् ऋत्विजः स्वयं च कारू कर्तारौ करणकुशलौ विदथेषु यज्ञेषु । 'कृपावाजि'

**कारू । प्राचीनं ज्योतिः प्रदिशा दिशन्ता । [9]आ नो यज्ञं भारती तूयमेतु । इडा मनुष्वदिह चेतयन्ती । तिस्रो देवीर्बर्हिरेदꣳ स्योनम् । सरस्वती स्वपसस्सदन्तु । [10]य इमे द्यावापृथिवी जनित्री । रूपैरपिꣳशद्भुवनानि विश्वा । तमद्य होतरिषितो यजीयान् । देवं त्वष्टारमिह यक्षि विद्वान् ॥ १० ॥**

---

इत्युणप्रत्ययः । **प्राचीनं** प्राच्यां दिशि प्रणीतं **ज्योतिः** अग्निं **प्रदिशा** प्रकृष्टया दिशा मार्गेण **दिशन्ता** अतिसृजन्तौ एवंगुणकौ मदीयेऽपि यागे भवतामिति शेषः ॥

[9]**आ नो यज्ञमिति** ॥ **नः** अस्माकं **यज्ञं भारती** आदित्यप्रभाभिमानिनी देवी **तूयं** क्षिप्रं **एतु** आगच्छतु । **इडा** च अग्निप्रभाभिमानिनी देवी तूयं क्षिप्रं एत्वित्येव । कीदृशी ? **इह** अस्मिन् यज्ञे **मनुष्वत्** मनुष्यवत् **चेतयन्ती** इदं मयाऽस्योपकर्तव्यमिति निपुणो मनुष्य इव जानाना । **सरस्वती** च देवी एत्वित्येव । एवं एताः **तिस्रो** देव्यः **इदं स्योनं** सुखं **बर्हिः** आस्तीर्णं **आसादयन्तु** आसीदन्तु । लोटि शपो लुक् । **स्वपसः** शोभनकर्माणः । 'सोर्मनसी' इत्युत्तरपदान्तोदात्तत्वम् ॥

[10]**य इमे इति** ॥ **इमे द्यावापृथिव्यौ जनयित्री** जनयित्र्यौ प्रजानां यो **देवः रूपैः अपिंशत्** विचित्रभूतजातपेशले अकरोत्, **भुवनानि** च **विश्वानि** अपिंशदित्येव । **तं देवं त्वष्टारं अद्य**

[11]उपावसृजत्त्मन्या समञ्जन् । देवानां पाथ ऋतुथा हवींषि । वनस्पतिश्शमिता देवो अग्निः । स्वदन्तु हव्यं मधुना घृतेन । [12]सद्यो जातो व्यमिमीत यज्ञम् । अग्निर्देवानामभवत्पुरोगाः । अस्य

---

अस्मिन्नाहि इह कर्मणि यक्षि यज । लेटि शपो लुक् । हे होतः! त्वं अस्माभिः इषितः अध्येषितः यजीयान् यष्टृतमः मनुष्यहोतुः । यष्टृशब्दात् । 'तुश्छन्दसि' इति ईयसुन् प्रत्ययः। विद्वान् स्वाधिकारज्ञः ॥

[1]उपावसृजदिति ॥ त्मन्या आत्मनैव अन्यनिरपेक्ष एव । 'सुपां सुलुक्' इति तृतीयाया यादेशः । समञ्जन् सम्यक् प्रकाशयन् देवानां पाथः अन्नं पशुलक्षणं ऋतुथा ऋतावृतौ वसन्ते वसन्ते हवींषि च अन्यानि पृषदाज्यादीनि समञ्जन् । अयं वनस्पतिः अस्मभ्यं उपावसृजत् उपावसृजतु प्रथतु । छान्दसो लुङ् । किञ्चायं वनस्पतिः शमिता च देवः देव्याः शमिता अग्निश्च देव इदं हव्यं घृतेन मधुना मधुरसेन तद्व्यक्ततरसं स्वदन्तु स्वादूकुर्वन्तु ॥

[12]सद्यो जात इति ॥ सद्यो जातमात्र एव अयमग्निः यज्ञं व्यमिमीत उत्पादयति । अत एवायमग्निः देवानां पुरोगाः पुरोगामी प्रधानः अभवत् । 'जनसन' इति विट्प्रत्ययः, 'विड्वनोः' इत्यात्वम् । अस्य अग्नेः देवस्य होतुः ऋतस्य यज्ञस्य प्रदिशि प्राच्यां दिशि

होतुः प्रदिश्यृतस्यं वाचि। स्वाहाकृतꣳ हविरंदन्तु देवाः ॥ ११॥

यज्ञैस्स्योनं यजध्यै विद्वानष्टौ चं ॥ ३ ॥

अग्निर् होता नो अध्वरे । वाजी सन्परिणीयते । देवो देवेषु यज्ञियः । [2]परि त्रिविष्ट्यध्वरम् ।

स्थितस्याहवनीयस्य । यद्वा—प्रदिशि वाचि प्रादेशप्रमाणे आस्ये स्वाहाकृतं स्वाहाकारेण प्रक्षिप्तं हविः देवाः अदन्तु, आज्यादि पिबन्तु, पश्वादिकमश्नन्तु ॥

इति तैत्तिरीये ब्राह्मणे तृतीये षष्ठे पशुहौत्रे
तृतीयोऽनुवाकः.

[1] पर्यग्निकरणे मैत्रावरुणः प्रेषितो ब्रवीति—अग्निर्होता न इति ॥ तिस्रो गायत्र्यृचः ॥ अयमग्निः होता देवानां आह्वाता अध्वरे निमित्ते यज्ञसिद्धये वाजी अन्नवान् हविर्लक्षणस्यान्नस्य होता सन् शोभनः परिणीयते परितो नीयते । देवः दानादियुक्तः देवेषु मध्ये यज्ञियः यज्ञसम्पादनार्हः ॥

[2] परित्रिविष्टीति ॥ त्रिविष्टि त्रिव्याप्ति त्रिवेष्टनं वा परियाति परिगच्छति अयमग्निः अध्वरं अध्वरसाधनं पशुं रथीरिव रथवानिव शीघ्रं गच्छति । 'छन्दसीवनिपौ' इति मत्वर्थीय ईकारः ।

यात्यग्नी रथीरिव । आ देवेषु प्रयो दधत् । परि वाजपतिः कविः । अग्निर् हव्या न्यक्रमीत् । दधद्-रत्नानि दाशुषे ॥ १२ ॥

अग्निर् होता नो नव ॥ ४ ॥

[1]अजैदग्निः । असनद्वाजं नि । देवो देवेभ्यो हव्याऽवाट् । प्राञ्जोभिर् हिन्वानः । धेनाभिः क-

किमर्थं परियाति? देवेषु प्रय अन्नं हविर्लक्षणं आदधत् आदधात्विति, एवमर्थं परियाति ॥

[3]परिवाजपतिरिति ॥ व्याख्यातेयं 'इमामगृभ्णन्'* इत्यत्र ॥

इति तैत्तिरीयब्राह्मणे तृतीये षष्ठे पशुहौत्रे चतुर्थोऽनुवाकः.

---

[1] उपप्रेष्येति प्रतिष्ठितः स एव ब्रवीति—अजैदिति ॥ अजैत् जयतु संज्ञपनार्थं नीयमानस्य पशोः अग्रतः गच्छन् उल्मुकाख्यः अग्निः जयतु । छान्दसे लुङि सिचि वृद्धौ इडभावे रूपम् । हविस्संपादनसामर्थ्यवत्त्वं जयः । वाजं अन्नं हविर्लक्षणं न्यसनत् नियमेन संभजतु । देवो दानादियुक्तः देवेभ्यो हव्यानि अवाट् वहतु । लुङि हलन्तलक्षणा वृद्धिः । अञ्जोभिः ऋत्विग्भिः प्रहिन्वानः अग्रतः गच्छन् धेनाभिः प्रीणयित्रीभिः दीप्तिभिः धारणादिभिर्वा कल्पमानः संपद्यमानः यज्ञस्य यज्ञवतो यजमानस्य आयुः प्रतिरन् वर्धयन् एवंगुणो जयत्विति ॥

* सं. ४-१-२.

र्धमानः । यज्ञस्यायुः प्रतिरन् । [2]उप प्रेष्यं होतः। हव्या देवेभ्यः ॥ १३ ॥

अजैदष्टौ ॥ ५ ॥

[1]दैव्याश्शमितार उत मनुष्या आरभध्वम् । उप नयत मेध्या दुरः । आशासाना मेधपतिभ्यां मेधम् । प्रास्मा अग्निं भरत । स्तृणीत बर्हिः । अन्वेनं माता मन्यताम् । अनु पिता । अनु भ्रा-

[2]अथोपप्रेष्येति संप्रैषो मैत्रावरुणस्य ॥ हे होतः! उपप्रेष्य मया प्रेषितस्त्वं उपप्रेष्य ज्ञापय हव्या देवेभ्य इति ॥

इति पशुहौत्रे पञ्चमोऽनुवाकः.

---

[1]एवं मैत्रावरुणेन प्रेषितोऽन्वाह—दैव्याश्शमितार इति ॥ हे दैव्याः! देवेषु भवाः! देवात्मानः! शमितारः! उत अपि मनुष्याः! मनुष्यात्मानः! शमितारः! यूयं उभयेऽपि आरभध्वं वक्ष्यमाणमुपनयनादि कर्तुम् । 'शमिता यज्ञे' इति णिलोपो निपात्यते। उपनयत संनिधापयत मेध्याः मेधार्हाः दुरः द्वारः हविर्मार्गान् आशासानाः प्रार्थयमानाः यूयं मेधं यज्ञं मेधपतिभ्यां इन्द्राग्निभ्यां पत्नीयजमानार्थं वा । एवं 'अन्तरा चात्वालोत्करौ' इत्यनेन क्रमेण संज्ञपनस्थानमुपनीयमानाय अस्मै पशवे अग्निं उल्मुकाख्यं प्रभरत प्रहरत अग्रतो हरत श्रपणार्थम् । अथ स्थानं नीतस्या-

ता सगर्भ्यः । अनु सखा सयूथ्यः । [2]उदीचीनाꣳ अस्य पदो निधत्तात् ॥ १४ ॥ सूर्यं चक्षुर्गमयतात् । वातं प्राणमन्ववसृजतात् । दिशश्श्रोत्रम् । अन्तरिक्षमसुम् । पृथिवीꣳ शरीरम् । एकधाऽस्य त्वचमाच्छ्यतात् । पुरा नाभ्या अपिशसो वपामुत्खिदतात् । अन्तरेवोष्माणं वारयतात् । श्येनमस्य वक्षः कृणुतात् । प्रशसा बाहू ॥ १५ ॥ शला दोषणी । कश्यपेवाꣳसा । अच्छिद्रे श्रोणी । कवषो-

---

स्य बर्हिरुपाकरणयोरन्यतरत् स्तृणीत अधस्तादुपास्यत । अथ एनं संज्ञप्यमानं माता प्रथमं अनुमन्यतां मातुः प्राधान्यात्तदनुज्ञानं प्रथमं प्रार्थ्यते । पिता चानुमन्यताम् । भ्राता च सगर्भ्योऽनुमन्यतां समाने गर्भे वासस्सगर्भः । 'सगर्भसयूथसनुताद्यत्' सखा च सयूथ्यः, समाने यूथे भवः अनुमन्यताम् ॥

[2]एवमेतैरनुमतस्य स्थानं नीतस्य संज्ञप्यमानस्य पदः पादान् उदीचीनान् उदग्गतान् निधत्तात् निधत्त सारयत । 'तस्य तात्' इति तादादेशः । अस्य चक्षुः सूर्यं गमयतात् संज्ञपयतेत्युक्तं भवति । मारणस्य च न्याय्यतां प्रतिपादयितुमेवमुक्तम्, सर्वेषां म्रियमाणानां सूर्यमेव चक्षुर्गच्छति । तथा पितृमेधे—'सूर्यं ते चक्षुर्गच्छतु वातमात्मा'* इति । एवं वातादिष्वपि योज्यम् । अस्य

---

* तै. आ. ६-१.

रू स्त्रेकपर्णाऽऽष्ठीवन्तां । षड्विꣳशतिरस्य वङ्क्रयः । ता अनुष्ठ्योच्च्यावयतात् । गात्रंगात्रमस्यानूनं कृणुतात् । ऊवध्यगोहं पार्थिवं खनतात् । अस्ना र-

प्राणं वातमनु लक्षीकृत्य अवसृजतात् तमनु प्रवेशयत । दिशः अनु अस्य श्रोत्रमवसृजतेत्येव । ऐन्द्रियकस्य तेजस एकत्वात्, सर्वत्रैकवचनम् । अन्तरिक्षमनु अस्य असुं अवसृजत । पृथिवीमनु शरीरं अस्यावसृजत । एकधा एकया विधया अविच्छेदेन अस्य त्वचं आच्छयतात् आच्छिन्दत । छो छेदने, दैवादिक । नाभ्या अपिशसः छेदात् पूर्वमेव वपामुत्खिदतात् उद्धरत । शसु हिंसायाम्, संपदादिलक्षणः क्विप् खिद दैन्ये । अन्तरेव अस्य ऊष्माणं उच्छ्वासं वारयतात् पिहितास्यं संज्ञपयत । वपोद्धारणस्थानगतमूष्माणमिति केचित् । पच्यमानमूष्माणमित्यन्ये । पशुकुम्भ्या आस्यं स्थगयित्वा पचतीति । श्येनं श्येनाकृति अस्य वक्षः कृणुतात् कुरुत । प्रशसा प्रकृष्टच्छेदनौ बाहू कृणुतादित्येव । शसु हिंसायां क्विप् । शला शलाकाकारे । 'सुपां सुलुक्' इत्याकारः । दोषणी कुरुत । अंसा कश्यपा उभा वप्यंसौ कच्छपाकारौ कुरुत । श्रोणी उभे अपि अच्छिद्रे अन्यूने कुरुत । कवषा कवाटाकारौ ऊरू कुरुत । स एवाकारः । स्त्रेकपर्णा करवीरपत्राकारौ आष्ठीवन्तौ कुरुत । शुकपर्णाकाराविव्येके । अण्डाकारावित्यन्ये । स एवाकारः । अस्य षड्विंशतिर्वङ्क्रयः पर्शवो भवन्ति पार्श्वास्थीनि । ताः सर्वाः अनुष्ठ्या स्थानानुक्रमेण उच्च्यावयतात् उद्धरत । अनुक्रमेण स्थानमनुष्ठा । 'सुपां

क्षस्सꣳसृंजतात् । वनिष्ठुमंस्य मा रांविष्ट ॥ १६ ॥ उरूकं मन्यंमानाः । [3]नेद्वंस्तोके तनंये । रविंता रवंच्छमितारः । अध्रिगो शमीध्वम् । सुशमि श-

---

सुलुक्' इति तृतीयाया याडादेशः । गात्रंगात्रं सर्वं अस्य गात्रं अवदानीयं अनूनं अविकलं कुरुत । ऊवध्यगूहं पुरीषगूहनं पार्थिवं पृथिव्यां भवं अवटं खनतात् । अस्ना रुधिरेण । पद्दन्नादिना असृजो असन्भावः । रक्षः पिशितलोलुपं संसृजतात् संयोजयत तर्पयत । अस्य वनिष्ठुं गुदसदृशमार्द्रमांसं मा राविष्ट माच्छिन्दत । कपिलकादित्वाल्लत्वविकल्पः । उरूकं उरुं महान्तमिमं मन्यमानाः अवगच्छन्तः अल्पं मा कार्ष्ट । केचिदाहुः—उलूकाकारं मन्यमानाः मा राविष्ट शब्दनं मा कार्ष्ट उलूकशब्दवदमङ्गल्योऽस्य शब्द इति बोधयितुं एवमुक्तम् । पूर्ववल्लत्वविकल्पः ॥

[3]एवं कुर्वतां युष्माकं लाभः श्रूयतामित्याह—नेत् नैव युष्माकं संबन्धिनि तोके पुत्रे तनये तत्पुत्रे च निमित्ते कश्चिदपि रविता शब्दयिता रोदिता रवत् रूयात् मैव रोदीत् अस्य छेदनं शब्दनं वा तादृशहेतुस्स्यादिति दर्शितं भवति । तत्परिहारार्थं मा राविष्टेति । रौतेर्लेटि शपो लुक् अडागमः 'निपातैर्यद्यत्' इति निघाताभावः । हे शमितारः! दैव्या मानुषाश्च ! हे च अध्रिगो ! यूयं इमं यथोक्तगुणकं पशुं शमीध्वं विशसनादिना संस्कुरुध्वम् । लेटि छान्दसश्शपो लुक् इडागमश्च । इटो वा दीर्घत्वम् । 'सुशमी शमीष्व' इति दर्शनात् । अध्रिगु-

मीध्वम् । शमीध्वमंध्रिगो । ४अध्रिगुश्चापापश्च । उभौ देवानाꣳ शमितारौ । ताविमं पशुꣳ श्रपयतां प्रविद्वाꣳसौ । यथायथाऽस्य श्रपणं तथातथा॥

धत्ताद्वाहू मा राविष्ट तथातथा ॥६॥

नाम देवानां शमिता तस्य पुनर्वचनं प्राधान्यार्थम् । आध्रियन्ते गावोऽस्मिन्नित्यध्रिगुः अनुक्रान्तानां संशासनशब्दानामाधार इत्यर्थः । इदमेवास्य प्राधान्यं यदस्मिन् पूर्वमाध्रियन्ते । इदानीं विशेष विधानार्थमाह—सुशमि सुष्ठु शाम्यतीति सुशमि । 'शमित्यष्टाभ्यः' इति घिनुणप्रत्ययः । शोभनत्वं च शास्त्रविहितत्वं शमीध्वमिति तृतीयं वचनं आदरार्थं अवधारणार्थं च, शमीध्वमेव न गुणकल्पनाऽङ्गीकार्येति । अध्रिगोः पुनरामन्त्रणं संशासनाधारत्वात् त्वयाऽत्र विशेषेणावधातव्यमिति ख्यापनार्थं—शमीध्वं सर्वे यूयं, हे अध्रिगो ! त्वं तु विशेषेणावधत्स्वेति ॥

४कः पुनरध्रिगोः विशेष इत्याह—अध्रिगुश्चापापश्च द्वाविमौ महानुभावौ देवानां शमितारौ, तस्मात् तावेवागत्य इमं पशुं श्रपयतां संस्कुरुतां प्रविद्वांसौ प्रकर्षेण श्रपणज्ञौ तस्मात् यथायथाऽस्य गात्राणां श्रपणं येनयेन प्रकारेण युज्यते तथा तथा तेनतेन प्रकारेण प्रविद्वांसौ तावेव श्रपयताम् ॥

इति तैत्तिरीयब्राह्मणे तृतीये षष्ठे पशुहौत्रे

षष्ठोऽनुवाकः.

[1]जुषस्वं सप्रथस्तमम् । वचो देवप्सरस्तमम् । हव्या जुह्वान आसनि । [2]इमं नो यज्ञममृतेषु धेहि । इमा हव्या जातवेदो जुषस्व । स्तोकानामग्ने मेदसो घृतस्य । होतः प्राशान प्रथमो निषद्यं ।

---

[1]स्तोकेभ्यः प्रेषितो मैत्रावरुणः प्रतिपद्यते—जुषस्वेति गायत्री ॥ हे अग्ने ! जुषस्व सेवस्व सप्रथस्तमं अतिशयेन प्रथनसहितं विस्तीर्णतमं मदीयं वचः स्तुतिलक्षणं देवप्सरस्तमं देवानां प्रीणयितृतमम् । प्सृ प्रीतौ, 'गतिकारकयोरपि' इत्यसुन्, पूर्वपदप्रकृतिस्वरत्वं, व्यञ्जनयोः स्थानविपर्ययः । किं मया कार्यमिति चेत् ? हव्यानि हवींषि मे स्तोकान् आसनि आस्ये जुह्वानः प्रक्षिपन् ग्रसमानः आस्ये कुरु । एते स्तोकाः मा वृथा पतन्निति । लटि व्यत्ययेनात्मनेपदं 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । पद्दन्नादिना आस्यस्यासन्भावः ॥

[2]इमं न इति ॥ अग्निगो ! हे अग्ने ! इमं अस्मदीयं यज्ञं अमृतेषु देवेषु धेहि स्थापय । इमानि च हव्यानि स्तोकादीनि जुषस्व सेवस्व । हे जातवेदः ! जातानां वेदितः ! । किञ्च—स्तोकानां बिन्दूनां मेदसो वपाया घृतस्य च त्वमेव प्रथमः प्राशान प्रकर्षेणाशान । यद्वा—प्रथमः प्रधानः प्राशान प्रथममशान निषद्य आसित्वा हे होतः ! देवानामाह्वातः ! अग्ने ! । सुहितार्थयोगे षष्ठी ज्ञापिता ॥

[3]घृतवन्तः पावक ते। स्तोकाश्चोतन्ति मेदसः। स्वधर्मं देववीतये ॥१८॥ श्रेष्ठं नो धेहि वार्यम्। [4]तुभ्यꣳ स्तोका घृतश्चुतः। अग्ने विप्राय सन्त्य। ऋषिश्श्रेष्ठस्समिध्यसे। यज्ञस्य प्राविता भव। [5]तुभ्यꣳ श्चोतन्त्यध्रिगो शचीवः। स्तोकासो अग्ने मे-

[3]घृतवन्त इति द्वे अनुष्टुभौ ॥ हे पावक! शोधक! ते त्वदर्थं घृतवन्तः स्तोका मेदसो वपायाः चोतन्ति क्षरन्ति तत्रास्माकं स्वधर्मं कुलोचितं यागाद्यविच्छेदलक्षणं वा। यदाह—देववीतय इति देववीतिः यज्ञः तदर्थं अस्मदीयं स्वधर्मं श्रेष्ठं प्रशस्यतमं वार्यं वरणीयं धेहि देहि। 'ईडवन्द' इत्याद्युदात्तत्वम्। देववीतिशब्दो दासीभारादिः ॥

[4]तुभ्यं स्तोका इति ॥ हे अग्ने! तुभ्यं विप्राय मेधाविने एते घृतश्चुतः घृतक्षरणाः स्तोकाः त्वदर्थेनैवोत्पद्यन्ते। हे सन्त्य! सनेन भव!। षणु दाने, 'क्तिच्क्तौ च' इति क्तिचि सन्तिः, 'न क्तिचि दीर्घश्च' इति दीर्घनलोपाभावः। 'भवे छन्दसि' इति यत्। 'तत्र साधुः' इति वा। कस्तव विशेष इति चेत्? त्वं हि ऋषिः द्रष्टा श्रेष्ठः प्रशस्यतमश्च अस्माभिः समिध्यसे तस्मादिमान् स्तोकान् प्राश्यास्य यज्ञस्य प्राविता प्रकृष्टो रक्षिता भव ॥

[5]तुभ्यं श्चोतन्तीत्युपरिष्टात्ज्योतिस्त्रिष्टुप् ॥ हे अग्ने! अध्रिगो! अधृतरश्मे! शचीवः! कर्मवन्! 'मतुवसोः' इति रुत्वम्।

दसो घृतस्य॑ । क॒वि॒श॒स्तो बृ॒ह॒ता भा॒नु॒नाऽऽगाः॑ । ह॒व्या जु॑षस्व मेधिर । ⁶ओजि॑ष्ठं ते मध्य॒तो मेद॒ उद्धृ॑तम् । प्र ते॑ व॒यं द॑दामहे । श्चोत॑न्ति ते वसो स्तो॒का अधि॑ त्व॒चि । प्रति॒ तान्दे॑व॒शो वि॑हि ॥११

दे॒ववी॑तय॒ उद्धृ॑त॒ त्रीणि॑ च ॥ ७॥

तुभ्यं त्वदर्थमेवैते स्तोकासः मेदसो घृतस्य बिन्दवः श्चोतन्ति अतस्त्वं कविशस्तः मेधाविभिः स्तुतः । प्रवृद्धादित्वादन्तोदात्तत्वम् । यद्वा—कवीनां मध्ये शस्तः । तेन 'तृतीया कर्मणि' इति न प्रवर्तते । बृहता भानुना तेजसा इत्थंभूतस्सन् आगाः आगच्छ । छान्दसो लुङ् । एत्य च हव्या हवींषि स्तोकलक्षणानि जुषस्व । हे मेधिर ! मेधावन् ! यजनीय ! वा ॥

⁶ओजिष्ठं त इति सतःपङ्क्तिः ॥ ओजिष्ठं बलवत्तमं ते त्वदर्थं पशोः मध्यतः मेदः उद्धृतं उद्धृतं तस्मात् ते तुभ्यमेव वयं प्रददामहे । दद दाने, भौवादिकः । किञ्चान्यदप्युच्यसे—हे वसो ! देवानामपि वासयितः ! ते तव त्वचि शरीरे ज्वालासु अधि उपरि स्तोकाः श्चोतन्ति क्षरन्ति तान् सर्वान् देवशः देवंदेवंप्रति सर्वदेवार्थं विहि पिब । छान्दसं ह्रस्वत्वम् । यद्वा—देवशो देवाय देवाय स्तोकान् प्रतिविहि प्रत्येकं पिब । 'संख्यैकवचनाच्च' इति शस् ॥

इति तैत्तिरीयब्राह्मणे तृतीये षष्ठे सप्तमोऽनुवाकः.

[1]आ वृ॑त्र॒हणा॑ वृत्र॒हभि॒श्शुष्मैः॑। इन्द्र॑ या॒तं नमो॑भिरग्ने अ॒र्वाक्। यु॒वꣳ राधो॑भि॒रक॑वेभिरिन्द्र। अग्ने॑ अ॒स्मे भ॑वतमुत्त॒मेभिः॑। [2]होता॑ यक्षदिन्द्रा॒ग्नी। छाग॑स्य व॒पाया॒ मेद॑सः। जु॒षेताꣳ ह॒विः। होत॒र्यज॑। [3]वि ह्यख्य॒न्मन॑सा॒ वस्य॑ इ॒च्छन्। इ॒न्द्रा॒ग्नी ज्ञास

[1]वपापुरोडाशस्विष्टकृतां पुरोरुक्प्रैषा मैत्रावरुणस्य—आ वृत्रहणेति त्रिष्टुप् ॥ हे **वृत्रहणा**! वृत्रस्य पापादेः हन्तारौ! हे इन्द्र! हे अग्ने! युवां **आयातं** आगच्छतं **अर्वाक्** अस्मदाभिमुख्येन **नमोभिः** अस्मदीयैर्नमस्कारैः हविर्लक्षणैः अन्नैर्वा हेतुभिः आयातं, **वृत्रहभिः** पापादिहननसमर्थैः **शुष्मैः** बलैः इत्थंभूतौ युवाम्। किञ्च—हे इन्द्र! हे अग्ने! **युवं** युवां **राधोभिः** अस्मभ्यं देयैः अन्नैः **अस्मे** अस्मासु **भवतम्**। कीदृशैरिति चेत्? **अकवेभिः** अकुत्सितैः कुत्सितवाचि शब्दान्तरमेवेदं, **उत्तमेभिः** उत्तमैः इत्थंभूतौ भवतम्। मा भूतं निकृष्टैः देयैः। उतमशब्दः उञ्छादित्वादन्तोदात्तः ॥

[2]**होता यक्षदित्यादि** ॥ गतम्। **होता** दैव्यः **यक्षत्** यजतु। **इन्द्राग्नी** इन्द्रश्च अग्निश्च 'नोत्तरपदे अनुदात्तादौ' इति वृद्धात्तत्वाभावः। यजेर्लेटि सिप्प्रत्ययः। तथा तौ देवौ छागस्य संबन्धिन्या **वपायाः मेदसः** स्नेहवत्याः यद्धवीरूपं तत् **जुषेतां** सेवेताम्। हे **होतः**! मानुष! त्वमपि **यज** ॥

[3]**वि ह्यख्यदिति** ॥ हे **इन्द्राग्नी**! यो हि **मनसा वस्यः** वसयिः

उत वा सजातान् ॥ २० ॥ नान्या युवत्प्रमतिरस्ति मह्यम् । स वां धियं वाजयन्तीमतक्षम् । [3]होता यक्षदिन्द्राग्नी । पुरोडाशस्य जुषेताꣳ हविः । होतर्यज । [4]त्वामीडते अजिरं दूत्याय । हविष्मन्त-

वरिष्ठं धनमिच्छन् भवति उत वा अपि वा यः सजातान् समानजन्मनो बन्धून् इच्छन् मनसा भवति, स हि युवाभ्यामेव व्यख्यत् विचष्टे प्रकाशयति अभिप्रायं नान्यस्मै कस्मैचित । छान्दसे लुङि 'अस्यति' इत्यादिना अङ्, 'हि च' इति निघाताभावः । तद्युवयोः महाभाग्यमपि ब्रासे जाने । लेटि उत्तमैकवचने, शपो लुक्, 'सिब्बहुळं लेटि' इति सिप् । यस्मादेवं तस्मात् युवत् युवाभ्यां अन्या मह्यं मम प्रमतिः प्रकृष्टो मन्तव्यो नास्ति । कर्मणि क्तिनि 'क्तादौ च' इति गतेः प्रकृतिस्वरत्वम् । युवामेव प्रकृष्टौ मन्ये । सः अहं तथा जानन् तथैव च मन्यमानः वां युवयोरेव सकाशात् वाजयन्तीं अन्नमिच्छन्तीं धियं प्रज्ञां कर्म अतक्षं तक्षामि संस्कृत्योत्पादयामि । यद्वा—युवयोरर्थाय धियं वाजयन्तीं हविर्लक्षणं अन्नं इच्छन्तीं अतक्षं सदा उत्पादयेयम् । वाजशब्दात् क्यचि 'न छन्दस्यपुत्रस्य' इतीत्वाभावः ॥

[3]होता यक्षदिति ॥ गतम् । पुरोडाशस्येति विशेषः ॥

[4]त्वामीडत इति त्रिष्टुप् ॥ हे अग्ने ! त्वां अजिरं अजरकुशलं गमनागमनसमर्थं ईडते स्तुवन्ति याचन्ते वा सर्वे मा-

स्सदमिन्मानुषासः । यस्य देवैरासदो बर्हिरग्ने । अहान्यस्मै सुदिना भवन्तु । [5]होता यक्षदग्निम् । पुरोडाशस्य जुषताꣳ हविः । होतर्यज ॥ २१ ॥

सजातानग्निं द्वे च ॥ ८ ॥

[1]गीर्भिर्विप्रः प्रमतिमिच्छमानः । ईट्टे रयिं य-

---

नुषासः मानुषा अपि हविष्मन्तस्सन्तः सदमित् सदैव दूत्याय दूतकर्मणे भवत्ययं देवाह्वाता । 'दूतवणिग्भ्यां' इति यः । अभीष्टोऽर्थः तर्ह्युच्यतामिति चेत् ? श्रूयताम्—हे अग्ने! यस्य यजमानस्य बर्हिः यज्ञं देवैस्सह त्वं आसदः आसीदसि अधितिष्ठसि । छान्दसे लुङि ऌदितादङ् । अस्मै यजमानाय अहानि दिनानि सुदिना शोभनदिनानि सुप्रातस्त्ववन्ति सम्यक् निर्वर्तितयागानि भवन्तु ॥

[5]होता यक्षदित्यादि ॥ गतम् । अग्निः स्विष्टकृत् पुरोडाशस्य जुषतामिति विशेषः ॥

इति तैत्तिरीये ब्राह्मणे तृतीये षष्ठे प्रपाठके पशुहौत्रे अष्टमोऽनुवाकः.

---

[1]अथ तेषामेव च वपापुरोडाशस्विष्टकृतां याज्याः—गीर्भिर्विप्र इति तिस्रस्त्रिष्टुभः ॥ हे इन्द्राग्नी ! वृत्रहणा ! पापादेः हन्तारौ ! सुवज्रा ! शोभनायुधौ ! अयं विप्रः यजमानः युवां गीर्भिरीट्टे स्तौति याचते वा । कीदृशः? प्रमतिं प्रकर्षेण मन्तव्यं यशसं यशस्विनं

**शसं॑ पूर्व॒भाज॑म् । इन्द्रा॑ग्नी वृत्रहणा सुवज्रा । प्र॒ णो नव्ये॑भिस्तिरतं दे॒ष्णैः । [१]माच्छे॑द्म र॒श्मीँ॑रिति॒ नाध॑मानाः । पि॒तृ॒णाँ॑ शक्ती॑रनु॒ यच्छ॑मानाः । इ॒न्द्रा॒ग्निभ्या॒ं कं वृष॑णो मदन्ति । ता ह्यद्री॑ धि॒ष-**

न त्वयशस्यम् । मत्वर्थीयो लुप्यते । तेन तद्विषयत्वाभावात् आद्यु दात्तत्वाभावः । अर्शआदिलक्षणे वाऽचि मध्योदात्तत्वं छान्दसम् । **पूर्वभाजं** पूर्वानस्य पुरुषान् यादृगभजत तादृशं **रयिं** धनं **इच्छमानः** लब्धुमिच्छन् युवां ईट्टे स्तौति । युवामपि तादृशं धनं अस्मभ्यं **प्रतिरतं** प्रवर्धयतं **नव्येभिः** नवतरैः अपूर्वैः नवित व्यैर्वा **देष्णैः** दानप्रकारैः ॥

[१]**माच्छेद्मेति** ॥ वयं मा **छेद्म** मा च्छिन्द्म **रश्मीन्** यमनानि कर्माणि इष्टापूर्तलक्षणानि । छान्दसस्सिचो लुक्, गुणश्च । **इति नाधमानाः** एवमुक्तमर्थं त्वां याचमानाः। 'दीर्घात्' इति संहितायां रुत्वानुनासिकौ । **पितृणां** अस्मत्पूर्वपुरुषाणां **शक्तीः** कर्माणि यागादीनि **अनुयच्छमानाः** अनुगन्तुमुद्यच्छमानाः उत्तिष्ठमाना माच्छेद्मेति । इदानीमिन्द्राग्नी ममापीदृशाभिमतावाप्तये स्तोतव्यावित्याह पञ्चमीसामर्थ्यादन्यमिति लभ्यते । **इन्द्राग्निभ्यामन्यं कं वृषणः** विद्वद्वृषभाः । 'वा पूर्वस्य' इति दीर्घाभावः । **मदन्ति** स्तुवन्ति । मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु, नुमभावश्छान्दसः परस्मैपदं च । यद्वा—मदन्ति तर्पयन्ति मद तृप्तियोगे । कोऽनयोर्विशेष इत्याह—तौ खलु **अद्री** महान्तौ । यद्वा—आदरणीयौ केनाप्य-

णाया उपस्थे । [3]अग्निꣳ सुदीतिꣳ सुदृशं गृणन्तः। नमस्यामस्त्वेड्यं जातवेदः। त्वां दूतमरतिꣳ हव्यवाहम् । देवा अकृण्वन्नमृतस्य नाभिम् ॥ २२॥

जातवेदो द्वे च ॥ ९ ॥

[1]त्वꣳ ह्यग्ने प्रथमो मनोता । अस्या धियो अ-

नभिभाव्यौ धिषणायाः बुद्धेः उपस्थे उत्सङ्गे स्थितौ अर्थिनां बुद्धिषु स्थितौ महात्मानाविति यावत् ॥

[3]अग्निं सुदीतिमिति ॥ हे जातवेदाः! जातानां वेदितः ! त्वां अग्निं अङ्गनादिगुणं सुदीतिं शोभनदानं सुदृशं सुष्ठु द्रष्टारं श्रेयसां ईड्यं सर्वैस्स्तुत्यं गृणन्तः स्तुवन्तः वयं नमस्यामः परिचरामः । त्वां हि दूतं हितकारिणं अरतिं पर्याप्तमतिं अरणीयं वा हव्यवाहं हविषां वोढारं त्वां देवा अकृण्वन् अकुर्वन् अमृतस्य अमरणस्य नाभिं नहनस्थानं उदकस्य वा कारणं यज्ञद्वारेण ॥

इति तैत्तिरीये ब्राह्मणे तृतीये षष्ठे नवमोऽनुवाकः.

---

[1]मनोतायै प्रेषितोऽन्वाह—त्वं ह्यग्ने इति ॥ त्रैष्टुभः सर्वोऽनुवाकः । हे अग्ने! त्वमेव प्रथमः मुख्यः मनोता मनसा ऊता प्रार्थिता रक्षिता वा देवैः मनसा प्रार्थिता अजा मनोता तदर्थिनां प्रथमः त्वं तद्बुद्धिरभेद उपचर्यते। स त्वं अस्याः

**भवो दस्म होता । त्व॑ सीं वृषन्नकृणोर्दुष्टरीतु । सहो विश्वस्मै सहसे सहध्यै । [2]अधा होता न्यसीदो यजीयान् । इडस्पद इषयन्नीड्यस्सन् । तं त्वा नरः प्रथमं देवयन्तः । महो राये चितयन्तो**

---

धियः कर्मणः **होता** साधु यष्टा **अभवः** भव, त्वच्छेषः अन्यैः भुज्यते हे **दस्म**! दमयितः! तत्तत्कर्मकुशल!। किञ्च—हे **वृषन्**! कामानां वर्षितः! **त्वमेव दुष्टरीतु** दुःखेन तरितव्यं निर्वर्त्यं कर्म **अकृणोः सीं** सर्वतः साकल्येन, अवधारणे वा, त्वमेवाकृणोरिति । तरतेस्तुः, छान्दस ईडागमः। दुस्तरं वा जगत् त्वमेव यागद्वारेण करोषि। त्वं हि **सहः** बलं **विश्वस्मै सहसे** अभिभवित्रे बलाय **सहध्यै** अभिभवितुं यद्विश्वमभिभवति तस्याभिभावुकं बलं त्वमसि । तुमर्थे अध्यैप्रत्ययः । तस्मात् त्वमेव होता भवेति ॥

[2]**अधा होतेति** ॥ अथानन्तरमिदानीं **होता** भूत्वा **न्यसीदः** नियमेन सीद, छान्दसो लुङ् । **यजीयान्** यष्टृतरः मानुषात् होतुः । क? **इडस्पदे** वेद्याः स्थाने उत्तरनाभौ अन्नस्य वा उत्पत्तिस्थाने वेद्यामेव **इषयन्** इषमन्नं सर्वस्य कुर्वन् उत्पादयन् । 'तत्करोति' इति णिच्, 'प्रकृत्यैकाच्' इति प्रकृतिभावः । **ईड्यः** स्तुत्यस्सन् निषीद । यस्मात् **नरः** ऋत्विग्यजमानाः तं तादृशं त्वामेव **प्रथमं** प्रधानं **चितयन्तः** बुद्ध्यमानाः **देवयन्तः** देवान्यष्टुमिच्छन्तः तं त्वामेव **अनुग्मन्**

अनु॑ ग्मन् । [3]वृ॒तेव॒ यन्तं॑ ब॒हुभि॑र्वस॒व्यैः॑ । त्वे र॒यिं जा॑गृ॒वाꣳसो॒ अनु॑ ग्मन् ॥ २३ ॥ रुशं॑न्तम॒ग्निं द॑र्श॒तं बृ॒हन्त॑म् । व॒पाव॑न्तं वि॒श्वहा॑ दीदि॒वाꣳसं॑म् । [4]प॒दं दे॒वस्य॒ नम॑सा वि॒यन्तः॑ । श्र॒व॒स्यव॒श्श्रव॑ आप॒-

---

अनुगच्छन्ति याचितुं भजन्ते । छान्दसे लुङि 'मन्त्रे घस' इति च्लेर्लुक् । चित संचेतने, चुरादिरदन्तः । महो राये महते धनाय अनुग्मन् । यद्वा—महते धनाय चितयन्तः त्वामेव अनुग्मन्निति । मह इति षष्ठी चतुर्थ्यर्थे ॥

[3]वृतेव यन्तमिति ॥ वृता वर्तन्या पथा यन्तं गच्छन्तं बहुभिः वसव्यैः वर्धनसमूहैः सहितं राजानमिव त्वे त्वां रयिं रयिवन्तं महाधनम् । मत्वर्थीयो लुप्यते । युष्मच्छब्दात् द्वितीयायाः 'सुपां सुलुक्' इति शे आदेशः । जागृवांसः प्रबुद्धाः जनाः अनुग्मन् अनुगच्छन्ति । पूर्ववत् च्लेर्लुक् । अग्निर्विशेष्यते—रुशन्तं अमित्रान् हिंसन्तम् । रुश रिश हिंसायाम्, अग्निं अङ्गनादिगुणयुक्तं दर्शतं दर्शनीयं बृहन्तं महान्तं वपावन्तं वपादिभिः हविर्भिः तद्वन्तं विश्वहा विश्वान्यहानि । सवर्णदीर्घस्य छान्दसं ह्रस्वत्वम् । दीदिवांसं दीप्यमानम् । दीदितिः दीप्तिकर्मा छान्दसः ॥

[4]पदमिति ॥ देवस्य तत्र पदं स्थानं अग्निहोत्रादि नमसा अनेन हविषा इत्थंभूतं वियन्तः विशेषेण गच्छन्तः श्रवस्यवः श्रवोऽन्नं यशो वा इच्छन्तः । क्यजन्तात् 'क्याच्छन्दसि' इति

न्नमृक्तम् । नामानि चिद्दधिरे यज्ञियानि । भद्रायां ते रणयन्त संदृष्टौ । [5]त्वां वर्धन्ति क्षितयः पृथिव्याम् । त्वꣳ राय उभयासो जनानाम् । त्वं त्राता तरणे चेत्यो भूः । पिता माता सदमिन्मानुषा-

---

उप्रत्ययः । तदेव श्रव आपन् आप्नुवन्ति । छान्दसो लङ् । अमृक्तं अमृदितं अमृष्टं वा । छान्दसो व्यञ्जनविकारः । किं बहुना? तव नामान्यपि अग्न्यादीनि ये दधिरे धारयन्ति यज्ञियानि यज्ञार्हाणि यज्ञप्रतिपादनपरान्वा ग्रन्थान् त्वत्संकीर्तनपराण्येव धारयन्ति तेऽपि तव भद्रायां कल्याण्यां संदृष्टौ रणयन्त रमयन्ति । स्वार्थिको णिच् । किं पुनस्तव पदं वियन्त इति । रमेरन्त्यविकारश्छान्दसः ॥

[5]त्वां वर्धन्तीत्यादि ॥ स्तुतिभिः हविर्भिर्वा क्षितयः मनुष्याः पृथिव्यां वर्तमानाः । 'छन्दस्युभयथा' इति शप आर्धधातुकत्वात् णिलोपः । त्वमेव जनानां जीवतां रायः धनानि । तद्धेतुत्वात्ताच्छब्द्यम् । उभयासः दिव्याः पार्थिवाश्च । यद्वा—जङ्गमाः स्थावराश्च । अत एव त्वमेव त्राता रक्षिता चेत्यः स्मर्तव्यः भूः भवसि । यद्वा—त्राता च चेत्यश्च त्वमेव । हे तरणे! दुर्गाणां तारणकुशल! दुर्गाणां तरणे कर्तव्य इति केचित् । तदानीं लिट्स्वरेण भाव्यम् । किञ्च—त्वमेव पिता माता च । मानुषाणां तत्तत्कार्यकरणात्, सदमित् सदैव । सदमिदिति निपात आद्युदात्तः ॥

णाम् ॥ २४ ॥ [6]स पर्येण्यस्स प्रियो विक्ष्वग्निः । होता मन्द्रो निषसादा यजीयान् । तं त्वा वयं दम आ दीदिवाꣳसम् । उपज्ञुबाधो नमसा सदेम । [7]तं त्वा वयꣳ सुधियो नव्यमग्ने । सुम्नायव ईमहे देवयन्तः । त्वं विशो अनयो दीद्यानः । दिवो अग्ने

---

[6]स पर्येण्य इति ॥ सः त्वं पर्येण्यः सर्वात्मना गन्तव्यः । इण औणादिको ण्यप्रत्ययः । यद्वा—पर्येण्यः, छान्दसो वर्णविकारः । सपर्यतेः कण्ड्वादियगन्तादेण्य इत्यपरम्, तदानीं स इत्यस्योदात्तत्वं दुर्लभम् । स एव त्वं प्रियः प्रीणयिता भूत्वा अङ्गनादिगुणस्सन् विक्षु प्रजासु निषसाद निषीदसि । पुरुषव्यत्ययः । मन्द्रः स्वयं च तृप्यन् होता आह्वाता यजीयान् यष्टृतरः । यद्वा—स एव खलु होता पर्येण्यः प्रियश्च यो यष्टृतरः मन्द्रश्च भूत्वा विक्षु निषीदसि तस्मात् तं तादृशं त्वां दमे यज्ञगृहे दीदिवांसं दीप्यमानं नमसा हविषा प्रणिपातेन वा आसदेम आसीदामः भजामहे । लिङ्याशिष्यङ् । उपज्ञुबाधः उपजायमानबाधाः, बाधेर्भावे क्विप् । कर्मणि वा । संसारेण बाध्यमाना बाधाः उपज्ञु उपज्ञातं सुप्रसिद्धम् । छान्दसे स्व[र]रूपे ॥

[7]तं त्वा वयमिति ॥ हे अग्ने! तादृशं त्वां नव्यं स्तुत्यं नवं वा वयं सुधियः शोभनप्रज्ञाः शोभनकर्माणो वा सुम्नायवः सुखमिच्छन्तः तदर्थं देवान् प्राप्तुमिच्छन्तः ईमहे याचामहे भजामहे वा । त्वं खलु दीद्यानः विशः मनुष्यान् अनयः नयसि

बृहता रोचनेन । [8]विशां कविं विश्पतिꣳ शश्वतीनाम् । नितोशनं वृषभं चर्षणीनाम् ॥ २५॥ प्रेतीषणिमिषयन्तं पावकम् । राजन्तमग्निं यजतꣳ रयीणाम् । [9]सो अग्न ईजे शशमे च मर्तः । यस्त आनट्थ्समिधा हव्यदातिम्। य आहुतिं परि वेदा

प्रापयसि दिवः द्युलोकान् इष्टान् । छान्दसो लङ् । हे अग्ने! अङ्गनादिगुण! रोचनेन दीप्त्या इत्थंभूतः ॥

[8]विशां कविमिति ॥ विशां मनुष्याणां शश्वतीनां नित्यप्रवृत्तानां अविच्छिन्नसन्ततीनां विश्पतिं नित्यस्वामिनम् । व्यासेन बहुत्वं प्रतिपाद्यते, समासेन नित्यसम्बन्धादि । कविं क्रान्तदर्शनं नितोशनं हन्तारममित्राणाम् । वृषभं वर्षितारं कामानाम् । चर्षणीनां मनुष्याणाम् । प्रकृष्टा इतिः गतिः प्रेतिः तस्याः सनितारं दातारम् । 'छन्दसि वनसन' इति इन्प्रत्ययः, सुषामादित्वात् षत्वम्, पूर्वपदप्रकृतिस्वरत्वं छान्दसम् । इषयन्तं अन्नं कुर्वाणम् । 'तत्करोति' इति णिच्, 'प्रकृत्यैकाच्' इति प्रकृतिभावः । पावकं शोधकं राजन्तं दीप्यमानं अग्निं अङ्गनादिगुणं यजतं सङ्गमयितारं रयीणां धनानां तं त्वां ईमहे इति प्रकृतेनान्वीयते ॥

[9]सो अग्न इति ॥ हे अग्ने! स एव ईजे यजते । छान्दसो लिट् । स एव शशमे शाम्यति च शान्तिस्सुखं सर्वयागफलम् । मर्तः मरणधर्मा यो मनुष्यः ते त्वदर्थं हव्यदातिं यज्ञं, अधिकरणे क्तिन् । समिधा समिद्भिः सहितं आनट् प्राप्नोति । अश्नोते-

**नमो॑भिः । विश्वेथ्स वा॒मा द॑धते॒ त्वोतः॑ । [10]अ॒स्मा उ॑ ते॒ महि॑ म॒हे वि॑धेम । नमो॑भिरग्ने स॒मिधो॒त ह॒व्यैः । वेदी॑ सूनो सहसो गी॒र्भिरु॒क्थैः । आ ते॑ भ॒द्राया॑ꣳ सु॒म॒तौ य॑तेम ॥ २६ ॥ [11]आ यस्त॑त॒न्थ॒**

लेङि व्यत्ययेन श्नम्, परस्मैपदं च, नशेर्वा गतिकर्मणो लङ् । किंच— यः ते त्वदर्थं **आहुतिं** आहुतिमात्रमपि **नमोभिः** नमस्कारैः सहितां **परिवेद** सर्वतो जानाति सर्वस्य अन्नस्य अंशमस्मै होतव्यं जानाति । **सः** मनुष्यः **त्वोतः** त्वया रक्षितः **विश्वेत्** विश्वान्येव **वामा** वामानि वननीयानि धनानि **दधते** धत्ते । वचनव्यत्ययः, लेटि वा अडागमः ॥

[10]अस्मा इति ॥ **अस्मा उ** अस्मा एव एवंगुणाय **ते** तुभ्यं **महे** महते **विधेम** परिचरेम । कर्मणि षष्ठी । **महि** महत् **नमोभिः** नमस्कारैः **समिधा** समिद्भिः **उत** अपि च **हव्यैः** हविर्भिः **वेदी** वेद्याम्, 'सुपां सुलुक्' इति पूर्वसवर्णदीर्घत्वम् । **सहसो** बलस्य **सूनो!** मथनप्रभवत्वात् । 'परमपि छन्दसि' इति पूर्वाङ्गवद्भावात् षष्ठ्यामन्त्रितसमुदायो निहन्यते । **गीर्भिः** स्तोत्रैः **उक्थैः** शस्त्रैश्च विधेम । एवं **ते** तव **भद्रायां** कल्याण्यां **सुमतौ** अनुग्रहात्मिकायां बुद्धौ निमित्तभूतायां तल्लाभाय **आयतेम** शास्त्रीयेण मार्गेण यतामहे । व्यत्ययेन परस्मैपदम् ॥

[1] **आ यस्ततन्थेति** ॥ **यः** त्वं **रोदसी** द्यावापृथिव्यौ **भासा** तेजसा **व्याततन्थ** व्याप्नोषि । छान्दसो लिट्, 'बभूथा ततन्थ' इति

**रोद॑सी॒ वि भा॒सा । श्रवो॑भिश्च श्रव॒स्य॑स्तरु॑त्रः । बृ॒हद्भि॒र्वाजै॒स्स्थवि॑रेभिर॒स्मे । रे॒वद्भि॑रग्ने वित॒रं विभा॑हि । [12]नृ॒वद्व॑सो॒ सद॒मिद्धे॑ह्य॒स्मे । भूरि॑ तो॒काय॒ तन॑याय प॒श्वः । पू॒र्वीरिषो॑ बृ॒ह॒तीर॒ारे अ॑घाः । अ॒स्मे**

निपात्यते । **श्रवोभिः** अन्नैश्च रोदसी व्याततन्थेत्येव । **श्रवस्यः** श्रवः अन्नं प्रजाभ्यः इच्छन् । 'छन्दसि परेच्छायामपि' इति क्यच्, क्यजन्तात्पचाद्यच् । अन्तरितं मृग्यम् । यद्वा—श्रवसे हितं श्रवसि वा साधुः । **तरुत्रः** तारयिता दुर्गेभ्यः, 'तरुत्रपरः' इति निपात्यते, अकारोपजनः छान्दसः पचाद्यजन्ता । 'न धातुलोप आर्धधातुके' इति गुणाभावः, आद्युदात्तत्वं छान्दसम् । अतस्त्वं **बृहद्भिः वाजैः** अन्नैः **स्थविरेभिः** चिरन्तनैः **रेवद्भिः** पुत्रादिधनसमृद्धिहेतुभिः **अस्मे** अस्मभ्यं देयैः **वितरं विभाहि** सर्वातिशायिना विशेषेण विभाहि दीप्यस्व देहीत्युक्तं भवति हे **अग्ने**! । 'अमु च छन्दसि' इत्यमुप्रत्ययः ॥

[1] **नृवद्वसो** इति ॥ हे **वसो**! वासयितः! प्रजानां **नृवत्** नृभिः दासादिभिः तद्वत् धनं **भूरि** बहु **अस्मे** अस्मभ्यं **धेहि** देहि । 'ह्रस्वनुड्भ्यां मतुप्' इति मतुप उदात्तत्वम् । **सदमित्** सदैव । किञ्च—**तोकाय** पुत्राय **तनयाय** तत्पुत्राय च धेहीत्येव । **पश्वः** पशूंश्च अस्मभ्यं धेहि । किञ्च—**पूर्वीः** चिरन्तनीः पूर्वपुरुषोचिताः **इषः** अन्नानि **बृहतीः** महतीः प्रभूता **आरे** अन्तिके क्षिप्रमेव **अघाः** क्षारय अस्मासु वर्षय । घृ क्षरणे लुङि सिचि वृद्धावीड-

भद्रा सौश्रवसानि सन्तु । [13]पुरूण्यग्ने पुरुधा त्वाया । वसूनि राजन्वसुताते अश्याम् । पुरूणि हि त्वे पुरुवार सन्ति । अग्ने वसु विधते राजनि त्वे ॥

जागृवांꣳसो अनु ग्मन्मानुषाणां चर्षणीनां यतेमाश्यां द्वे च ॥ १० ॥

---

भावे रूपम् । किञ्च--अस्मे अस्माकं भद्रा भद्राणि सौश्रवसानि सुश्रवसां शोभनानां पुरुषाणां संबन्धीनि कर्माणि स्थानासनादीनि सन्तु ॥

[13] पुरूणीति ॥ हे अग्ने ! राजन् ! दीप्यमान ! हे वसुताते ! वसूनां धनानां कर्तः ! । छान्दसे तातलि 'लिति' इति प्रत्ययात्पूर्वस्योदात्तत्वम् । त्वाया त्वया हेतुना । 'सुपां सुलुक्' इति याजादेशः । दीर्घत्वं वर्णविकारः । पुरुधा बहुप्रकारभिन्नानि वसूनि धनानि अश्यां भुञ्जिय । तव विशेषः श्रूयतां—हे अग्ने ! पुरुवार ! बहुभिर्वरणीय ! सर्वकालवर्तित्वात् त्वे त्वयि पूरूणि बहूनि वसु वसूनि सन्ति । 'सुपां सुलुक्' इति लुक् । त्वयि खलु बहूनि धनानि विद्यन्ते । कीदृशे त्वयि ? विधते परिचरते जनाय यजमानाय । 'शतुरनुमः' इति विभक्तेरुदात्तत्वम् । परिचारकजनार्थमेव राजनि दीप्यमाने त्वयि पुरूणि वसूनि सन्ति । तस्मात्तादृशेन त्वया पुरूणि वसूनि अश्यामिति ॥

इति तैत्तिरीये ब्राह्मणे तृतीये षष्ठे दशमोऽनुवाकः.

[1]आ भरतꣳ शिक्षतं वज्रबाहू । अस्माꣳ इन्द्राग्नी अवतꣳ शचीभिः । इमे नु ते रश्मयस्सूर्यस्य । येभिस्सपित्वं पितरो न आयन् । [2]होता यक्षदिन्द्राग्नी । छागस्य हविष आत्तामद्य । मध्यतो मेद उद्भृतम् । पुरा द्वेषोभ्यः । पुरा पौरुषेय्या गृभः ।

---

[1]हविषः पुरोरुक्—आभरतमिति त्रिष्टुप् ॥ हे इन्द्राग्नी! वज्रबाहू! सायुधपाणी! आभरतं सामर्थ्याद्धनमाहरतं आहृत्य तत् शिक्षतं संस्कुरुतं, अतः तत्प्रदानेन अस्मानवतं रक्षतम् । शचीभिः कर्मभिः यैः विश्वं रक्षतः । किञ्च—ये च इमे ते जगत्प्रसिद्धाः रक्षकत्वेन सूर्यस्य रश्मयः येभिः यैः सपित्वं समवेतत्वं एकत्वम् । षच समवाये, 'इन् सर्वधातुभ्यः' इति इन् । नः अस्माकं पितरः पूर्वपुरुषाः आयन् गताः तैश्च सह अस्मानवतमिति ॥

[2]होता यक्षदित्यादि ॥ होता दैव्यो यजत्विति । इन्द्राग्नी तौ चेज्यमानौ छागस्य हविषः हविर्भूतस्य मध्यतः उद्धृतं उद्धृतं मेदःप्रभृति सारभूतं आत्तां भुञ्जाताम् । अत्तेः छान्दसो लुङ् । अद्य अस्मिन्नहनि । पुरा द्वेषोभ्यो द्वेष्याणि रक्षःप्रभृतीनि यावन्नोपघ्नन्ति तावदात्ताम् । पुरा च पौरुषेय्याः पुरुषैः कृतायाः । 'पुरुषात् ढञ् विकारे' इति ढञ् । गृभः ग्रहणात् पुरुषार्थात् ग्रहेः संपदादित्वात् क्विप् । घस्तां नूनं शोभनं भुञ्जातां, अस्मिन्काले नूनं शोभनमेव भोजनमिति दर्शयति । 'बहुलं छन्दसि' इत्यदेः घस्लादेशः ॥

घस्तान्नूनम् ॥२८॥ [3]घासे अज्राणां यवसप्रथमानाम् । सुमत्क्षराणाꣳ शतरुद्रियाणाम् । अग्निष्वात्तानां पीवोपवसनानाम् । पार्श्वतश्श्रोणितश्शितामत उत्सादतः । अङ्गादङ्गादवत्तानाम् । करत

[3] इदानीमवदानानि वर्ण्यन्ते—घासे अज्राणामिति ॥ अदन्ति अस्मिन् हवींषि देवा इति घासो यागः । 'घञपोश्च' इति घस्लादेशः, निमित्तात्सप्तमी । यागनिमित्तमेव अज्राणां अजनीयानां गन्तव्यानां, यद्वा—करणे घञ्, घासे आस्ये अजनीयानां क्षेप्याणां सुसंस्कृतानामिति यावत् । यवसप्रथमानां अन्नानां मध्ये श्रेष्ठानां, आद्युदात्तत्वं छान्दसम् । सुमत्क्षराणां सुष्ठु मादयति येषां क्षरणं मुखादुदरप्रवेशः तादृशानां शतरुद्रियाणां शतं रुद्रा देवता येषां अनुष्ठातृभूताः तादृशाः प्राणा वा । 'शतरुद्राद्घ च' इति घः, छान्दसं पूर्वपदप्रकृतिस्वरत्वम् । यद्वा—शतं रुद्रियाणि रुद्रार्हाणि कर्माणि येषु तादृशानां, अग्निष्वात्तानां अग्निना वैश्वानरेण जाठरेण वैतानेन वा आस्वादितानाम् । प्रवृद्धादित्वादुत्तरपदान्तोदात्तत्वम् । पीवोपवसनानां पीवा स्थूलत्वक् उपवसनं आच्छादनस्थानीयं येषां तादृशानां पार्श्वादिभ्यः प्रथममवत्तानां ततः अङ्गादङ्गादवत्तानां सर्वस्मादङ्गादवत्तानां 'अपादाने चाहीयरुहोः' इति तसिः । पशूनां समूहः पार्श्वं 'पर्श्वा णस्वक्तव्यः' इति णस् । श्रोणी प्रसिद्धे । शितामः दोर्यकृद्वा । उत्सादः गुदकाण्डं भेदप्रदेशो वा एवमेतेषां एवंगुणानां इन्द्राग्नी एव करतः कुरुतः । कर्मणः संप्रदानत्वात् चतुर्थ्यर्थे

एवेन्द्राग्नी । जुषेताꣳ हविः । होतर्यज । [4]देवेभ्यो वनस्पते हवीꣳषि । हिरण्यपर्ण प्रदिवस्ते अर्थम् ॥ २९ ॥ प्रदक्षिणिद्रशनया नियूय । ऋतस्य वक्षि पथिभी रजिष्ठैः । [5]होता यक्षद्वनस्पतिमभि हि । पिष्टतमया रभिष्ठया रशनयाऽधित । यत्रेन्द्राग्नियो-

---

षष्ठी । करोतेः व्यत्ययेन शप् । यस्मात् तौ एतान्युत्पादितवन्तौ तस्मादिमौ देवौ इदं हविः जुषेतां सेवेतां सेवित्वा वा प्रियेतां तदर्थं हे मनुष्य ! होतः ! त्वमपि यज ॥

[4]वनस्पतेः पुरोरुक्—देवेभ्यो वनस्पते इति त्रिष्टुप् ॥ अग्न्यभेदेन यूपस्स्तूयते । हे वनस्पते ! यूपात्मन्नग्ने ! हिरण्यपर्ण ! हितरमणीयपतन ! हिरण्यवर्णज्वाल ! वा देवेभ्यो हवींषि वक्षि वह । लेटि शपो लुक् । कीदृशानि ? ते तव अर्थं प्रयोजनं प्रयोजनभूतानि प्रदिवः पुराणं यथापूर्वमिति यावत् । कीदृशो भूत्वेति चेत् ? प्रदक्षिणित् प्रदक्षिणमीयते वेष्ट्यत इति प्रदक्षिणित्, छान्दसं ह्रस्वत्वम् । रशनया नियूय निबद्ध्यात्मानं, यथा वहनकाले शैथिल्यं स्यात्, यौतेर्ल्यपि छान्दसं दीर्घत्वम् । ऋतस्य यज्ञस्य संबन्धीनि हवींषि वह पथिभिः मार्गैः रजिष्ठैः ऋजुतमैः । ऋजुशब्दादिष्ठनि, 'विभाषर्जोश्छन्दसि' इति टिलोपः ॥

[5]होता यक्षदित्यादि ॥ होता दैव्यः यजतु वनस्पतिम् । स चैतं पशुं इन्द्राग्न्यादिसकाशं प्रापयतु इति वक्ष्यति । तत्रास्य

श्छाग॑स्य ह॒विषः॑ प्रि॒या धामा॑नि । यत्र॒ व॒न॒स्पतेः॑ प्रि॒या पाथा॑ꣳसि। यत्र॑ दे॒वाना॑माज्य॒पानां॑ प्रि॒या धामा॑नि । यत्रा॒ग्नेर् होतुः॑ प्रि॒या धामा॑नि । तत्रै॒तं प्र॒स्तुत्यै॑वोप॒स्तुत्यै॑वो॒पाव॑स्रक्षत् । रभी॑याꣳसमिव

को विशेष इत्याह—हि यस्मात् पिष्टतमया श्लक्ष्णतमया रभिष्ठया रभस्वत्तमया स्वकार्ये शीघ्रप्रवृत्तया । पूर्ववन्मतुब्लोपटिलोपौ । आरब्धतमया वा सद्यस्स्वकार्येम् । 'तुश्छन्दसि' इतीष्ठनि 'तुरिष्ठेमेयस्सु' इति लोपः । ईदृश्या रशनया वनस्पतिः आत्मानं अभ्याधित अबध्नात्, यथोक्तं 'रशनया नियूय' इति, अभिधानं बन्धनं, लुङि 'स्थाघ्वोरिच्च' इतीत्वे 'ह्रस्वादङ्गात्' इति सिचो लुक् । तस्मात् तादृशः अयं यूपः एतं पशुं तत्रोपावस्रक्षत् तस्मिन् स्थाने उपावसृजतु उपसंप्रापयतु । लेटि सिपि अमागमः । कुत्र? यत्र इन्द्राग्नियोः संबन्धिनः छागस्य हविषः प्रिया धामानि स्थानानि यत्र निहितानि इन्द्राग्न्योः प्रीतये भवन्ति, यत्र च वनस्पतेः यूपस्य प्रियाणि पाथांसि अन्नानि यत्र निहितानि वानस्पत्यात्माग्नेः प्रीतये भवन्ति । यत्र च देवानां आज्यपानां प्रयाजदेवतानां प्रियाणि धामानि, यत्र चाग्नेः होतुः स्विष्टकृतः प्रियाणि धामानि तत्रैतं पशुं उपावस्रक्षत्, किं कृत्वा? प्रस्तुत्येव यथा राज्ञे प्रथमं निवेद्यते तथा प्रथममेव प्रस्तुत्य श्रावयित्वा, अवधारणे निपातः । किञ्च—उपस्तुत्येव सन्निधावेव प्रशस्य उपावसृजतु । एवं कृते कीदृशः कृतो भवतीत्याह—रभीयांसं देवानां प्रीत्युत्पादने रभसवत्तरं आरब्धतरं

कृत्वी ॥ ३० ॥ करदेवं देवो वनस्पतिः । जुषताꣳ हविः । होतर्यज । [6]पिप्रीहि देवाꣳ उशतो यविष्ठ । विद्वाꣳ ऋतूꣳर् ऋतुपते यजेह । ये दैव्या ऋत्विजस्तेभिरग्ने । त्वꣳ होतृणामस्यायजिष्ठः । होता यक्षदग्निꣳ स्विष्टकृतम् । अयाडग्निरिन्द्राग्नियोश्छागस्य हविषः प्रिया धामानि । अयाड्वनस्पतेः प्रिया पाथाꣳसि । अयाड्देवानामाज्यपानां प्रिया धामानि । यक्षदग्नेर् होतुः प्रिया धामानि । यक्षथ्स्वं महिमानम् । आयजतामेज्या इषः । कृणोतु सो अध्वरा जातवेदाः । जुषताꣳ हविः । होतर्यज ॥ ३१ ॥

नूनमर्धे कृत्वो पाथाꣳसि सप्त च ॥ ११ ॥

वा एवं कृत्वी कृत्वेव उपावसृजतु । आदरार्थं पुनश्च संग्रहेणाह—करत् कुर्यात् एवं उक्तप्रकारं अवश्यं करोत्येव । अयं देवः देवनशीलः वनस्पतिः जुषतां सेवतां चेदं हविः, हे होतः! मानुष! त्वमपि यज ॥

[6]स्विष्टकृतः पुरोनुवाक्या—पिप्रीहीति त्रिष्टुप् ॥ व्याख्याता * । अयाडग्निरिन्द्राग्नियोरित्यादि च इष्टिहोत्रे व्याख्यातम् * । इन्द्राग्न्योश्छागस्येति विशेषः होतर्यजेत्युपरम्यते ॥

इति तैत्तिरीये ब्राह्मणे तृतीये षष्ठे एकादशोऽनुवाकः.

* सं. ४-३-१३. ब्रा. ३-५-७.

उपोह यद्विदथं वाजिनो गूः । गीर्भिर्विप्राः प्रमतिमिच्छमानाः । अर्वन्तो न काष्ठां नक्षमाणाः । इन्द्राग्नी जोहुवतो नरस्ते । [2]वनस्पते रशनयाऽभिधाय । पिष्टतमया वयुनानि विद्वान् । वह देवत्रा दिधिषो हवीꣳषि । प्र च दातारममृतेषु वो-

[1]हविषो याज्या—उपोहयदिति त्रिष्टुप् ॥ विदथं यज्ञं उपोह यज्ञस्य समीपत एव गूः गच्छन्तः, क्विपि 'ऊश्चगमादीनाम्' इत्यूकारः, 'सुपां सुलुक्' इति जसः स्वादेशः। वाजिनः अन्नवन्तः हविष्मन्तः गीर्भिः स्तुतिभिः इत्थंभूताः प्रमतिं प्रकृष्टं मन्तव्यं फलं इच्छमानाः प्राप्तुमिच्छन्तः विप्राः मेधाविनः ऋत्विजः यत् ये प्रकृष्टफलार्थिनः यज्ञसमीपं गच्छन्तीत्यर्थः। पूर्ववत् जसो लुक्। ते तथाकुर्वन्तो नरः नेतारो मनुष्याः ऋत्विजः इन्द्राग्नी एव जोहुवतो भृशं होमेनाराधयन्तः अर्वन्तोन अश्वा इव काष्ठा नक्षमाणाः व्याप्तुमिच्छन्तः णशेः गतिकर्मणः अभ्यासस्य लोपादिकं छान्दसम्। ते नरा इन्द्राग्नी एव जुहुवतो भवन्ति ॥

[2]वनस्पतेर्याज्या—वनस्पते रशनयेति त्रिष्टुप् ॥ हे वनस्पते! यूप! रशनया पिष्टतमया श्लिष्टतमया आत्मानं अभिधाय बद्ध्वा वयुनानि ज्ञानानि अभिप्रायमस्माकं देवानां वा विद्वान् जानन् तदनुरूपं हवींषि वह प्रापय । क? देवत्रा देवेषु, 'देवमनुष्य' इति त्राप्रत्ययः। हे दिधिषो! धारणकुशल!। यद्वा—

चः । [3]अग्निꣳ स्विष्टकृतम् । अयाडग्निरिन्द्राग्नियोश्छागस्य हविषः प्रिया धामानि ॥ ३२ ॥
अयाड्वनस्पतेः प्रिया पाथाꣳसि । अयाड्देवानामाज्यपानां प्रिया धामानि । यक्षदग्नेर् होतुः प्रिया धामानि । यक्षथ्स्वं महिमानम् । आयंजतामेज्या इषः । कृणोतु सो अध्वरा जातवेदाः । जुषताꣳ हविः । [4]अग्ने यदद्य विशो अध्वरस्य होतः । पावक शोचे वेष्ट्वꣳ हि यज्वा । ऋता यजासि महिना वि यद्भूः । हव्या वह यविष्ठ या ते अद्य॥३३॥

धामानि भूरेकं च ॥ १२ ॥

---

हविषो देवेभ्यो दानकुशल! तथा कृत्वा तेषां हविषां दातारं यजमानं अमृतेषु अमरणेषु देवेषु प्रवोचः अनेनैतानि दत्तानीति प्रब्रूहि । छान्दसे लुङि 'वच उम्' 'बहुळं छन्दस्यमाङ्योगेऽपि' इत्यडभावः ॥

[3-4]स्विष्टकृतो याज्या—अग्निं स्विष्टकृतमिति ॥ अग्ने यदद्येति ॥ व्याख्याता 'अग्निर्वृत्राणि' इत्यत्र* ॥

इति तैत्तिरीयब्राह्मणे तृतीये षष्ठे द्वादशोऽनुवाकः.

---

*सं. ४-३-१३. ब्रा. ३-५-७.

[1]दे॒वं ब॒र्.हिस्सु॑दे॒वं दे॒वैस्स्या॑थ्सु॒वीरं॑ वी॒रैर्वस्तो॑र्वृ॒ज्येता॒क्तोः प्रभ्रि॑ये॒तात्य॒न्याना॒या ब॒र्.हिष्म॑तो मदेम वसु॒वने॑ वसु॒धेय॑स्य वेतु॒ यज॑ । [2]दे॒वीर्द्वार॑स्सं॒घा॒ते वि॒ड्वीर्या॑म॒ञ्छि॒थि॒रा ध्रु॒वा दे॒वहू॑तौ व॒थ्स ईं॑मेना-

[1]अनूयाजप्रैषाः—देवं बर्हिरित्याद्याः ॥ देवं देवनशीलं बर्हिः बर्हिराधारोऽग्निः देवैः सुदेवं सुतृप्तदेवं यागद्वारेणास्तु । यद्वा—देवैस्सह सुदेवं शोभनदानमस्तु, वीरैश्च पुत्रादिभिः अस्मभ्यं देयैः सुवीरं शोभनपुत्रादिकमस्तु । वस्तोः देवानां वासाय वृज्येत लूयेत नित्यं, न वृथा वेद्यामाच्छादनाय । इडभावश्छान्दसः । अक्तोः स्रुचां हविषां वा अभिव्यक्तये प्रभ्रियेत संह्रियेत धार्येत नित्यम् । यद्वा—वस्तोः अहनि वृज्येत लूयेत । अक्तोः रात्रौ प्रभ्रियेत संह्रियेत । यथोक्तप्रतिपत्तिकमस्तु । अस्य बर्हिर्देवस्य प्रसादात् अन्यान् बर्हिष्मतः इतरान्यागयुक्तान् पुरुषान् राया धनेन अतिक्रम्य मदेम हृष्याम । वसुधेयस्य धनप्रदातुर्देवस्य वसुवने धनप्रदानाय वेतु आज्यं पिबतु । यज तदर्थं हे होतः! याज्यां पठ ॥

[2]देवीर्द्वार इति ॥ देवनशीलाः द्वारः संघाते संयोजने पिधानकाले विड्वीः विड्वचः दृढाः । वीडेः छान्दसं ह्रस्वत्वम् । 'वोतो गुणवचनात्' इति ङिषि 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । यामन् यामे निर्गमनकाले शिथिराः शिथिलाः शिथिलकवाटत्वात् । ध्रुवा नित्यप्रवृत्ता देवहूतौ देवानामाह्वाने एताः

स्तरुंण आमिंमीयात्कुमारो वा नवंजातो मैना अर्वा रेणुकंकाटः पृणग्वसुवनें वसुधेयंस्य वियन्तु यजं। [3]देवी उषासा नक्ताऽद्यास्मिन् यज्ञे प्रयत्यं-ह्वेतामपिं नूनं दैवीर्विशः प्रायासिष्टा॑ सुप्रीते सु-

द्वारः वत्सो वा तरुणः कुमारो वा नवजातः जातमात्रः आ मिमीयात् आगत्य प्रविशेत् महावकाशत्वात् सर्वेषां प्रवेशमनु मन्यन्ते, न तु कश्चिदुपहन्यत इति, मानेन प्रवेशो लक्ष्यते। ईमिति चार्थे। यद्वा—ईमिति प्रश्ने, किं वत्सादिः कश्चिदपि एना आमिमीयात् आयात् आगत्य परिच्छिन्द्यात् आगत्य किं वा हिंस्यात् तस्मात् एना एवंगुणाः अर्वा पापः रेणुककाटः धूर्तः। यद्वा—अर्वा अकुशलः रेणुककाटः रेणूकृत्य दारणो विक्षिप्ता घुरणः। यद्वा—अर्वा अश्वः रेणुककाटः दुर्दान्तः अविधेयः एता द्वारो मा पृणक् मा पृणक्तु आभिः संपृक्तो मा भूत्। पृची संपर्के, रौधादिकः, लङि लुङ्ग्येव वा विकर-णव्यत्ययेन श्नम्। वसुवन इत्यादि। गतम्॥ वियन्त्विति विशेषः॥

[3]देवी उषासा नक्तेति॥ देवनशीले उषासा नक्ता अ-हश्च रात्रिश्च अद्य अस्मिन्नहनि अस्मिन् यज्ञे पशुयागे प्रयती प्रवर्तमाने अविच्छेदेन वर्तमाने अह्वेतां देवादीनाह्वातव्यानह्व-येताम्। छान्दसे लुङि 'लिपि सिचि ह्वश्च' इत्यङ्। अपिनूनमिति अभिमतसिद्ध्युद्भावने। एते अहोरात्रे दैवीः विशः देवसम्ब-न्धिनीरपि प्रजा नूनं प्रायासिष्टां आह्वातुं तत्सकाशमपि प्रया-ताम्। तत्किं नाम न साधयत एते। 'देवाद्यञञौ' इत्यञ्,

धिते वसुवने वसुधेयस्य वीतां यज । ⁴देवी जोष्ट्री वसुधिती ययोरन्याऽघा द्वेषांसि युयवदाऽन्या वक्षद्वसु वार्याणि यजमानाय वसुवने वसुधेयस्य वीतां यज । ⁵देवी ऊर्जाहुती इषमूर्जमन्या वक्ष-

यातः छान्दसे लुङि 'यमरमनमाताम्' इति सगिटौ । सुप्रीते स्वयं च सुष्ठु प्रीते न तु वैमुख्यं भजमाने सुधिते सुष्ठु प्रारब्धनिर्वहणपरे च भूत्वा प्रायासिष्टां नूनमिति । 'सुधितवसुधित' इति निपात्यते । वसुवन इत्यादि । गतम् । वीतामिति विशेषः ॥

⁴देवी जोष्ट्री इति ॥ देव्यौ जोष्ट्र्यौ जोषयित्र्यौ यजमानानां विघ्ननिवारणेन अभिमतफलप्रापणेन च । तदेवाह— वसुधिती वसु यज्ञफलं तस्य दात्र्यौ, कर्तरि क्तिच्, दासीभारादिर्द्रष्टव्यः। यद्वा—वसूनि धितीनि देयानि ययोरिति कर्मणि क्तिनि बहुव्रीहिः । 'सुधितवसुधित' इति हिभावाभावः । ययोर्मध्ये अन्या एका अघा पापानि द्वेषांसि द्वेष्याणि च रक्षःप्रभृतीनि युयवत् पृथक्कुर्यात् नाशयेत् । यौतेर्लेटि अडागमः, शपः श्लुः, मध्योदात्तत्वं छान्दसम् । यद्वा—विकरणव्यत्ययेन शश्च क्रियते, 'छन्दस्युभयथा' इत्यार्धधातुकत्वेन ङित्त्वाभावात् गुणः, 'एकान्याभ्याम्' इति निघाताभावः । ययोश्च अन्या एका वसूनि धनानि वार्याणि वरणीयानि यजमानाय आवक्षत् वहति । 'सिब्बहुळं लेटि' इति सिप्, 'ईडवन्द' इति ण्यदन्तस्य आद्युदात्तत्वम् । वसुवन इत्यादि । गतम् ॥

⁵देवी ऊर्जाहुती इत्यादि ॥ देव्यौ ऊर्जाहुत्यौ ऊर्जा रस-

**थ्सग्धिः सपीतिमन्या नवेन पूर्वं दयमानास्स्य पुराणेन नवं तामूर्जमूर्जाहुती ऊर्जयमाने अधा**

स्य भावयित्र्यौ । पूर्ववत्पररूपे आकारोपजनश्च । हविषां वोढ्र्यौ उच्येते । ययोः **अन्या** एका इषं अन्नं र रसं च देवेभ्यः **वक्षत्** वहति प्रापयति आवहति उत्पाद वा । पूर्ववत् लेटि सिप् । ययोश्च **अन्या** सग्धि सहाशनं सपी सहपानं च देवानां वक्षदित्येव । चमकेषु पदे व्याख्याते* । इ नीमास्मार्थमप्यूर्जं प्रार्थयते—**नवेन** व्रीह्यादिना सहैव **पूर्वं** पु णव्रीह्यादिकं **दयमानाः** रक्षन्तः कुसूलादिषु स्थापयन्तः । यद्वा दयमानाः दधानाः ब्राह्मणादिभ्यः सहैव ददानाः स्याम त्व सादादिति यावत् । नवोत्पत्तिपर्यन्तं अक्षीणपुराणधान्याः पु णद्दाग्निन एव स्याम, तथा **पुराणेन** धान्येन सहैव **नवं** न्यं दयमानाः स्याम, सत्स्वेव पुराणेषु नवं दयमानाः स्या पुराणेषु क्षीणेषु लवितारो मा भूमेति यावत् । 'चादिलोपे भाषा' इति निघाताभावः । **तां** तादृशीं उपर्युपर्युपचीयम बहुविधनवपुराणधान्यपूर्णमहाकुसूलशतसंकटग्रहोपग्रहव्यापिनीं अन्नं व्रीह्यादिलक्षणं **ऊर्जाहुती** दैव्यौ अस्मभ्यं **अधातां** ऊर्जयमाने सर्वस्य लोकस्य ऊर्जं अन्नं कुर्वाणे । 'तत्करो इति णिच् । 'प्रकृत्यैकाच्' इति प्रकृतिभावः । दधातेः न्दसे लुङि 'गातिस्था' इति सिचो लुक् । **वस्रुवन** इत्यादि गतम् ॥

*सं. ४-७-४.

वसुवने वसुधेयस्य वीतां यज । [6]देवा दैव्या होतारा नेष्टारा पोतारा हताघशꣳसावाभरद्वसू वसुवने वसुधेयस्य वीतां यज । [7]देवीस्तिस्रस्तिस्रो देवीरिडा सरस्वती भारती द्यां भारत्यादित्यैरस्पृक्षथ्सरस्वतीमꣳ रुद्रैर्यज्ञमावीदिहैवेडया वसुमत्या सधमादं मदेम वसुवने वसुधेयस्य वियन्तु यज ।

---

[6]देवा दैव्येति ॥ देवा देवनशीलौ दैव्या देवानां संबन्धिनौ होतारौ नेष्टारौ नेतारौ यज्ञस्य पोतारौ शोधयितारौ । सर्वत्र 'सुपां सुलुक्' इत्याकारः । हताघशंसौ हता अघशंसाः पापबुद्धयः याभ्यां तादृशौ आभरद्वसू आह्रियमाणधनौ । व्यत्ययेन कर्मणि कर्तृप्रत्ययः । यद्वा—वसुनः आहर्तारौ, पूर्वापरविनिमयः छान्दसः । वसुवन इत्यादि । गतम् ॥

[7]देवीस्तिस्र इति ॥ देव्यः तिस्रः इडा सरस्वती भारती च, ताः सर्वदा तिस्रः संभूय देवीः देव्यः दीव्यन्त्यः । तासु मध्ये भारती देवी आदित्यैस्सह द्यां द्युस्थानं लोकं अस्पृक्षत् स्पृशतु हविर्भिः देवांस्तर्पयतु । छान्दसे लुङि 'शल इगुपधात्' इति क्सः । सरस्वती देवी रुद्रैस्सह इमं यज्ञं आवीत् अवतु रक्षतु अत्रैव स्थित्वा यज्ञं निर्वर्तयतु । अथ इडया देव्या वसुमत्या वसुभिः तद्वत्या सधमादं सहस्थानमदं यथातथा । यद्वा—सह मदित्वा मदित्वा मदेम माद्येम । 'लिङ्याशिष्यङ्' । इहैव यज्ञे यज्ञफलेन अस्मान् योजयत्विति । वसुवन इत्यादि । गतम् ॥

[8]दे॒वो न॒रा॒शꣳसस्त्रि॒शी॒र्॒षा ष॑ड॒क्षश्श॒तमि॑दे॒नꣳ शि॒ति॒पृ॒ष्ठा आद॑धति स॒ह॒स्रमी॒ं प्रव॑हन्ति मि॒त्राव॑रु॒णेद॑स्य हो॒त्रमर्ह॑तो बृह॒स्पति॒स्स्तो॒त्रम॒श्विनाऽऽध्व॑र्यवं वसु॒वने॑ वसु॒धेय॑स्य वेतु॒ यज॑ । [9]दे॒वो व॒न॒-

---

[8]देवो नराशंस इति ॥ देवनशीलो नरैः शंसनीयः यज्ञात्मा त्रिशीर्षा त्रिभिस्सवनैः प्रदानैः तद्वान्, निरुदकादित्वादुत्तरपदान्तोदात्तत्वम् । षडक्षः षड्भिरक्षस्थानीयैः ऋतुभिः तद्वान् ऋतुग्रहाभिप्रायं वा, सतिशिष्टः समासान्तस्स्वरः प्रवर्तते । 'बहुव्रीहौ सक्थ्यक्ष्णोः' इति षच् । शतमित् शतमेव बह्वयः शितिपृष्ठाः शुक्लपृष्ठाः दक्षिणाः शुक्लधनात्मिका एनं यज्ञं आदधति आभिमुख्येन धारयन्ति, सहस्रमीं सहस्रमेव दक्षिणाः एनं प्रवहन्ति फलसाधनसमर्थं कुर्वन्ति कस्यचित्सहस्रदक्षिणत्वात् यज्ञजात्यभिप्रायेणोच्यते । 'शितेर्नित्या बह्वच्' इत्युत्तरपदान्तोदात्तत्वम् । मित्रावरुणावेव, 'देवताद्वन्द्वे च' इति द्व्युदात्तत्वम् । अस्य यज्ञस्य होत्रं हवनं होतृत्वं अर्हतः नान्यः, बृहस्पतिरेव स्तोत्रं स्तवं औद्गात्रमर्हतीति । 'चादिलोपे विभाषा' इत्याख्यातं न निहन्यते । अश्विनावेव आध्वर्यवं अध्वर्योः कृत्यं अर्हतः । उत्सादित्वादञ् । वसुवन इति । गतम् ॥

[9]देवो वनस्पतिरिति ॥ देवनशीलः वनस्पतिः वर्षप्रावा वर्षस्य प्रापयिता यागद्वारेण । प्रपूर्वादवतेः 'गतिकारकयोरपि' इत्यसुन्, पूर्वपदप्रकृतिस्वरत्वं च । यद्वा—वर्षस्य प्रावा पूरयिता ।

**स्पतिर्वृ॒ष॒प्रा॑वा घृ॒तनि॑र्णि॒ग्द्यामग्रे॑णास्पृ॒क्ष॒दाऽन्तरि॑-क्षं मध्ये॑नाप्राः पृ॑थि॒वीमु॒परे॑णाद्दृ॑ꣳहीद्व॒सु॒वने॑ वसु॒-धेय॑स्य वेतु यज॑ । [10]दे॒वं ब॒र्हिर्वारि॑तीनां नि॒धे धा॑-सि॒ प्रच्यु॑तीना॒मप्र॑च्युतं निकाम॒धर॑णं पुरु॒स्पार्हं॑**

'आतो मनिन्' इति प्रातेर्वनिप्, दासीभारादिर्द्रष्टव्यः । **घृत-निर्णिक्** घृतस्य उदकस्य हेतुभूतं रूपमस्येति । यद्वा—उदकेन निर्वर्तितरूपः घृतस्य वा निर्णेक्ता शोधयिता समर्थयिता । दासी-भारादिरेव । **द्यां** द्युलोकं **अग्रेण अस्पृक्षत्** स्पृशत्विति या वत् । लुङि पूर्ववत् क्सः । **मध्येनान्तरिक्षमाप्राः** आपूरयतु, रक्षा-र्थं व्याप्नोतु । प्रा पूरणे, लुङि पुरुषव्यत्ययः, 'मन्त्रे घस' इति च्लेर्लुक् । **उपरेण** मूलेन अतष्टप्रदेशेन **पृथिवीं अदृंहीत्** स्त-म्भयतु । **वसुवन** इत्यादि । गतम् ॥

[10]**देवं बर्हिरिति** ॥ देवनशीलं **बर्हिः** बर्हयितृ वर्धयितृ **वारितीनां** उदकगतीनां यागद्वारेण उदकप्राप्तिहेतुः । **निधे** नि-धानार्थं अविचलितावस्थानार्थम् । क्विप्यातो लोपः, उदात्तनिवृत्ति-स्वरेण विभक्तेरुदात्तत्वम् । यद्वा—कृत्यार्थे केप्रत्ययः । **धासि** ददाति हवींषि । पुरुषव्यत्ययः, वेत्वित्यनेन सामानाधिकरण्यात्, शपो लुक् । यद्वा—वारितीनां निधानाय दधाति । **प्रच्युतीनां** प्रच्युतिमतां अन्येषां शुष्यतां मध्ये स्वयं **अप्रच्युतं** अप्रच्युतिकम् । यद्वा—तेषामप्रच्युतहेतुः । **निकामधरणं** स्वेच्छया धारयितृ प-र्याप्तं वा धारणाय **पुरुस्पार्हं** पुरुभिस्स्पृहणीयम् । विकारः छान्द-

यशस्वदेना बर्हिषाऽन्या बर्हींषि॒ अभिष्याम वसुवने वसुधेयस्य वेतु यज । [1]देवो अग्निस्स्विष्टकृत्सुद्रविणा मन्द्रः कविस्सत्यमन्माऽऽयजी होता होतुर् होतुरायजीयानग्ने यान्देवानयाड्याँ अपिप्रेर्ये ते होत्रे अमत्सत ताँ ससनुषी होत्रां देवंगमां दिवि देवेषु यज्ञमेरयेमꣳ स्विष्टकृच्चाग्ने होताऽभूर्वसुवने वसुधेयस्य नमोवाके वीहि यज ॥

यजैकं च ॥ १३ ॥

सः । यशस्वत् यशस्करं उदकहेतुर्वा । एना एतेन महानुभावेन बर्हिषा अन्यानि बर्हींषि बर्हिष्मतो यजमानान् अभिष्याम अभिभवेम । 'उपसर्गप्रादुर्भ्या' इति षत्वम् । वसुवन इत्यादि । गतम् ॥

[1]देवो अग्निरिति ॥ इष्टिहौत्रे व्याख्यातम्* । नमोवाके वीहि यजेति विशेषः । हे अग्ने ! वसुवने लाभाय लब्धस्य च धारणाय अन्नस्य च पक्तृत्वाय अस्माकं इदं आज्यं वीहि पिब । होतस्त्वमपि यजेति ॥

इति तैत्तिरीयब्राह्मणे तृतीये षष्ठे पशुहौत्रे त्रयोदशोऽनुवाकः.

* ब्रा. ३-५-९.

[1]देवं बर्हिः । वसुवने वसुधेयस्य वेतु । देवी द्वारः । वसुवने वसुधेयस्य वियन्तु । देवी उषासा नक्ता । वसुवने वसुधेयस्य वीताम् । देवी जोष्ट्री । वसुवने वसुधेयस्य वीताम् । देवी ऊर्जाहुती । वसुवने वसुधेयस्य वीताम् ॥ ३५॥ देवा दैव्या होतारा । वसुवने वसुधेयस्य वीताम् । देवीस्तिस्रस्तिस्रो देवीः । वसुवने वसुधेयस्य वियन्तु । देवो नराशꣳसः । वसुवने वसुधेयस्य वेतु। देवो वनस्पतिः । वसुवने वसुधेयस्य वेतु । देवं बर्हिर्वारितीनाम् । वसुवने वसुधेयस्य वेतु ॥३६ देवो अग्निस्स्विष्टकृत् । सुद्रविणा मन्द्रः कविः । सत्यमन्माऽऽयजी होता । होतुर् होतुरायजीयान्। अग्ने यान्देवानयाट् । याꣳ अपिप्रेः । ये ते होत्रे अमत्सत । ताꣳ ससनुषीꣳ होत्रां देवंगमाम् । दिवि देवेषु यज्ञमेरयेमम् । स्विष्टकृच्चाग्ने होताऽभूः । वसुवने वसुधेयस्य नमोवाके वीहि ॥३७॥

वीतां वेत्वभूरेकं च ॥१४॥

[1] अनूयाजयाज्याः—देवं बर्हिर्वसुवन इत्यादयो निगदसिद्धाः

[1]अ॒ग्निम॒द्य होता॑रमवृणीता॒यं यज॑मान॒ः पच॑न्प॒क्तीः पच॑न्पु॒रो॒डाशा॑न्ब॒ध्नन्नि॑न्द्रा॒ग्निभ्या॒ं छाग॑ꣳ सू॒प॒स्था अ॒द्य दे॒वो वन॒स्पति॑रभवदिन्द्रा॒ग्निभ्या॒ं छा॒गे॒नाघ॑स्ता॒ं तं मे॑द॒स्तः प्रति॑ पच॒ताऽग्र॑भीष्टामवी॑वृधे-

अनन्तरानुवाकसमाः* । नमोवाके वीहि इत्युपरम्यते याज्यात्वात् ॥

इति तैत्तिरीयब्राह्मणे तृतीये षष्ठ पशुहौत्रे चतुर्दशोऽनुवाकः.

---

[1]अथ सूक्तवाकप्रैषा मैत्रावरुणस्य—अग्निमद्येति ॥ अद्य अस्मिन्नहनि अयं यजमानः अग्निं होतारं अवृणीत पक्तव्यानि पचन् पुरोडाशं च वि षेण पचन् इन्द्राग्निभ्यां छागं बध्नन् यूपे नियुञ्जन् अग्निमवृणीत । अथ अद्य देवनशीलो वनस्पतिः सूपस्थाः सूपस्थानः अभवत् । इन्द्राग्निभ्यां इन्द्राग्न्योः संबन्धिना छागेन सूपस्थानोऽभवत् । अघस्तां तं मेदस्तः तं पशुं मेदस्तो वपाया आलभ्य इन्द्राग्नी अघस्तां अभक्षयताम् । अत्तेः 'लुङ्सनोः घस्लृ' इति घस्लादेशः, 'मन्त्रे घस' इति च्लेर्लुक्, वाक्यादित्वादाख्यातं न निहन्यते । अथ प्रति पचताऽग्रभीष्टां पचता पचनानि पक्वानि सर्वाणि । पचेरौणादिकोऽतच्प्रत्ययः । प्रत्यग्रभीष्टां प्रतिगृहीतवन्तौ इन्द्राग्नी । 'हग्रहोर्भः' इति भत्वम् । किञ्च—ताविन्द्राग्नी पुरोडाशेन आत्मानं अवीवृधेताम् अवर्धयेताम् ॥

---

*ब्रा. ३-६-११.

तां पुरोडाशेन [2]त्वामद्य ऋषे आर्षेय ऋषीणां नपादवृणीतायं यजमानो बहुभ्य आ संगतेभ्य एष मे देवेषु वसु वार्या यक्ष्यत इति ता या देवा देवदानान्यदुस्तान्यस्मा आ च शास्वा च गुरस्वेषितश्च होतरसि भद्रवाच्याय प्रेषितो मानुषस्सूक्तवाकाय सूक्ता ब्रूहि ॥ ३८ ॥

अग्निमद्यैकम् ॥ १५ ॥

अञ्जन्ति होता यक्षत्समिद्धो अद्याग्निरजैदैव्या जुषस्वावृत्रहणा गीर्भिस्त्वꣳ ह्याभरतमुपोह यद्देवं बर्हिस्संदेवं देवं बर्हिरग्निमद्य पञ्चदश ॥१५॥

अञ्जन्त्युपावसृजन्नान्या युवत्करदेवमष्टात्रिꣳशत् ॥ ३८॥

अञ्जन्ति—सूक्ता ब्रूहि ॥

हरिः ओम्.

---

[2] त्वामद्यर्षे इत्यादि ॥ सौत्रामण्यां व्याख्यातम् * ॥

इति श्रीभट्टभास्करमिश्रविरचिते तैत्तिरीयब्राह्मणभाष्ये ज्ञानयज्ञाख्ये तृतीयाष्टके षष्ठप्रपाठके पशुहौत्रे पञ्चदशोऽनुवाकः.

समाप्तश्च प्रपाठकः.

---

* ब्रा. २-६-१५.

श्री.

# सप्तमप्रपाठकः.

हरिः ओम्॥ 'सर्वान् वा एषोऽग्नौ कामान्प्रवेशयति। योऽग्नीनन्वाधाय व्रतमुपैति। स यदनिष्ट्वा प्रयायात्। अकामप्रीता एनं कामा नानु प्र-

अथाच्छिद्रं काण्डं वैश्वदेवमारभ्यते—छिद्रपूरणप्रायश्चित्तादिप्रायत्वात् अच्छिद्रम्। सर्वान्वा इत्यादि॥ एष खलु सर्वानपि कामान् अभिलषितानर्थान् अग्नौ प्रवेशयति अग्नाविव दातृत्वेन स्थापयति तत्प्रसादैकलभ्यान् निश्चित्य प्रवर्तते यथा 'त्वयाऽध्यक्षेण पृतना जयेम'* इत्यादि। यद्वा—सर्वान् कामान् अग्नौ प्रवेशयति अग्निरेव इमे सर्वे कामाः नाग्नेरन्यत्काम्यमस्तीति अग्निमेव कामैः विषयीकरोति। कः? यः अग्नीनन्वाधाय व्रतोपायनादि करोति करिष्यमाणयागोपलक्षणं व्रतोपायनम्। तदेवाह—अनिष्ट्वा प्रयायादिति। तत्र सोऽन्वाहिताग्निः यदनिष्ट्वा व्रतोपायनादिकां इष्टिं अकृत्वा अनाहृताग्निः प्रयायात् प्रवसेत्। तत एनं एवंकुर्वाणं कामा नानुप्रयायुः जहति तं कामाः। कुतः? अकामप्रीतत्वात् कामेन प्रीताः कामप्रीताः न कामप्रीताः अकामप्रीताः पूर्वमग्नौ प्रवेशनकाले अस्य कामेन

*सं. ४-७-१४.

यायुः । अतेजा अवीर्यस्स्यात् । स जुहुयात् । तुभ्यं ता अङ्गिरस्तम । विश्वास्सुक्षितयः पृथक् । अग्ने कामाय येमिर इति । कामानेवास्मिन्दधाति ॥१॥ कामप्रीता एनं कामा अनु प्रयान्ति । तेजस्वी वीर्यावान्भवति । [2]संततिर्वा एषा यज्ञस्य ।

प्रीताः काम्याः अर्थाः इदानीं तदनादरेण सा प्रीतिः व्यपगता किमनेन कृतमिति । तस्मात् अकामप्रीता एनं जहति । ततश्च अतेजा अवीर्यः स्यात् तेजोवीर्यग्रहणं च सर्वकामोपलक्षणम् । तस्मात् सोऽन्वाहिताग्निः दैवादनिष्ट्वा प्रयास्यन् उक्तदोषपरिहाराय जुहुयात्—तुभ्यं ता इति । इयं गायत्री । 'त्वमग्ने रुद्रः' इत्यत्र व्याख्याता * । वास्तोष्पतीयप्रत्याम्नायोऽयमित्याहुः । ततः यत्र वसेत् तत्र एतामिष्टिं संस्थापयेदिति । ततश्च 'कामाय येमिरे' इति लिङ्गात्सर्वे कामाः अस्मिन्निहिता भवन्ति । ततः कामप्रीताः एनं अनुप्रयान्ति कामाः सम्यगाचरितमिति । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । ततः तेजःप्रभृत्यभिमतार्थसम्पन्नो भवति ॥

सन्ततिर्वा इत्यादि ॥ सन्ततिः सन्तानः प्रक्रान्तस्याविच्छेदः । यज्ञस्यैषा सन्ततिः इदानीमेव यज्ञः प्रारब्धः सन्तायते । एषेत्युक्तम्, केत्याह—य इति ॥ यदित्यर्थः । यत्प्रथममेवाग्नीन् अन्वाधाय व्रतोपायनादि करोति न तु यदाऽग्निनाऽर्थः तद्यज्ञस्य सन्ततिरित्यर्थः । अन्यथा अग्निकार्यस्य याग-

* सं. १-३-१४.

योऽग्नीनन्वाधाय व्रतमुपैति । स यदुद्वायति । वि-च्छित्तिरेवास्य सा । [3]तं प्राञ्चमुद्धृत्य । मनसोपति-ष्ठेत । मनो वै प्रजापतिः । प्राजापत्यो यज्ञः ॥ २
मनसैव यज्ञꣳ संतनोति । भूरित्याह । भूतो वै प्रजापतिः । भूतिमेवोपैति । [4]वि वा एष इन्द्रिये-

---

त्वात् अनन्वाधाय व्रतोपायनादौ क्रियमाणे तस्याग्निकार्यत्वात् यज्ञोऽप्रक्रान्तः स्यात् तस्मात्प्रथममेवान्वाधानाद्यज्ञः प्रक्रान्तः सन्तायते ततः सः अग्निरन्वाहितः यदि उद्वायति विनश्यति, वै ओ वै शोषणे । विच्छित्तिरेव सा अस्य यज्ञस्य प्रक्रान्तस्य । यद्वा—सन्ततिः सन्तारयिता यज्ञस्य । कः? योऽग्नीनन्वाधायेति । नन्वग्नयः प्रकृताः तत्कथं स यदुद्वायतीति? उच्यते—सामर्थ्यादाहवनीय इति गम्यते । यथोक्तमाचार्यैः—'यद्यन्वाहिताग्नेराहवनीयोऽनुगच्छेत्' इति ॥

[3]अथ प्रायश्चित्तमाह—तमिति ॥ प्राञ्चं तमुद्धृत्य अन्यं आहवनीयं प्रणीय ततः व्रतोपायनीयं यजुर्जपेत् । मनसोपतिष्ठेत । मनो वा इति । अव्यक्तरूपत्वात् । भूरिति प्रणयनानन्तरं उपस्थानम् । भूतो वा इत्यादि । प्रपञ्चरूपेणाविर्भूतत्वात् । ततः विच्छित्तिदोषनिर्घातात् भूतिमुपैति ॥

[4]वि वा इत्यादि ॥ अपक्षायति आयतनादपक्रम्य नश्यति । क्षै जै षै क्षये, नाशः लौकिकीभावः । नोद्वानम् । अथ यावति प्रदेशे शम्यया लक्ष्यं प्रविध्येत् यावति दूरे वा शम्या परास्यते

र्ण वीर्येणर्द्ध्यते । यस्याहिताग्नेरग्निरपक्षायति । यावच्छम्यया प्रविध्येत् । यदि तावदपक्षायेत् । तꣳ संभरेत् । इदं त एकं पर उत एकम् ॥ ३ ॥ तृतीयेन ज्योतिषा संविशस्व। संवेशनस्तनुवै चारुरेधि । प्रिये देवानां परमे जनित्र इति । ब्रह्म-

---

यदि तावदन्तरे अपक्षायेत् अथ तमग्निं संभरेत् आदाय आयतने प्रक्षिपेत्—इदं त एकमिति त्रिष्टुभा । एनं ब्रह्मणा मन्त्रसामर्थ्येन सम्भरत्येव । यद्वा—ब्रह्मणा परवस्तुना एनं सम्भरति एकीकरोति । सैव ततो दोषात् प्रायश्चित्तिः प्रायणं प्रायः अपगमः तदर्था चित्तिर्ज्ञानं प्रायश्चित्तिः । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । मन्त्रार्थस्तु—इदमपक्रान्तं एकं ते तव ज्योतिः तृतीयेन ज्योतिषेति वचनात् इदं ज्योतिरिति गम्यते । पूरणप्रत्ययस्य समानजातीयविषयत्वात् । अथ परः परस्तात् स्थितमुत्कृष्टं अजहच्छ्रौतरूपं च तव एकं रूपं द्वितीयमाहवनीयादौ स्थितं, स त्वमिदानीं अस्मिन्नपे वर्तमानः तव तृतीयेन परमात्मरूपेण ज्योतिषा संविशस्व यतः त्वं अपक्रान्तो रूपान्तरेण भवसि तेनैकीभव, व्यत्ययेनात्मनेपदम् । तत्र तस्य तथा तृतीये ज्योतिषि तनुवै शरीरस्य संवेशनः त्वम्, अत एव चारुः क्षाळितदोषो विकाररहितः भवान् देवानां प्रिये परमे प्रकृष्टे जनित्रे जनके स्थितिहेतौ यागे एधि साधकत्वेन वर्तस्व । यद्वा—निमित्तात्सप्तमी, ईदृशयागनिमित्तं चारुविकारो भवेति ॥

णैवैनꣲ संभरति । सैव ततः प्रायश्चित्तिः । [5]यदि परस्तरामपक्षायेत् । अनुप्रयायावस्येत् । सो एव ततः प्रायश्चित्तिः । [6]ओषधीर्वा एतस्य पशून्पयः प्रविशति । यस्य हविषे वत्सा अपाकृता धयन्ति॥ तान् यद्दुह्यात् । यातयाम्ना हविषा यजेत । यन्न दुह्यात् । यज्ञपरुरन्तरियात् । वायव्यां यवागूं निर्वपेत् । वायुर्वै पयसः प्रदापयिता । स एवास्मै

---

[5]यदि परस्तरामित्यादि ॥ स्वार्थिकस्तरप् । 'अल्पाच्तरम्' इति यथा । 'किमेत्तिङव्ययघादाम्' इति आमुप्रत्ययः । यदि शम्या परास्या[प्रासा]त् परस्तात् अपक्षायेत् अनुप्रयायावस्येत् तत्रैव गत्वा देवयजनमध्यवसाय यजेत अग्नये पथिकृते पुरोडाशं निर्वपेत् । श्वो भूते गृहेषु प्रत्यवस्यति सा उ सो, उकारोऽप्यर्थे । ततोऽपि दोषात् सा प्रायश्चित्तिः ॥

[6]ओषधीर्वा इति ॥ ओषधीः पशूंश्च अन्यान् पातव्यो रसः प्रविशति वत्सद्वारेण । यस्य सम्बन्धिनः पशून् हविषे अपाकृता वत्साः पिबन्ति । अथ तान् पीतपयसो यदि दुह्यात् यातयाम्ना आत्तसारेण हविषा यजेत । यदि न दुह्यात् यज्ञावयवो लुप्तः स्यात् । तस्मात् तत्स्थाने वायव्यां यवागूं निर्वपेत् । वायुर्वा इति । प्राणात्मकत्वात् प्रदापयिता वत्सैः । पयो वा इति यवागूस्तुतिः । ओषधिविकारत्वात् यवागूः ओष-

पयः प्रदीपयति । पयो वा ओषधयः । पयः पयः । पयसैवास्मै पयोऽवरुन्धे ॥ ५ ॥ अथोत्तरस्मै हविषे वथ्सानपाकुर्यात् । सैव ततः प्रायश्चित्तिः । [7]अन्यतरान् वा एष देवान्भागधेयेन व्यर्धयति । ये यजमानस्य सायं गृहमागच्छन्ति । यस्य सायं दुग्धꣳ हविरार्तिमार्च्छति । इन्द्राय व्रीहीन्निरुप्योपवसेत् । पयो वा ओषधयः । पय एवारभ्य गृहीत्वोपवसति । यत्प्रातस्स्यात् । तच्छृतं कुर्यात् ॥ ६ अथेतर ऐन्द्रः पुरोडाशस्स्यात् । इन्द्रिये एवास्मै

---

धिशब्देनोच्यते । पयसा तुल्यत्वात् पयः पातव्यरसत्वाद्वा, पयस्तु स्वयमेव पयः पातव्यरसं वा, तस्मात् पयसैव यवाग्वा पयो वत्सैः पीतमवरुन्धे । अथैवं निर्हृते दोषे उत्तरस्मै अनन्तरदिवसकर्तव्याय हविषे वत्सानपाकृत्य उपवसेत् । सा तथाकरणं ततः प्रायश्चित्तिः ॥

[7]अन्यतरान्वा इति ॥ सायमागच्छतो देवान् भागहीनान् करोति सायं दुग्धार्त्या । ततो निर्वीर्यं स्यात् । तत्र प्रायश्चित्तार्थं इन्द्राय व्रीहीन्निरुप्योपवसेत् । पयो वा इत्यादि । गतम् । यत्प्रातर्दुग्धं स्यात् तच्छृतं कुर्यात् अनार्तत्वात् । अथ अस्मात् इतर ऐन्द्रः पुरोडाशः स्यात् सायं यो निरुप्तः तस्य प्रातर्दोहेन समवदाय प्रचरेत् । प्रातर्दोहे आर्तिगतेऽप्येतदेव प्राय-

समीचीं दधाति । पयो वा ओषधयः । पयः पयः। पयसैवास्मै पयोऽवरुन्धे । अथोत्तरस्मै हविषे व- त्सानपाकुर्यात् । सैव ततः प्रायश्चित्तिः । [४]उभ- यान् वा एष देवान्भागधेयेन व्यर्धयति । ये यजं- मानस्य सायं च प्रातश्च गृहमागच्छन्ति । यस्यो- भयꣳ हविरार्तिमार्च्छति ॥ ७ ॥ ऐन्द्रं पञ्चशरावमो- दनं निर्वपेत् । अग्निं देवतानां प्रथमं यजेत् । अ- ग्निमुखा एव देवताः प्रीणाति । अग्निं वा अन्वन्या देवताः । इन्द्रमन्वन्याः । ता एवोभयीः प्रीणाति।

---

श्चित्तम् । तस्य सायं दोहे नास्य समवदाय प्रचरेत् । एवं कुर्वन् द्वे इन्द्रिये अस्य समीची सम्यगञ्चिते स्थापयति ऐन्द्रहविर्द्व- यसम्पत्त्या । पयो वा इत्यादि । गतम् ॥

[४]उभयान्वा इति ॥ उभयहविरार्त्या उभयकालगामिदेवताभाग- लोपः । तत्र प्रायश्चित्तं—ऐन्द्रं पञ्चशरावमोदनं आग्नेयं चा- ष्टाकपालं निर्वपेत् । देवतानां प्रथममिति वचनमाग्नेयस्य सर्व- देवतातृप्तिहेतुत्वं सूचयितुम् । तदेवाह—अग्निमुखा इति । अग्निं वा अन्विति । अग्निना सह वर्तन्ते काश्चिद्देवताः । इन्द्रेण सह काश्चित् । 'तृतीयार्थे' इत्यनोः कर्मप्रवचनीयत्वम् । हीने वा । अग्नेः गुणभूताः काश्चित् । इन्द्रस्य काश्चित् । उभ- यीस्ताः प्रीणाति उभाभ्यां हविर्भ्याम् । पयो वा इत्यादि। गतम् ॥

पयो वा ओषधयः । पयः पयः । पयसैवास्मै पयोऽवरुन्धे । अथोत्तरस्मै हविषे वथ्सानपाकुर्यात्॥ सैव ततः प्रायश्चित्तिः । [9]अर्धो वा एतस्य यज्ञस्य मीयते । यस्य व्रत्येऽहन्पत्न्यनालम्भुका भवति । तामपरुध्य यजेत । सर्वेणैव यज्ञेन यजते । तामिष्ट्वोपह्वयेत । अमूहमस्मि । सा त्वम् । द्यौर्-

---

[9]अर्धो वा इत्यादि ॥ यज्ञस्यैव एकदेशो हीयते । व्रतोपायनाय साधु व्रत्यमहः । अनालम्भुका अस्पर्शार्हा मलवद्वासाः। लभेः छान्दस उकञ् । 'लभेरशब्लिटोः' इति नुम् । ततश्चैकदेशलोपादकृत एव यज्ञः स्यात् । तत्र प्रायश्चित्तार्थं तामपरुध्य बहिर्येन्त्रितां स्थापयित्वा जघनेन वेदिमन्तर्वेदि वा उदक् शुल्बसन्नहनं स्तीर्त्वा यजेत । एवं कुर्वन् सर्वेणैव यज्ञेन यजते । अथ इष्टचनन्तरं यदा त्रिरात्रीणा स्यात् अथैनां मैथुनकाले उपह्वयेत—अमूहमस्मीति पङ्क्त्या, रायस्पोषायेत्यादियजुरन्तया ॥ एवं कुर्वन् यज्ञस्य यो लुप्तोऽर्धः तत्रैवैनां उपह्वयते । ततः सर्वेणैव यज्ञेन इष्टं भवतीति सा प्रायश्चित्तिः। मन्त्रार्थस्तु—अमूहमस्मि सा त्वमिति । आद्युदात्तत्वात् नायमदश्शब्दः । साम सान्त्वप्रयोगः, तत्र सान्त्वप्रयोगाधारभूतकर्मप्रक्रान्तौ दम्पती अनुरागातिशयप्रकटीकरणाय सामपदावयववर्णद्वयात्मना निरूप्येते । अमशब्दोऽहं, साशब्दस्त्वमिति । तत्रामोऽहमिति वक्तव्ये वर्णविकारः छान्दसः । अतः परस्परोपका-

हम् । पृथिवी त्वम् । सामाहम् । ऋक्त्वम् । ता-वेहि संभवाव । सह रेतो दधावहै । पुꣳसे पुत्राय वेत्तवै । रायस्पोषाय सुप्रजास्त्वाय सुवीर्यायेति । अर्ध एवैनामुपह्वयते । सैव ततः प्रायश्चित्तिः ॥१॥

दधाति यज्ञ उत एकं धर्यन्ति रुन्धे कुर्यादार्छे-त्यपाकुर्यात्पृथिवी त्वमष्टौ च ॥ १ ॥

सर्वान् वि वै यदि परस्तरामोषधीरन्यतरानु-भयानिधो वै ॥

रित्वप्रतिपादनाय द्यावापृथिवीरूपेण । 'द्यौः पिता । पृथिवी माता'* इति विशेषलाभात् । पुनरपि विश्लेषभीत्या नित्यसंयुक्तऋक्सामत्वेन वर्णना । साम गीतियोनिः । तस्या ऋग्योनित्वादेव स्त्रिया ऋक्त्वेन रूपणम् । आधारत्वाच्च । तौ तादृशौ आवां सम्भवाव तदर्थमेहि आयाहि आवां सह रेतो दधावहै एकत्र स्थापयावहै । किमर्थ—पुंसे पुत्राय नरकात्त्रायकाय पुंव्यपदेशार्हाय वेत्तवै लाभाय । कर्मणि षष्ठी । कृत्यार्थे तवैप्रत्ययः । रायः धनस्य पोषाय परंपरया सुप्रजास्त्वाय शोभनापत्योऽयमिति व्यपदेशाय सुवीर्यत्वाय चेति ॥

इति तैत्तिरीयब्राह्मणे तृतीये सप्तमे
अच्छिद्रेषु प्रथमोऽनुवाकः.

---

* ब्रा. ३-७-५.

[1]यद्विष्षण्णेन जुहुयात् । अप्रजा अपशुर्यजमानस्स्यात् । यदनायतने निनयेत् । अनायतनस्स्यात् । प्राजापत्ययर्चा वल्मीकवपायामवनयेत् । प्राजापत्यो वै वल्मीकः । यज्ञः प्रजापतिः । प्रजापतावेव यज्ञं प्रतिष्ठापयति । भूरित्याह । भूतो वै प्रजापतिः ॥१०॥ भूतिमेवोपैति । तत्कृत्वा । अन्यां दुग्ध्वा पुनर् होतव्यम् । सैव ततः प्रायश्चित्तिः । [2]यत्कीटावपन्नेन जुहुयात् । अप्रजा अपशुर्यजमानस्स्यात् । यदनायतने निनयेत् । अनायतनस्स्यात् । मध्यमेन पर्णेन द्यावापृथिव्यर्चाऽन्तःपरिधि निनयेत् । द्यावापृथिव्योरेवैनत्प्रति-

---

[1]यद्विष्षण्णेनेत्यादि ॥ अग्निहोत्रेण सान्नाय्येन वा विष्षण्णेन विष्यन्दितेन यदि जुहुयात् प्रजापशुहीनस्स्यात् । प्रजायत इति प्रजाः, असुन् ततस्तत्पुरुषे अव्ययपूर्वपदप्रकृतिस्वरत्वम् । अग्न्यायतनादन्यत्र निनयने स्वयमपि हीनग्रहस्स्यात् । प्राजापत्ययेति । 'प्रजापते न त्वत्'* इति । भूरित्युपस्थानम् । गतमन्यत् । अन्यामिति । यस्या दुग्धं विष्षण्णं ततोऽन्याम् ॥

[2]यत्कीटावपन्नेनेति ॥ कीटावपन्नं कीटेनावपत्य दूषितम् । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । पर्णेन पलाशपत्रेण ।

---

* सं. १-२-५.

ष्ठापयति ॥ ११ ॥ तत्कृत्वा । अन्यां दुग्ध्वा पुनर् होतव्यम् । सैव ततः प्रायश्चित्तिः । [3]यदवंवृष्टेन जुहुयात् । अपरूपमस्यात्मञ्जायेत । किलासो वा स्यादर्शसो वा । यत्प्रत्येयात् । यज्ञं विच्छिन्द्यात् । स जुहुयात् । मित्रो जनान्कल्पयति प्रजानन् ॥ मित्रो दाधार पृथिवीमुत द्याम् । मित्रः कृष्टीरनिमिषाऽभिचष्टे । सत्याय हव्यं घृतवज्जुहोतेति । मित्रेणैवैनत्कल्पयति । तत्कृत्वा । अन्यां दुग्ध्वा पुनर् होतव्यम् । सैव ततः प्रायश्चित्तिः । [4]यत्पूर्वं·

द्यावापृथिव्यया 'मही द्यौः पृथिवी च नः'* इत्यनया । 'द्यावापृथिवीशुनासीर' इति यत् । द्यावापृथिव्योः प्रतिष्ठापनया अविनष्टत्वम् ॥

[3]अववृष्टं अवपतितेन वर्षेण दूषितम् । अपरूपं अपकृष्टं निन्दितं रूपमात्मनि प्रादुर्भवेत् । किलासः कुष्ठी, अर्शसा तद्वानर्शसः, अर्शआदिलक्षणोऽच् । यत्प्रत्येयात् यद्यहुत्वैव प्रत्यागच्छेत्, यज्ञो विच्छिन्नस्स्यात् । मित्रो जनानिति । 'त्वमग्ने बृहत्'† इत्यत्र व्याख्याता । कल्पयति इष्टसाधनसमर्थं करोति ॥

[4]द्विपाद्भिरिरिति ॥ आहुतिद्वित्वनाशनात् । 'द्वित्रिभ्यां पाद्दन्' इति उत्तरपदान्तोदात्तत्वम् । अभिहोमः पूर्वस्या उपरिहोमः ।

* सं. ३-३-१०. † सं. ३-४-११.

स्यामाहुत्याꣳ हुतायामुत्तराऽऽहुतिस्स्कन्देत् । द्विपाद्भिः पशुभिर्यजमानो व्यृद्ध्येत । यदुत्तरयाऽभिजुहुयात् ॥ १ ३ ॥ चतुष्पाद्भिः पशुभिर्यजमानो व्यृद्ध्येत । यत्र वेत्थ वनस्पते देवानां गुह्या नामानि । तत्र हव्यानि गामयेति वानस्पत्ययर्चा समिधमाधाय । तूष्णीमेव पुनर्जुहुयात् । वनस्पतिनैव यज्ञस्यार्तीं चानार्तीं चाहुती विदाधार । तत्कृत्वा । अन्यां दुग्ध्वा पुनर् होतव्यम् । सैव ततः प्रायश्चित्तिः । [5]यत्पुरा प्रयाजेभ्यः प्राङ्ङ्गारस्स्क-

---

चतुष्पाद्भिरिति । आहुतिद्रव्यनाशेन आहुतिद्रव्यकारणचतुष्पान्नाशः। तत्र 'यत्र वेत्थ' इति ऋचा गायत्र्या समिधमाधाय तूष्णीमेव पुनर्जुहुयात् । तत एवं कुर्वन् आर्तानार्ते आहुती देवेषु विदाधार पृथगेव धारयति स्थापयति । यथा आर्ता अनार्ता न भवति यथा चानार्ता आर्ता न भवति तथा करोति । 'तुजादीनाम्' इत्यभ्यासस्य दीर्घत्वम् । मन्त्रार्थस्तु—हे वनस्पते! वनस्पतिविकार! समिद्रूप! देवानां गुह्यानि नामानि नमनस्थानानि यत्र वेत्थ जानासि यत्र देवाः स्थिताः तत्र एतानि हव्यानि गामय गमय । ह्रस्वाभावश्छान्दसः ॥

[5]यत्पुरा प्रयाजेभ्य इति ॥ अकं दुःखं सुखाभाव एव वा भवति । बहिःपरिधि स्कन्दने दक्षिणा दक्षिणस्याम् । दक्षिणा-

न्देत् । अध्वर्यवे च यजमानाय चाकꣳ स्यात् ॥ यद्दक्षिणा । ब्रह्मणे च यजमानाय चाकꣳ स्यात् । यत्प्रत्यक् । होत्रे च पत्नियै च यजमानाय चाकꣳ स्यात् । यदुदङ् । अग्नीधे च पशुभ्यश्च यजमानाय चाकꣳ स्यात् । यदभि जुहुयात् । रुद्रोऽस्य पशून्घातुकस्स्यात् । यन्नाभि जुहुयात् । अशान्तः प्रहियेत ॥ स्रुवस्य बुध्नेनाभि निदध्यात् । मा तमो मा यज्ञ-

दाच्प्रत्ययः । क्रियाविशेषणम् । अथ स्कन्नस्याङ्गारस्य उपरि यदि जुहुयात् रुद्रः क्रुद्धः पशूनां हननशीलस्स्यात् बहिर्भावमसहमानः । 'लषपतपद' इत्युकञ् । अनभिहोमे तु अशान्तः असुखहेतुरेवाग्नौ प्रहियेतायमङ्गारः तस्मात्स्रुवस्य बुध्नेन मूलेन अभिनिदध्यात् उपर्याक्रमेत्—मा तम इति पङ्क्त्या, अमुमित्यादियजुरन्तया । हे अग्ने! मा तमः मा नशः यज्ञो यजमानश्च मा तमत् मा नशत् । पुषादित्वादङ् । हे अग्ने! रुद्रात्मन्! नमः ते अस्तु नमश्चिकीर्षुरग्निं रुद्रात्मनाऽऽमन्त्रयते 'यस्मै नमः'* इति नियमात् । आयते आगच्छते नमः मा गा इति यावत् । किं गत्वा आगम्यत इति आगमाक्षेपणमेव निषिध्यते 'शतुरनुमः' इति विभक्तेरुदात्तत्वम् । परायते परागच्छते च तुभ्यं नमः तत्र वा अत्र वा को विशेषः प्रसन्नो यदि स्यादिति भावः । गत्वाऽपि शीघ्रमागन्तव्यमिति वा, तस्मात्

* आ. २-१९.

स्तेमन्मा यजमानस्तमत् । नमस्ते अस्त्वायते । नमो रुद्र परायते । नमो यत्र निषीदसि । अमुं मा हिꣳसीरमुं मा हिꣳसीरिति येन स्कन्देत् । [6]तं प्रहरेत् । सहस्रशृङ्गो वृषभो जातवेदाः । स्तोमपृष्ठो घृतवान्थ्सुप्रतीकः । मा नो हासीन्मे*त्थितो ने-

कोऽर्थो गमनेनेति भावः । पूर्ववद्विभक्तेरुदात्तत्वम् । अथ यत्र निषीदसि गत्वा आसिष्यसि तस्मै च स्थानाय नमः । किमर्थं स्थानान्तरपरिग्रह इति भावः । यदि गन्तव्यं मन्यसे मा तत्र निषीद इति वा । अथ वा—सर्वावस्थागतो देवः नमस्कारेणाराध्यते । यत्र यदेत्यर्थः । निषीदते च तुभ्यं नम इति सर्वदा प्रसीदेति विवक्षितम् । अमुमिति सामान्यनिर्देशो विशेषार्थः । वीप्सा सर्वदिगर्था । येन स्कन्देदिति तत्तद्विशेषोपस्थापनया ब्राह्मणं वा । एतदुक्तं भवति—येन दिग्भागेन अङ्गारः स्कन्देत् तत्र यस्यां कस्यां प्रागुक्तं तमध्वर्य्वादिकं अमुमित्यत्र निर्दिश्य मा हिंसीरिति तस्याहिंसां प्रार्थयेतेति । तद्यथा—अध्वर्युं मा हिंसीरिति ॥

[6]अथ तमङ्गारं अग्नौ प्रहरेत्—सहस्रशृङ्ग इति त्रिष्टुभा ॥ सहस्रशृङ्गः बहुज्वालः वृषभः वर्षिता कामानां जातवेदाः जातानां वेदिता स्तोमपृष्ठः स्तोमैः त्रिवृदादिभिः साध्यः स्तुतः । घृतवान् घृताहुतिमान् सुप्रतीकः शोभनारम्भः शोभनज्वालो वा तादृशस्त्वं अस्मान् मा हासीः मा त्याक्षीः मेत्थितः मेधितः

* भाष्यानुसारी तु पाठः "हासीर्मे" इत्येवं स्यात्.

त्वा जहामि । गोपोषं नो वीरपोषं च यच्छेति । ब्रह्मणैवैनं प्रहरति । सैव ततः प्रायश्चित्तिः॥ १६ ॥

वै प्रजापतिस्स्थापयति प्रजानन्नभि जुहुया-ध्स्याद्धूयेत जहामि त्रीणि च ॥ २ ॥

यद्विष्षण्णेन प्राजापत्यया यत्कीटा मध्यमेन यदववृष्टेन यत्पूर्वस्यां यत्पुरा प्रयाजेभ्यः प्राङ्ङङ्गा-रो यद्दक्षिणा यत्प्रत्यग्यदुदङ् ॥

'वि वा एष इन्द्रियेण वीर्येणर्ध्यते । यस्याहि-ताग्नेरग्निर्मथ्यमानो न जायते । यत्रान्यं पश्येत् ।

---

अस्माभिरेकीभूतः, मेथृ सङ्गमे वर्णोपजनश्छान्दसः । वयमपि त्वा नेत् नैव जहाम त्यजाम तथा नः त्वं अस्मभ्यं गोपोषं गवादिपोषं वीरपोषं वीरपुष्टिं पुत्रादिपुष्टिं च यच्छ देहि कुर्विति यावत् ॥

इति तैत्तिरीयब्राह्मणे तृतीये सप्तमे अच्छिद्रेषु द्वितीयोऽनुवाकः.

---

'वि वा इत्यादि ॥ यस्याहिताग्नेर्मथने कर्तव्ये सति अग्निर्म-थ्यमानो न जायते स एष इन्द्रियेण वीर्येण व्यृद्ध्यते विहीनो भवति । तत्राग्निहोत्रकालसन्निकर्षे चेत् कंचिदप्यन्यमाहृत्य

ततं आहृत्यं होतव्यम् । अग्नावेवास्याग्निहोत्रꣳ हुतं भवति । [2]यद्यन्यं न विन्देत् । अजायाꣳ होतव्यम् । आग्नेयी वा एषा । यदजा । अग्नावेवास्याग्निहोत्रꣳ हुतं भवति ॥ १७॥ अजस्य तु नाश्नीयात् । यदजस्याश्नीयात् । यामेवाग्नावाहुतिं जुहुयात् । तामद्यात् । तस्मादजस्य नाश्यम् । [3]यद्यजां न विन्देत् । ब्राह्मणस्य दक्षिणे हस्ते होतव्यम् । एष वा अग्निर्वैश्वानरः । यद्ब्राह्मणः। अग्नावेवास्याग्निहोत्रꣳ हुतं भवति ॥ १८ ॥ ब्राह्मणं तु वसत्यै नापरुन्ध्यात् । यद्ब्राह्मणं वसत्या अप-

---

जुहुयात् अग्निहोत्रं शीघ्रम् । अथात्वरमाणः पुनर्मन्थेत् । एवं कृते अग्नावेव मुख्येऽग्निहोत्रं हुतं भवति ॥

[2]अन्यस्याग्नेरलाभे अजायां होतव्यं दक्षिणे कर्णे । तस्या आग्नेयत्वात् । एवं कृतेऽग्नावेव हुतं भवति । किन्तु तत ऊर्ध्वं अजस्य नाश्नीयात् । कर्मणि षष्ठी । यद्यश्नीयात् या त्वग्नौ अन्याऽप्याहुतिः साऽप्यनेन भक्षिता स्यात् । तस्मादजं नाश्नीयात् ॥

[3]अजाया अलाभे तु ब्राह्मणस्य दक्षिणे हस्ते होतव्यम्, स्वयं वैश्वानरोऽग्निः ब्राह्मणः । गतमन्यत् । ततः परन्तु ब्राह्मणं वसतिकामं ततो नापरुन्ध्यात् न प्रत्याचक्षीत । अपरोद्धा तु

रुन्ध्यात् । यस्मिन्नेवाग्नावाहुतिं जुहुयात् । तं भागधेयेन व्यर्धयेत् । तस्माद्ब्राह्मणो वसत्यै नापरुध्यः । [4]यदि ब्राह्मणं न विन्देत् । दर्भस्तम्बे होतव्यम् । अग्निवान् वै दर्भस्तम्बः । अग्नावेवास्याग्निहोत्रꣳ हुतं भवति । दर्भाꣳस्तु नाध्यासीत ॥ १९

यद्दर्भानध्यासीत । यामेवाग्नावाहुतिं जुहुयात् । तामध्यासीत । तस्माद्दर्भा नाध्यासितव्याः । [5]यदि दर्भान्न विन्देत् । अप्सु होतव्यम् । आपो वै सर्वा देवताः । देवतास्वेवास्याग्निहोत्रꣳ हुतं भवति । आपस्तु न परिचक्षीत । यदापः परिचक्षीत ॥ २०

---

**यस्मिन्नग्नौ** अन्या आहुतिः हुता तमपि विहीनभागं कुर्यात्, तस्मान्नापरोध्यः । छान्दसः क्यप् ॥

[4]ब्राह्मणालाभे **दर्भस्तम्बे होतव्यम्** । **अग्निवानिति** । 'छन्दसीरः' इति मतो वत्वम् । दर्भाध्यासने सर्वस्याहुतिमध्यासिता स्यात् ॥

[5]दर्भाभावे **अप्सु होतव्यं**, अग्नेस्सर्वदेवतात्मकत्वात् सर्वदेवतात्मिकास्वप्सु हुतं अग्नावेव **हुतं भवति** । **न परिचक्षीतेति**, सर्वत्र प्राप्तावेकदेशवर्जनं परिसंख्या, यथा इमा भोजनीया इति, तां न कुर्यात् । अन्यथा अप्सु कृतां सर्वामप्याहुतिं **परिचक्षीत**।

यामेवाफ्स्वाहुतिं जुहुयात् । तां परिचक्षीत । तस्मादापो न परिचक्ष्याः । [6]मेध्या च वा एतस्यामेध्या च तनुवौ सꣳसृज्येते । यस्याहिताग्नेरन्यैरग्निभिरग्नयस्सꣳसृज्यन्ते । अग्नये विविचये पुरोडाशमष्टाकपालं निर्वपेत् । मेध्यां चैवास्यामेध्यां च तनुवौ व्यावर्तयति । अग्नये व्रतपतये पुरोडाशमष्टाकपालं निर्वपेत् । अग्निमेव व्रतपतिꣳ स्वेन भागधेयेनोपधावति । स एवैनं व्रतमालम्भयति ॥ [7]गर्भꣳ स्रवन्तमगदमकः । अग्निरिन्द्रस्त्वष्टा बृहस्पतिः । पृथिव्यामवचुश्चोतैतत् । नाभिप्राप्नोति

---

परिचक्ष्या इति 'छन्दस्युभयथा' इति ण्यतः सार्वधातुकत्वात् ख्याञादेशाभावः । सांवत्सरिकाण्येतानि व्रतानीत्याश्मरथ्यः, यावज्जीवमित्यालेखनः ॥

[6]मेध्या चेत्यादि ॥ गतम् ॥ अमेध्येति । 'ययतोश्चातदर्थे' इत्युत्तरपदान्तोदात्तत्वम् । व्रातपतिं द्वितीयामिष्टिं कुर्यात् ॥

[7]गर्भं स्रवन्तमिति विराजा अग्निहोत्रस्थालीं स्रवन्तीमभिमन्त्रयते ॥ गर्भं गर्भतुल्यं इदं होमद्रव्यं स्रवन्तं स्थानान्निर्गच्छन्तं अगदं अविनाशं अकः करोतु । छान्दसे लुङि 'मन्त्रे घस' इति च्लेर्लुक् । अग्निश्चेन्द्रश्च त्वष्टा च बृहस्पतिश्च ।

निर्ऋतिं पराचैः । [4]रेतो वा एतद्वाजिनमाहिताग्नेः । यदग्निहोत्रम् । तद्यत्स्रवेत् । रेतोऽस्य वाजिनꣲ स्रवेत् । गर्भꣲ स्रवन्तमगदमकरित्याह । रेत एवास्मिन्वाजिनं दधाति ॥ २२॥ अग्निरित्याह । अग्निर्वै रेतोधाः । रेत एव तद्दधाति । इन्द्र इत्याह । इन्द्रियमेवास्मिन्दधाति । त्वष्टेत्याह । त्वष्टा वै पशूनां मिथुनानाꣲ रूपकृत् । रूपमेव पशुषु दधाति । बृहस्पतिरित्याह । ब्रह्म वै देवानां बृहस्पतिः । ब्रह्मणैवास्मै प्रजाः प्रजनयति । पृथिव्यामवचुश्चोतैतदित्याह । अस्यामेवैनत्प्रतिष्ठापय-

---

ततः तथाकृते पृथिव्यामेव एतद्द्रव्यं अवचुश्चोत अवक्षरितमस्तु पृथिवीस्थमेव अस्मदर्थे अविनष्टं तिष्ठतु । निरृर्तिं रक्षः प्रभृतीनि नाभिप्राप्नोति आभिमुख्येन न प्राप्नोतु पराचैः अस्मत्पराङ्मुखम् ॥

अत्रैव ब्राह्मणमान्तादनुवाकस्य—रेतो वा इत्यादि ॥ रेतःस्थानीयं वाजिनस्थानीयं चाग्निहोत्रं, पशुनिष्पत्तिहेतुत्वात् । गतमन्यत् । अस्यामेवेति । अविनष्टमेवार्थं स्थापयति । रक्षसा-

ति । नाभिप्राप्नोति निरृतिं पराचैरित्याह । रक्षसामपहत्यै ॥२३॥

अजा ऽग्नावेवास्याग्निहोत्रꣳ हुतं भवति भवत्यासीत परिचक्षीत लम्भयति दधाति देवानां बृहस्पतिः पञ्च च ॥ ३ ॥

वि वै यद्यन्यमजायां ब्राह्मणस्य दर्भस्तम्बे ऽप्सु होतव्यम् ॥

[1]याः पुरस्तात्प्रस्रवन्ति । उपरिष्टाथ्सर्वतश्च याः ।

---

मिति निरृतिपदं व्याख्यातम् ॥

इति तैत्तिरीयब्राह्मणे तृतीये सप्तमे अच्छिद्रेषु तृतीयोऽनुवाकः.

---

[1]प्रणीताः प्रणीयमाना अनुमन्त्रयते—याः पुरस्तादिति ॥ आनुष्टुभोऽनुवाकः । विशेषो वक्ष्यते । याः आपः पुरस्तात् पूर्वस्यां दिशि प्रस्रवन्ति नद्यो भूत्वा प्रकर्षेण गच्छन्ति । उपरिष्टात् ऊर्ध्वायां दिशि याः प्रस्रवन्तीत्येव । आदित्यरश्मिषु प्रविशन्ति । सर्वतः सर्वासु च दिक्षु याः प्रस्रवन्ति नदीकुल्यादिरूपेण । ताभिः सर्वाभिः रश्मिपवित्राभिः सूर्यरश्मयः पवित्रं शोधका यासां तादृशीभिः अद्भिः श्रद्धां श्रद्धेयं

ताभी॑ र॒श्मिप॑वित्राभिः । श्र॒द्धां य॒ज्ञमार॑भे । [2]देवा॑ गातुविदः । गा॒तुं य॒ज्ञाय॑ विन्दत । मन॑स॒स्पति॑ना दे॒वेन॑ । वाता॑द्य॒ज्ञः प्रयु॑ज्यताम् । [3]तृ॒तीय॑स्यै दि॒वः। गा॒य॒त्रि॒या सोम॒ आभृ॑तः ॥ २४ ॥ सो॒म॒पी॒था॒य॒

श्रद्धासाध्यं यज्ञमारभे । यद्वा—'श्रद्धा वा आपः'* इति तादृशीभिरद्भिः साध्यं यज्ञमारभे । ताभिः श्रद्धावन्तं वा ॥

[2]विहृतेष्वग्निषु अन्वाधानात् प्राक् जपति—देवा गातुविद इति ॥ हे देवाः! देवनशीलाः! गातुविदः! गमनज्ञाः! यज्ञनिर्वहणोपायज्ञाः! यज्ञाय यज्ञनिर्वृत्त्यर्थं गातुं गतिं विन्दत लभध्वम् । मनसस्पतिना मनसोपि पालयित्रा परमात्मना देवेन दीप्तिमता वातात्सर्वपरिस्पन्दाश्रयात् प्राणात् ईश्वरस्य क्रियाशक्तिरूपात् अपादाय यज्ञः प्रयुज्यतां निर्वर्त्यताम् ॥

[3]परिवेषपरिवासनशकलमादाय प्रज्ञातं निदधाति—तृतीयस्यै दिव इति ॥ तृतीयात् द्युसंज्ञिकाल्लोकात् । यद्वा—द्योतनात्सर्वे लोका दिवः, यथा 'तृतीयस्यामितो दिवि सोम आसीत्'† इति। ततो लोकात् गायत्रिया सोम आभृतः आहृतः पुरा, पलाशश्चायं सोमाहरणकाले छिन्नं तदीयं पर्णं, तस्मात् अन्तरं तयोर्मध्ये स्थितं वकलं आददे गृह्णामि । किमर्थं? सोमपीथाय सोमपानाय सन्नयितुं सन्नेतुम् । छान्दस इडागमः । 'सोमः खलु वै सान्नाय्यम्'‡ इति तस्य सोमतुल्यत्वात् । सान्नाय्यकरणं

* ब्रा. ३-२-४. † ब्रा. ३-२-१. ‡ ब्रा. ३-२-३.

संनयितुम् । वकलमन्तरमाददे । [4]आपो देवीश्शुद्धास्स्थ । इमा पात्राणि शुन्धत । उपातङ्क्याय देवानाम् । पर्णवल्कमुत शुन्धत । [5]पयो गृहेषु पयो अघ्नियासु । पयो वत्सेषु पय इन्द्राय हविषे ध्रियस्व । गायत्रीपर्णवल्केन । पयस्सोमं करोत्वि-

---

सोमपानायोपचर्यते । सान्नाय्यस्य तदातञ्चननिमित्तत्वात् तादर्थ्यं वकलादानस्य ॥

[4]सान्नाय्यपात्रप्रोक्षणे जपति—**आपो देवीरिति** ॥ **देवीः** देवनवत्यः । पूर्वसवर्णः । नित्यं **शुद्धाः स्थ** यूयम् । ता यूयं **इमा** इमानि **पात्राणि शुन्धत** शोधयत । किञ्च—**देवानां** पयसः **उपातङ्क्याय** आतञ्चनार्थं **पर्णवल्कं** पलाशशकलमपि **शुन्धत** तदपि तत्र निधाय प्रोक्षणं युक्तमिति गम्यते ॥

[5]वल्केनातञ्चनपक्षे आतञ्चनमन्त्रः—**पयो गृहेष्विति** त्रिष्टुप् ॥ द्वितीयः पादो विवृद्धाक्षरः । यत्पयः **गृहेषु** प्रजाभिः उपयुज्यते । **अघ्नियासु** गोषु च यत्पयस्तिष्ठति, **वत्सेषु** च यत्पयः पीतमास्ति यच्चेदं **पयः** त्वयि निहितं एतत्सर्वमपि **इन्द्राय** हविरुत्पादनार्थं **ध्रियस्व** धारय । अन्तर्भावितण्यर्थः । यद्वा— गृहादिष्विव त्वयि निहितमपि पयो यस्माद्धविरर्थमेव, तस्मात् ते बिभ्रति त्वं ध्रियस्व गृहादय इव त्वमविचला अवतिष्ठस्व । ततः त्वयि तादृश्यां सत्यां **गायत्रीपर्णवल्कातञ्चनेनेदं पयः सोमसदृशं करोतु** । सोमापेक्षं इममिति पुल्लिङ्गत्वम्॥

मम् ॥ २५ ॥ [6]अग्निं गृह्णामि सुरथं यो मयोभूः । य उद्यन्तमारोहति सूर्यमह्ने । आदित्यं ज्योतिषां ज्योतिरुत्तमम् । श्वो यज्ञाय रमतां देवताभ्यः । [7]वसून्रुद्रानादित्यान् । इन्द्रेण सह देवताः । ताः पूर्वः परिगृह्णामि । स्व आयतने मनीषया । [8]इ-मामूर्जं पञ्चदशीं ये प्रविष्टाः । तान्देवान्परि गृ-

[6]आहवनीयान्वाधाने जपः—अग्निं गृह्णामीति ॥ प्रथमा त्रिष्टुप् । जगती वा, तृतीयाचतुर्थ्यौ जगत्यौ । अग्निं सुरथं शोभनरंहणं गृह्णामि पूर्वम्, योऽग्निः मयोभूः सुखस्य भावयिता प्रजानां, यश्च उद्यन्तं सूर्यमारोहति । यथोक्तं 'उद्यन्तं वावादित्यमग्निरनु समारोहति'* इति । अह्ने अह्नो निर्वृत्त्यर्थम् । सूर्यं विशिनष्टि—आदित्यं अदितेः पुत्रं ज्योतिषां उत्तमं ज्योतिः ईदृशं सूर्यं य आरोहति तं अग्निं गृह्णामि । किमर्थं श्वो देवताभ्यः देवता आराधयितुं यज्ञाय यज्ञनिर्वृत्तये यजमानो रमतामित्येवमर्थम् ॥

[7]वसूनित्यादि ॥ वसून् रुद्रान् आदित्यान् अन्याश्च देवताः इन्द्रेण सह या वर्तन्ते मरुदादयः तास्सर्वाः पूर्वः प्रथमभाव्यहं परिगृह्णामि अग्नेरनन्तरं स्व आयतने आहवनीये गृह्णामि मनीषया मनस ईशया विशिष्टया प्रज्ञया ॥

[8]इमामूर्जमिति ॥ इमां प्रत्यासन्नां ऊर्जं अन्नस्य हेतुं पञ्चदशीं तिथिं ये प्रविष्टाः तान् देवान् पूर्वोऽहं परिगृह्णामि ।

* ब्रा. २-१-२.

ह्वामि पूर्वैः ॥ २६ ॥ अग्निर् हव्यवाडिह तानावहतु । पौर्णमासꣳ हविरिदमेषां मयि । आमावास्यꣳ हविरिदमेषां मयि । [9]अन्तराऽग्नी पशवः । देवसꣳसदमागमन् । तान्पूर्वः परि गृह्णामि । स्व आयतने मनीषया । [10]इह प्रजा विश्वरूपा रमन्ताम् । अग्निं गृहपतिमभि संवसानाः । ताः पूर्वः

---

अयं अग्निः हव्यवाट् हविषां वोढा तान् देवान् इह आवहतु । किमर्थं? इदं पौर्णमासं हविरेषामर्थे मयि वर्तते तदर्थं तानावहतु । आमावास्यमिति । इमामूर्जमित्यादिकायाः चतुर्थः पादः । अमावास्यायाम् । पादत्रयं समानम् । आमावास्यं हविः इदं एषां कृते मयि वर्तते इति ॥

[9]अन्तरा गार्हपत्याहवनीयौ वेद्यां स्थितो जपति—अन्तरेति॥ अग्नी गार्हपत्याहवनीयौ अन्तरा तयोर्मध्ये प्रदेशं देवसंसदं देवानां सहावस्थानाधिकरणम् । सीदतेः संपदादित्वादधिकरणे क्विप् । तत् स्थानं पशवः आगमन् आगताः तस्मात् तान् तत्रस्थान् पूर्वैः परिगृह्णामीत्यादि । गतम् ॥

[10]गार्हपत्यान्वाधाने जपः—इह प्रजा इति ॥ द्वे पङ्क्ती । इह स्थाने निमित्ते प्रजाः विश्वरूपाः पुत्रपौत्रदासादिरूपाः रमन्तां क्रीडन्तु । अग्निं गृहपतिं अभि गृहपतिना अग्निना इत्थंभूता रमन्ताम् । 'अभिरभागे' इति इत्थंभूतत्वे कर्मप्रवच-

परिगृह्णामि ॥२७॥ स्व आयतने मनीषयां ।
[1]इह पशवो विश्वरूपा रमन्ताम् । अग्निं गृहपति-
मभि संवसांनाः । तान्पूर्वः परिगृह्णामि । स्व आय-
तने मनीषयां । [2]अयं पितृणामग्निः । अवांड्ढव्या
पितृभ्य आ । तं पूर्वः परिगृह्णामि । अविषं नः
पितुं करत् । [3]अजस्रं त्वाꣳ सभापालाः ॥२८॥
विजयभागꣳ समिन्धताम् । अग्ने दीदाय मे स-

---

नीयत्वम् । संवसानाः तेन सह वसन्त्यः तेन आत्मानं छाद-
यन्त्यो वा तत्स्वामित्वात् । ताः पूर्व इत्यादि गतम् ॥

[11]इह पशव इति ॥ पूर्वया व्याख्याता । तानिति विशेषः ।
पशवो गवादयः ॥

[12]दक्षिणाग्निमुपतिष्ठते—अयं पितृणामिति ॥ अयं पितृणां
सम्बन्धी अग्निः, तस्मात्पितृभ्यः हव्यानि आऽवाट् आवहति ।
वहेः छान्दसे लुङि हलन्तलक्षणायां वृद्धौ इडभावे रूपम् । त-
महं पूर्वः परिगृह्णामि । सोऽपि अस्माकं अविषं पथ्यं पितुं
अन्नं करत् करोतु । लुङि 'कृमृदृरुहिभ्यः' इत्यङ् ॥

[13]सभ्यमुपतिष्ठते—अजस्रमिति ॥ हे सभ्य ! सभायां साधो !
यत्र दीव्यन्ति तां सभां पालयन्तः अस्मदीयाः त्वां विजय-
भागं दीव्यतां विजया भागा यस्य तादृशं त्वां अजस्रं अ-
नुपरतं समिन्धतां तत्रस्थं त्वां सम्यक् ज्वलयन्तु, हे अग्ने!

भ्य । विजित्यै शरदश्शतम् । [14]अन्नमावसथीयम् । अभिहराणि शरदश्शतम् । आवसथे श्रियं मन्त्रम् । अहिर्बुध्नियो नियच्छतु । [15]इदमहमग्निज्येष्ठेभ्यः । वसुभ्यो यज्ञं प्रब्रवीमि । इदमहमिन्द्रज्येष्ठेभ्यः ॥ २१ ॥ रुद्रेभ्यो यज्ञं प्रब्रवीमि । इदमहं वरुणज्येष्ठेभ्यः । आदित्येभ्यो यज्ञं प्रब्रवीमि ।

---

तथा समिद्धः त्वं मदर्थं दीदाय दीप्य । दीदिरिति छान्दसः अभ्यस्तसंज्ञः । ततः छान्दसो लिट् । शरदश्शतं शतं वर्षाणि मम विजित्यै विजयाय ॥

[14]आवसथ्यमुपतिष्ठते—अन्नमिति ॥ आवसथीयं आवसथप्रयोजनं आवसथे भवं वा यदावसथ्याय भवति तदन्नं अभिहराणि आभिमुख्येनोपहरामि । शरदश्शतम् । गतम् । स चाहिर्बुध्नियः अस्माकमावसथे गृहे श्रियं धनादिसमृद्धिं मन्त्रं ऋगादिसमृद्धिं च नियच्छतु ददातु ॥

[15]सर्वेष्वन्वाहितेषु जपति—इदमित्यादि यजुः ॥ इदमिति क्रियाविशेषणं, इदं प्रब्रवीमि युष्मदर्थोऽयमिति विवृणोमि यज्ञं अहं इमं आचरन् । अग्निज्येष्ठेभ्यः अग्निप्रधानेभ्यः वसुभ्यः । इन्द्रप्रधानेभ्यः रुद्रेभ्यः । वरुणप्रधानेभ्यः आदित्येभ्य इति सर्वेषां युगपत्, यज्ञभेदाभावात् अग्निनियमाभावाच्च ॥

[16]पयस्वतीरोषधयः । पयस्वद्वीरुधां पयः । अपां पयसो यत्पयः । तेन मामिन्द्र सꣳसृज । [17]अग्ने व्रतपते व्रतं चरिष्यामि । तच्छकेयं तन्मे राध्यताम् । वायो व्रतपत आदित्य व्रतपते ॥ ३० ॥ व्रतानां व्रतपते व्रतं चरिष्यामि । तच्छकेयं तन्मे राध्यताम् । [18]इमां प्राचीमुदीचीम् । इषमूर्जमभि सꣳस्कृताम् । बहुपर्णामशुष्काग्राम् । हरामि प-

[16]जायापत्योरशनम्—पयस्वतीरिति॥ व्याख्यातेयं 'मम नाम'* इत्यत्र ॥

[17]व्रतमुपैष्यन् जपति—अग्ने व्रतपत इत्यादि यजुः ॥ तत्रैव* व्याख्यातम् । प्रथमो मन्त्रो ब्राह्मणस्य, उत्तरे त्रयः क्षत्रियवैश्ययोः । सर्वे वा ब्राह्मणस्य ॥

[18]शाखामाहरति—इमामिति ॥ मन्त्रलिङ्गात् प्राच्या उदीच्या प्रागुदीच्या आहरणम् । इमां प्राचीं प्रागञ्चितां उदीचीं उदगञ्चितां उभयाञ्चितां वा शाखां आहरामि । इषं अन्नं ऊर्जं रसं चाभिसंस्कृतां शाखारूपेण परिणतां, यद्वा—इडूर्जोः हेतुभूतां मन्त्रेणाभिसंस्कृतां बहुपर्णां बहुपलाशाम् । 'बहोर्नञ्वत्' इत्युत्तरपदान्तोदात्तत्वम् । अशुष्काग्रां पशुपां पशूनां पालयित्रीम् ॥

* तै. सं. १-६-१०.

शुपामहम् । [19]यत्कृष्णो रूपं कृत्वा । प्राविशस्त्वं वनस्पतीन् । ततस्त्वामेकविंशतिधा । संभरामि सुसंभृता ॥ ३१ ॥ [20]त्रीन्परिधीꣳस्तिस्रस्समिधः । यज्ञायुरनु संचरान् । उपवेषं मेक्षणं धृष्टिम् । संभरामि सुसंभृता । [21]या जाता ओषधयः । देवे-

[19]शुल्ब इध्मं संभरति—यत्कृष्ण इति द्वाभ्याम् ॥ हे अग्ने! यत् यस्मात् त्वं कृष्णो मृगो भूत्वा रूपं च तदीयं कृत्वा वनस्पतीन् त्वं प्राविशः प्रविष्टवानसि । यथा—'अग्निर्देवेभ्यो निलायत । कृष्णो रूपं कृत्वा'[1] इत्यादि । तस्मात् त्वां एकविंशतिधा एकविंशतिवनस्पत्यवयवेध्मरूपेण वर्तमानं संभरामि सर्वावयवसहितं एकत्र संगृह्णामि । सुसंभृता सुष्ठु संभ्रियते येन तादृशेन शुल्बेन ॥

[20]त्रीनित्यादि ॥ त्रीन् परिधीन् परितो धेयान् तिस्रः समिधः ऊर्ध्वानूयाजसमिदाख्याः यज्ञायुः अनुयाजसमिधं दीर्घकालं यज्ञस्य रक्षकत्वात्, समुदायेनोक्तस्यापि पुनर्वचनं स्तुत्यर्थम् । यज्ञ मेति व्याप्नोतीति यज्ञायुः । अनुसंचरान् अन्याः पञ्चदश स मिधः अनुगता एव सञ्चरन्ति एकस्मिन् काले प्रक्षिप्यन्त इति । उपवेषं अङ्गारोदङ्गिरूहणे, मेक्षणं चरोरुपादाने, धृष्टिं अङ्गार-प्रत्यङ्गिरूहणे, संभरामीत्यादि गतम् ॥

[21]परिस्तरणानामाहरणच्छेदनसंनहनमन्त्राः क्रमेण—या जाता

[1] ब्रा. १-१-६.

भ्यस्त्रियुगं पुरा । तासां पर्वं राध्यासम् । परिस्तरमाहरन् । [22]अपां मेध्यं यज्ञियम् । सदेवꣳ शिवमस्तु मे ॥ ३२॥ आच्छेत्ता वो मा रिषम् । जीवानि शरदश्शतम् । [23]अपरिमितानां परिमिताः । संनह्ये सुकृताय कम् । एनो मा निगाँ कतमच्च-

इत्याद्याः ॥ तृतीया पङ्क्तिः । या जाता इत्यग्निकाण्डे अर्धर्चो व्याख्यातः[1] । तासां पर्व पर्वाणि राध्यासं वर्धयामि परिस्तरमाहरन् । न त्वनेनाहरणेन पर्व पीडयामि । मन्त्रान्तरं च 'पर्व ते राध्यासम' इति'[2] ॥

[22]अपां मेध्यमिति ॥ 'तासां यन्मेध्यं यज्ञियं सदेवमासीत् । तदपोदक्रामत् । ते दर्भा अभवन्'[3] इत्युक्तं ब्राह्मणे । तदाह— अपां मेध्यादिरूपं यद्दर्भात्मना परिणतं तदिदं युष्मद्रूपं मम शिवं सुखहेतुरस्तु, हे दर्भाः! युष्माकं आच्छेत्ताऽपि अहं मा रिषं मा नशं अपि तु शरदश्शतं जीवानि ॥

[23]अपरिमितानामिति ॥ यस्मादपरिमितानां अनन्तानां दर्भाणां मध्ये एते मया परिमिताः कतिपये गृहीताः न तु सर्वे, तेषां परिमितत्वात् सन्तानच्छेदं न करोमि, तस्मात् युष्मान् सुकृताय शोभनाय कर्मणे यज्ञाय आच्छिद्य संनह्ये बध्नामि कं सुखम् । सुकृतायेतिवचनात् अनर्थकं चेत् अप्रत्यूहं संनह्ये बाधकाभावात् । तदेवाह—एनः पापं कतमच्चन किंचि-

[1] सं. ४-२-६. [2] सं. १-१-२. [3] ब्रा. ३-२-६.

नाहम् । पुनरुत्थाय बहुला भवन्तु । [24]सकृदाच्छिन्नं बर्हिरूर्णामृदु । स्योनं पितृभ्यस्त्वा भराम्यहम् । अस्मिन्थ्सीदन्तु मे पितरस्सोम्याः । पितामहाः प्रपितामहाश्चानुगैस्सह ॥ ३ ३ ॥ [25]त्रिवृत्पलाशे दर्भः । इयान्प्रादेशसंमितः । यज्ञे पवित्रं

---

दपि स्वल्पमपि अहं मा निर्गा मा निकृष्टं गमम् । ननु कतिपयहिंसां कुर्वन् कथमनेनाः स्यात् तत्राह—पुनरुत्थाय भूयोऽप्याच्छेदस्थानादन्ये प्ररोहाः उत्थाय बहुला भवन्तु एकैकस्मात् शतं सहस्रं च प्ररोहन्तु युष्माकमेवायमुपकार इति ॥

[24]सकृदाछिन्नं बर्हिस्स्तृणाति—सकृदाछिन्नमिति जगत्या ॥ सकृदाछिन्नं एकवारलूनं बर्हिः ऊर्णामृदु ऊर्णावन्मृदुस्पर्शम् । उपमानपूर्वपदप्रकृतिस्वरत्वम् । स्योनं सुखहेतुं त्वा पितृभ्यो भरामि पित्रर्थं हरामि । अस्मिन् सकृदाछिन्ने बर्हिषि सोम्याः सोमार्हाः मे पितरः पितामहाः प्रपितामहाश्च अनुगैस्सह सीदन्तु ॥

[25]शाखापवित्रस्य क्रियमाणस्य अनुमन्त्रणार्थौ द्वौ मन्त्रौ । तत्र प्रथमः—त्रिवृदिति ॥ पलाशे पलाशशाखाविशेषे दर्भः पवित्ररूप आश्रित इति शेषः । कीदृशो दर्भः? त्रिवृत् त्रिगुणः । तद्दर्भस्य परिमाणमियानित्यभिनीय प्रदर्श्यते । प्रादेशसम्मित इति वचनेनापि स्पष्टीक्रियते । तदिदमस्मिन् यज्ञे प-

पोतृतमम्। पयो हव्यं करोतु मे। [26]इमौ प्राणापानौ। यज्ञस्याङ्गानि सर्वशः। आप्याययन्तौ संचरताम्। पवित्रे हव्यशोधने। [27]पवित्रे स्थो वैष्णवी। वायुर्वो मनसा पुनातु ॥ ३४ ॥ [28]अयं प्राण-

वित्रं पोतृतमं हविषां शोधयितृतमं सर्वशोधकातिशयेन वर्तमानं इदं मदीयं पयः हव्यं हवनार्हं करोतु ॥

[26]इमौ प्राणापानौ प्राणापानस्थानीये पवित्रे। प्राणापानापेक्षं पुल्लिङ्गत्वम्। यज्ञस्याङ्गानि सर्वशः सर्वाणि आप्याययन्तौ वर्धयन्तौ सञ्चरतां हव्यशोधने उत्पवनादिना हविषां शोधके ॥

[27]तयोः छेदनं—पवित्रे स्थ इति यजुः ॥ पवित्रे शोधके स्थः सर्वहविषां वैष्णवी विष्णोर्यज्ञात्मनः स्वभूते। शीभावे अकारलोपः छान्दसः। ते वां युवां वायुः मनसा मनस्कारेण पुनातु ॥

[28]प्रस्तरे तयोर्निधानं—अयमिति ॥ पवित्रयोः प्रत्येकनिर्देशः पूर्ववत्पुल्लिङ्गता। इमे प्राणापानस्थानीये पवित्रे यजमानं प्रस्तरं 'यजमानो वै प्रस्तरः'* इति। अपिगच्छतां अनुप्रविश्य वर्तेताम्। यद्वा—अनेन प्रस्तरपवित्रयोगेन यजमानः प्राणापानवान् भवतु। कः पुनरनयोर्विशेष इत्याह—इमे हि यज्ञे

* आ. ३-२-६.

**श्चापानश्च । यजमानमपिगच्छताम् । यज्ञे ह्यभूतां पोतारौ । पवित्रे हव्यशोधने । [29]त्वया वेदिं विविदुः पृथिवीम् । त्वया यज्ञो जायते विश्वदानिः । अच्छिद्रं यज्ञमन्वेषि विद्वान् । त्वया होता**

---

सर्वस्य **पोतारौ** शोधके । पूर्ववत् प्राणापानाभिप्रायेण पुंल्लिङ्गता । **अभूतां** भवतः । छान्दसो लुङ् । तदपि कुत इत्यत आह—इमे हि **पवित्रे** हविषां शोधने, तस्मात् सर्वस्यापि यज्ञस्य शोधने, तस्मादेव यजमानमपि प्राणवन्तं कुरुतामिति ॥

[29]वेदकरणं—**त्वये**ति त्रिष्टुप् ॥ अत्र ब्राह्मणम्—'वेदेन वै देवा असुराणां वित्तं वेद्यमविन्दन्त तद्वेदस्य वेदत्वम्'[1] इति । असुराणां सम्बन्धि यद्यद्वेदिप्रभृतिकं वित्तं वेत्तव्यं लब्धव्यं तत्सर्वं वेदेनालभन्त, तद्वेदत्वं वेदस्येति । तदिदमुच्यते । हे वेद ! **त्वया** साधनेन देवा **वेदिं विविदुः** लेभिरे **पृथिवीं** प्रथितां सर्वपृथिव्यात्मिकां वा 'सा वा इयं सर्वैव वेदिः'[2] इति । **त्वया यज्ञो जायते** निष्पद्यते, फलप्रदत्वं निष्पत्तिः । तदेवाह—**विश्वदानिः** विश्वस्य फलस्य दाता । औणादिको निप्रत्ययः, विश्वदानशब्दान्मत्वर्थीय इकारो वा, सर्वदा 'परादिश्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् । किञ्च—त्वं खलु **अच्छिद्रं** अविगुणं **यज्ञमन्वेषि** उत्पादयसि । यद्वा—**अन्वेषि** अनुगच्छ उत्पादय, **विद्वान्** तदुपायज्ञः । किञ्च—**त्वया होता** संतनोति अवि

---

[1] सं. १-७-४.　　[2] सं. ६-२-४.

संतंनोत्यर्धमासान् । [30]त्रयस्त्रिꣳशोऽसि तन्तूनाम् । पवित्रेण सहागंहि ॥ ३५ ॥ शिवेयꣳ रज्जुरभिधानीं । अघ्नियामुपंसेवताम् । [31]अप्रंस्रꣳसाय यज्ञस्यं । उखे उपंदधाम्यहम् । पशुभिस्संनीतं बिभृ-

च्छेदेन तनोति विस्तारयति अर्धमासान् अनुवृत्तयज्ञान् सर्वानर्धमासान् करोति, ब्राह्मणं च—'यज्ञमेव तत्संतनोत्योत्तरस्मादर्धमासात् । तं सन्ततमुत्तरेऽर्धमास आलभते । तं कालेकाल आगते यजते'[1] इति । एवं पुनःपुनः अनुष्ठानादर्धमासानित्युक्तम् ॥

[30]सन्धानरज्ज्वादाने—त्रयस्त्रिंश इति ॥ तायमानाः तन्तवः गुणा उच्यन्ते । तेषां त्वं त्रयस्त्रिंशोऽसि अन्त्योऽसि त्वत्तः परो नास्ति, देवा अपि त्रयस्त्रिंशत् न ततः परं किंचिदस्तीति प्रतिपादनाय संख्याविशेषापादानम् । स त्वं पवित्रेण पवित्रत्वेन पावनत्वेन सहागहि आगच्छ । छान्दसश्शपो लुक् । इदानीं परोक्षवदुच्यते रज्जुत्वेन—इयं रज्जुश्शिवा सुखकरी अभिधानी बन्धनी अघ्नियां गां उपसेवताम् ॥

[31]उखाधिश्रयणे—साकंप्रस्थायीय इत्यन्ये—अप्रस्रंसायेति ॥ अप्रस्रंसाय अप्रस्रवणार्थं यज्ञस्य यज्ञार्थस्य सान्नाय्यस्य उखे उपदधामि उपस्थापयाम्यहम् । केनमर्थक्येन? पशुभिः सन्नीतं सम्यगुपनीतं यथा 'एतदस्मै सन्नयत'[2] इति पूर्वं शृतं दधि च पश्चात्कृतं यथा 'एतदस्मै शृतं कुरुत, एतदस्मै दधि कुरुत'[2] इति, तादृशं सान्नाय्यं इन्द्रार्थं इमे बिभृतामित्येवमर्थ्येनोपदधामि ॥

[1] ब्रा. ३-३-९. [2] सं. २-६-२.

ताम् । इन्द्राय शृतं दधि । [32]उपवेषोऽसि यज्ञाय । त्वां परिवेषमधारयन् । इन्द्राय हविः कृण्वन्तः । शिवश्शग्मो भवासि नः ॥ ३६ ॥ [33]अमृन्मयं देवपात्रम् । यज्ञस्यायुषि प्रयुज्यताम् । तिरःपवि-

---

[32]उपवेषकरणे—उपवेषोऽसीति ॥ उपवेषोऽसि उपेत्य व्यापकोऽसि यज्ञाय सर्वस्य यज्ञस्य उपेत्य अङ्गारादिव्याप्त्या यज्ञं निर्वर्तयसि । तस्मात्तादृशं त्वां परिवेषं सर्वतो व्यापकं यज्ञस्य वनस्पतीनां वा त्वां अधारयन् अस्मत्तोऽन्येऽपि इन्द्रार्थं हविः कृण्वन्तः कुर्वन्त, तस्मात्तादृशः त्वं अस्माकमपि शिवः सुखकरः शग्मः शान्तश्च भवासि भवसि उपेत्य । भवतेर्लेट्याडागमः ॥

[33]अपिधीयमाने यजमानो जपति—अमृन्मयमिति ॥ अमृन्मयं अमृद्विकारभूतं 'एकाचो नित्यम्' इति मयट् । देवपात्रं देवानां योग्यं पात्रं अपिधानपात्रं अयोमयं दारुमयं वा, यज्ञस्यायुस्स्थानीयं सान्नाय्यं तन्निमित्तं तन्निर्वृत्त्यर्थं प्रयुज्यतां अपिधाने साधनीक्रियताम् । किमर्थमित्याह—तिरःपवित्रं तत्र पवित्रमन्तर्धाय अतिनीताः आनीता आपः कुम्भ्यां तिरःपवित्रं आसिक्ताः दोहने संक्षाळनीया आपो माऽतिगुः कुम्भीमतिक्रम्य मा गमन् । सत्यपि दुग्धे अपां ग्रहणं तासामुपरिस्थितत्वात् ताभिरेव दुग्धातिगमनं परिह्रियत इति । यद्वा—पवित्रासिक्तसंक्षाळनीयनिमित्तत्वात् सान्नाय्यस्यैवमुक्तमिति मन्तव्यम् । तदर्थं

त्रमतिनीताः। आपो धारय माऽतिगुः। [34]देवेन सवित्रोत्पूताः। वसोस्सूर्यस्य रश्मिभिः। गां दोहपवित्रे रज्जुम्। सर्वा पात्राणि शुन्धत। [35]एता आचरन्ति मधुमद्दुहानाः। प्रजावतीर्यशसो विश्वरूपाः ॥ ३७॥ बह्वीर्भवन्तीरुप जायमानाः। इह

---

हे! अध्वर्यो इमा आपो धारय निरुद्धनिर्गमाः कुरु पिधानपात्रं विधारय ॥

[34]सान्नाय्यपात्राणि प्रोक्ष्यमाणान्यभिमन्त्रयते—देवेनेति ॥ सवित्रा आदित्येन वसोर्जगतां वासयितुः सूर्यस्य सूतिकृतः उत्पत्तिस्थितिहेतोः आत्मसम्बन्धिभिः रश्मिभिः उत्पूताः ताः यूयं गां च दोहपवित्रे च दोहनपात्रं च पवित्रं च रज्जुं च बन्धनीं इत्थं सर्वाणि सान्नाय्यपात्राणि शुन्धत शोधयत। शुधि शौचकर्मणि, चुरादिराधृषीयः ॥

[35]गा आयतीः प्रतीक्षते—एता इति त्रिष्टुभा ॥ एताः गावः आचरन्ति आगच्छन्ति मधुमत् मधुरसं दुग्धं दुहानाः प्रजावत्यो बहुप्रजाः उभयप्रजासमृद्धिहेतवः यशसः यशस्विन्यः। मत्वर्थीयो लुप्यते, पुंसि संक्रान्तत्वादाद्युदात्तत्वाभावः। विश्वरूपाः सर्वरूपान्विताः बह्वीः भवन्तीः सन्तानवृद्ध्या बह्व्यो भवन्त्यः उपजायमानाः कर्मसु पुनःपुनः उपयुज्यमानाः वः हे गावः! तादृशीः इह कर्मणि इन्द्रो रमयतु क्षीरादिसमृद्ध्या रतिहेतून् करोतु ॥

व इन्द्रो रमयतु गावः । [36]पूषा स्थ । [37]अयक्ष्मा वः प्रजया सꣳसृजामि । रायस्पोषेण बहुला भवन्तीः । ऊर्जं पयः पिन्वमाना घृतं च । जीवो जीवन्तीरुप वस्सदेयम् । [38]द्यौश्चेमं यज्ञं पृथिवी च संदुहाताम् । धाता सोमेन सह वातेन वायुः । यज-

---

[36]वत्समभिदधाति—पूषा स्थेति यजुषा ॥ वचनव्यत्ययः । पूषा पुष्टिहेतुः क्षीरस्य । पूषैव वा पशूनां स्वामी त्वमसि इति स्तुतिः ॥

[37]दोग्धोपसीदति—अयक्ष्मा व इति त्रिष्टुभा ॥ हे गावः! वः युष्मान् अयक्ष्मा अरोगाः प्रजया संसृजामि दोग्धुं वत्सेन योजयामि । यद्वा—प्रजयोपलक्षिता युष्मान् संसृजामि दोग्धुं संगच्छामि । रायस्पोषेण क्षीरादिधनपुष्ट्या बहुलाः प्रथिताः भवन्तीः क्षेत्रादिपुष्टेरपि हेतुभूता भवन्तीः ऊर्जं रसवत् पयश्च घृतं च पिन्वमानाः क्षरतीः । पिवि सेचने, इदित्त्वान्नुम् । जीवन्तीः दीर्घायुषः जीवयन्तीर्वा प्रजाः क्षीरादिना अहमपि जीवः युष्मत्संबन्धेन चिरं जीवन् जीवयन्वा प्रजा यागद्वारेण । पचाद्यच्, उभयत्रापि 'बहुलमन्यत्रापि संज्ञाछन्दसोः' इति णिलुक्' ईदृशीः वः उपसदेयं उपसीदामि समीपतो भजामि । 'लिङ्याशिष्यङ्' ॥

[38]दुह्यमानामनुमन्त्रयते—द्यौश्चेति त्रिपदया बृहत्या ॥ इमं यज्ञं यज्ञसाधनं पयः द्यौः पृथिवी च संदुहाताम् । वृष्ट्यादिक्रमेण तन्निष्पत्तिहेतुत्वात् ते एव प्रार्थ्येते । धाता सर्वस्य स्रष्टा

मानाय द्रविणं दधातु ॥ ३८ ॥ [39]उत्सं दुहन्ति कलशं चतुर्बिलम् । इडां देवीं मधुमतीं सुवर्विदम् । तदिन्द्राग्नी जिन्वतं सूनृतावत् । तद्यजमा-

---

सोमेन ओषधीशेन सह दुग्धां तौ च संदुहातामिति स एवानुषङ्गः । वायुर्भूतात्मा वातेन प्राणेनात्मना सह दुग्धाम् । अथ सर्वोऽयं देवतागणो यजमानाय द्रविणं प्रशस्तं फलं धनमेव वा यागनिर्वृत्त्या दधातु ददातु । वचनव्यत्ययो वा । सर्वेऽप्येते यजमानाय द्रविणं दधतु ॥

[39]धाराघोषमनुमन्त्रयते—उत्समिति जगत्या ॥ उत्सं उत्स्यन्दमानं उद्भूतधाराघोषस्यन्दनं बहुक्षीरत्वात् कलशं ऊधः कलशाधारत्वात् क्षीरस्य । चतुर्बिलं चतुस्स्तनरन्ध्रं दुहन्ति । किं? पय इति सामर्थ्यात् गम्यते, इडां गां देवीं दानशीलां दीप्तिमतीं वा मधुमतीं मधुरक्षीरादिकां सुवर्विदं स्वर्गस्य लम्भयित्रीं दुहन्ति, एवं त्रीणि कर्माणि गां कलशं पयो दुहन्तीति । तत्रोपयुज्यमानयोः निमितयोः गोकलशयोः 'अकथितं च' इति कर्मत्वम् । यद्वा—उत्स्यन्दमानं चतुर्बिलस्तावि कलशस्थं पयः कलशशब्देनोच्यते । तत् दोहं इन्द्राग्नी जिन्वतं जिन्वतु प्रीणयतु । यद्वा—इन्द्राग्नी तज्जिन्वतां प्रीणयतां प्रीतिहेतुं कुरुतां, तत्र वा प्रवृत्तान् अस्मान् इन्द्राग्नी जिन्वतां प्रीणयताम् । सर्वथा वचनव्यत्ययात्र मुच्यामहे । इन्द्राग्न्योर्वा आमन्त्रणे छान्दसो निघाताभावः । सूनृतावत् प्रियसत्यात्मवचनवत् निर्दोषत्वेन तद्धेतुत्वात् । अथ

नममृतत्वे दधातु । [40]कामधुक्षः प्रणो ब्रूहि । इन्द्राय हविरिन्द्रियम् । [41]अमूं यस्यां देवानाम् । मनुष्याणां पयो हितम् । [42]बहु दुग्धीन्द्राय देवेभ्यः । हव्यमाप्यायतां पुनः ॥ ३१ ॥ वत्सेभ्यो मनुष्ये-

---

तत् इन्द्राग्न्योः कर्म इन्द्राग्न्यनुगृहीतं वा तदेव दोहनं यजमानं अमृतत्वे अमृतत्वहेतौ फले दधातु स्थापयतु ॥

[40]दुग्धमानयन्तं पृच्छति—कामधुक्ष इति ॥ हे दोग्धः! कां गां अधुक्षः दुग्धवानसि इदं पयः । दुहेर्लुङि 'शल इगुपधादनिटः क्सः' । नः अस्माकं प्रब्रूहि व्यक्तमाचक्ष्व । कोऽस्य पयसो विशेष इति चेत्? इन्द्राय इन्द्रार्थं खलु हविः इदं तत्रापि इन्द्रियं इन्द्रजुष्टं इन्द्रप्रियं वा, इन्द्रेण वा सेवितं पुनःपुनः, तस्मात् एवं महानुभावं पयः कामदुग्धा इति ॥

[41]अथ प्रत्याह—अमूमिति ॥ नामधेयविशेषमात्रं निर्दिशति गङ्गां सरस्वतीमिति वा । अस्याश्च वैशिष्ट्यमाह यस्यां गवि देवानां मनुष्याणां च प्रीणनं पयो हितं निहितं तादृशीं महाभागां तादृशं पयोऽदुहि ॥

[42]तिस्रो दोहयित्वा वाचं विसृजति—बहु दुग्धीति ॥ इन्द्रार्थं देवार्थं च बहु पयो दुग्धि हे गौः! तच्च हव्यं हविर्भूत्वा पुनराप्यायतां भूयो विवर्धताम् । अथ वत्सेभ्यः मनुष्येभ्यश्च पुनः ततो बहुतरस्य दोहाय कल्पतां दोहसामर्थ्यं तवास्तु पयश्च तथा प्रभूतमस्तु इत्यर्थः ॥

भ्यः । पुनर्दोहाय कल्पताम् । [43]यज्ञस्य संततिरसि । यज्ञस्य त्वा संततिमनु संतनोमि । [44]अदस्तमसि विष्णवे त्वा । यज्ञायापि दधाम्यहम् । अद्भिररिक्तेन पात्रेण । याः पूताः परिशेरते । [45]अयं पयस्सोमं कृत्वा । स्वां योनिमपि गच्छतु ॥ ४० ॥

---

[43]अग्निहोत्रोच्छेषणं अभ्यातनक्ति—यज्ञस्येति यजुषा ॥ यज्ञस्य सन्ततिः अविच्छेदकारणं त्वं असि । तादृशं त्वां यज्ञस्य सन्ततिमेव लक्षीकृत्य संतनोमि दुग्धेन सन्ततं करोमि त्वयि हि सन्तते यज्ञ एव संतन्यत इति ॥

[44]दारुपात्रादिना कुम्भ्या अपिधानम्—अदस्तमिति ॥ हे क्षीर ! अदस्तं अनुपक्षीणं त्वमसि । अद्भिः अरिक्तेन जलसहितेन पात्रेण विष्णवे व्याप्तिमते यज्ञाय त्वा अपिदधाम्यहम् । कीदृशीभिः अद्भिः? या आपः पूताः शुद्धाः परिशेरते उपरि शेरते पिधानपात्रे सर्वां रात्रिं रक्षणार्थमिव शेरते ताभिः अरिक्तेन पात्रेणापिदधामि तव रक्षणार्थमिति ॥

[45]परिवासनशकलं दुग्धेऽन्ववदधाति—अयमिति ॥ अयं पर्णवल्कः इदं पयः सोमं सोमसदृशं कृत्वा यथोक्तं ग्रहणकाले—'सोमपीथाय सन्नयितुम् । वकलमन्तरमाददे'* इति, तदिदमुच्यते । तत्सोमीकृतं स्वां योनिं आत्मीययोनिभूतं अपिग-

---

* आ. ३-७-४.

पर्णवल्कः पवित्रम् । सौम्यस्सोमाद्धि निर्मितः ।
[16]इमौ पर्णं च दर्भं च । देवानाꣳ हव्यशोधनौ ।
प्रातर्वेषाय गोपाय । विष्णो हव्यꣳ हि रक्षसि ।
[17]उभावग्नी उपस्तृणते । देवता उपवसन्तु मे ।

च्छतु अनुप्रविशतु । पर्णवल्कः पवित्रं शोधयिता । आविष्टनपुंसकोऽयम् । सौम्यः सोमापत्यम् । तत्कथमित्याह—सोमाद्धि निर्मितः उत्पन्नः । यथोक्तम्—'तृतीयस्यै दिवः । गायत्र्या सोम आभृतः'[1] इत्यादि । तस्मात् सोमप्रभवत्वात् अस्य सोमः स्वा योनिः ॥

[16]शाखापवित्रं कश्चित्प्रज्ञातं निदधाति—इमाविति ॥ पर्णविकारे शाखायां पर्णशब्दः । पर्णं च पलाशशाखां च दर्भं च शाखापवित्रं च इतीमौ देवानां हव्यशोधनौ हविषां शोधकौ प्रातर्वेषाय प्रातर्दोहात्मने यज्ञाय व्यापनाय गोपाय रक्ष हे विष्णो! । कस्मादेवमुच्यस इति चेत्—त्वं खलु हव्यं हि रक्षसि । यथोक्तम्—'विष्णो हव्यं रक्षस्व'[2] इति, अतः हव्यरक्षार्थमेव इमौ रक्षेति । एतद्रक्षणे हि हव्यं रक्षितं स्यात् ॥

[17]नक्तं परिस्तरणकाले जपति—उभाविति चतुर्नवका बृहती ॥ उभावग्नी गार्हपत्याहवनीयौ प्राधान्यादनयोरुपादानं दक्षिणाग्नावपि भवत्येव । उपस्तृणते दर्भैः समीपतः छादयति । बहुवचनं कर्तृनियमार्थमिति केचित् । उपस्तीर्णाग्निके स्थाने अत्र देवता उपवसन्तु अनशना वर्तन्तां मे मदर्थम् । यद्वा—मदीया

[1] ब्रा. ३-७ ४[3].    [2] सं. १-१-३.

अहं ग्राम्यानुप वसामि । मह्यं गोपतये पशून् ॥

आभृत इमं गृह्णामि पूर्वस्ताः पूर्वः परिगृह्णामि सभापाला इन्द्रज्येष्ठेभ्य आदित्य व्रतपते सुसंभृता मे सह पुनातु गहि नो विश्वरूपा दधातु पुनर्गच्छतु पशून् ॥ ४ ॥

याः पुरस्तादिमामूर्जमिह प्रजा इह पशवोऽयं पितॄणामग्निः ॥

[1]देवा देवेषु पराक्रमध्वम् । प्रथमा द्वितीयेषु ।

---

देवता उपवसन्तु अहं हि ग्राम्यान् पशून् उपवसामि नाश्नामि, मद्वत् मम देवता अपि उपवसन्तु ग्राम्यानिति ॥ यद्वा— देवता उपवसन्तु उपेत्य वसन्तु मदर्थम्, मम को विशेष इति चेत्—अहं हि ग्राम्यान् पशून् उपवसामि नाश्नामि । किमर्थं? मह्यं गोपतये अहं गोपतिः गवां स्वामी यथा स्यामिति । यथोक्तम्—'यद्ग्राम्यानुपवसति तेन ग्राम्यानवरुन्धे'* इति ॥

इति तैत्तिरीये ब्राह्मणे तृतीये सप्तमे
चतुर्थोऽनुवाकः.

---

[1]गार्हपत्याहवनीययोरन्यतरत्र जपित्वा शेते—देवा देवेष्विति ॥ अतिधृतिरियम् । सर्वे पादाष्षट्सप्तत्यक्षराः । 'इह माऽव्रत' इत्यर्ध-

---

* सं. १-६-७.

द्वितीयास्तृतीयेषु । त्रिरेकादशा इह माऽवत । इदꣳ शकेयं यदिदं करोमि । आत्मा करोत्वात्मने । इदं करिष्ये भेषजम् । इदं मे विश्वभेषजा । अश्विना प्रावतं युवम् । [2]इदमहꣳ सेनाया अभीत्वर्-

र्यन्तः । हे देवाः! प्रथमा यूयं देवेषु द्वितीयेषु देवेषु । हे देवा द्वितीयाः! यूयं तृतीयेषु देवेषु पराक्रमध्वं अप्रतिबन्धेन वर्तध्वम् । एवं द्यावापृथिव्यन्तरिक्षस्थाः हे त्रिरेकादशाः! त्रिरावृत्ताः एकादशाः त्रयस्त्रिंशाः सर्वे यूयं संभूय इह कर्मणि वर्तमानं मां अवत रक्षत प्राप्नुत वा । युष्मत्प्रसादादिदं कर्म कर्तुं शकेयं निर्वर्तयितुं समर्थः स्याम्, यदिदं करोमि कर्तुमारभे । तत्र के वयं? आत्मैव आत्मने करोतु कोऽन्यस्सहायो भवितुमर्हति तद्यथा संपद्यते तथा युष्माभिः कर्तव्यम्। किञ्च—हे अश्विनौ! इदं कर्म भेषजं सर्वानिष्टोपशमनं करिष्ये कर्तुमुत्सहे । तत्र हे विश्वभेषजा! विश्वानिष्टोपशमनकुशलौ! अश्विनौ! युवामपि इदं कर्म मदीयं प्रावतं प्राप्नुतं प्रकर्षेणावतं रक्षतम् ॥

[2]वेदेन कपालेभ्योऽङ्गारानपोहति—इदमहमित्यनुष्टुभोऽर्धर्चेन विवृद्धाक्षरेण ॥ सेनायै अङ्गारसमूहे अभीत्वर्यै अभिगमनशीलायै अभिभवितुं प्रवृत्तायै मुखं प्रधानभूतं अङ्गारं पुरोडाशं दूषयितुं प्रवृत्तमिदं अहमेव अपोहामि अपनयामि । 'इण्णशिजिसर्तिभ्यः क्वरप्' 'टिड्ढाणञ्' इति ङीप् ॥

यैँ ॥ ४२ ॥ मुखमपोहामि । [3]सूर्यज्योतिर्विभाहि । महत इन्द्रियाय । [4]आप्यायतां घृतयोनिः । अग्निर् हव्याऽनुमन्यताम् । खमङ्क्ष्व त्वचमङ्क्ष्व । सुरूपं त्वा वसुविदम् । पशूनां तेजसा । अग्नये जुष्टमभिघारयामि । [5]स्योनं ते सदनं करोमि ॥ ४३ ॥

---

[3]पुरोडाशमभिमन्त्रयते—सूर्यज्योतिरित्यनुष्टुभोऽर्धर्चान्तरेण ॥ सूर्यस्येव ज्योतिर्यस्य तादृशस्सन् विभाहि विशेषेण शोभस्व हे पुरोडाश! महत इन्द्रियाय वीर्याय ॥

[4]विरजीकृत्याभिघारयति—आप्यायतामिति जगत्या षट्पदया ॥ आप्यायतां वर्धतां अग्निः अनेन घृतेन घृतयोनिः घृतकारणः उदकस्य वा हेतुः । पूर्वपदप्रकृतिस्वरत्वं छान्दसम् । हव्यानि च अनुमन्यतां त्वत्प्रसादाद्धविष्टं भवतु एतेन घृतेन संस्कृतत्वात् । गार्हपत्यः अनुमन्यतां आहवनीयो वा, तत्पक्षे । हे पुरोडाश! त्वमपि खं रन्ध्रं पाकजां रज्जिकां अङ्क्ष्व म्रक्षय त्वचं च अङ्क्ष्व म्रक्षय घृतेन पिहितरन्ध्रं स्निग्धच्छायं च आत्मानं कुरु । तदन्तः तथाकृते सुरूपं शोभनरूपं संजातं त्वा त्वां तत एव वसुविदं धनानां लम्भयितारं पशूनां तेजसा घृतेनानेन अग्नये जुष्टं प्रियं अभिघारयामि । घृ क्षरणे । क्षारणया संस्करोमि ॥

[5]पाञ्यामुपस्तृणीते—स्योनं त इति त्रिष्टुभोऽर्धर्चेन, सादयत्यर्ध-

घृतस्य धारया सुशेवं कल्पयामि । तस्मिन्त्सी-दामृते प्रतितिष्ठ । व्रीहीणां मेध सुमनस्यमानः । [6]आर्द्रः प्रथस्नुर्भुवनस्य गोपाः । [7]शृत उत्स्नाति जनिता मतीनाम् । [8]यस्त आत्मा पशुषु प्रविष्टः । देवानां विष्ठामनु यो वितस्थे । आत्मन्वान्त्सोम

चैन ॥ सदनकरण एवाचार्येण विनियुक्तः । स्योनं सुखहेतुं तव सदनं स्थानं करोमि हे पुरोडाश! । घृतस्य धारया सुशेवं सुखशयनाधारं कल्पयामि तस्मिन् तादृशे सीद । किं बहुना? अमृते अमरणहेतुस्थाने प्रतितिष्ठ प्रतिष्ठितो भव । हे व्रीहीणां मेध! सारभूत! सुमनस्यमानः प्रीयमाणः तस्मिन् सीद॥

[6]आज्येन संतर्पयति—आर्द्र इति ॥ इयं द्विपदा त्रिष्टुप् । आर्द्रः शीतीकृतः घृतेन प्रथस्नुः प्रथनशीलः । छान्दसः स्नुप्रत्ययः । भुवनस्य भूतजातस्य गोपाः गोपायिता भवेति शेषः॥

[7]उद्वासयति—शृत इति ॥ पाकेन शृतः पक्कः 'शृतं पाके' इति निपात्यते । उत्स्नाति उन्मुञ्चत्यात्मानं अग्नेः जनिता उत्पादयिता मतीनां प्रज्ञानाम् ॥

[8]सान्नाय्यालङ्करणे—यस्त इति जगती ॥ चतुर्थपादो विवृद्धाक्षरः । हे सान्नाय्य! सोमसदृश! तव य आत्मा घृतलक्षणः पशुषु प्रविष्टः प्रविश्य वर्तते पशूनां वा स्थितिहेतुत्वेन तेषु प्रविष्टः । देवानां विष्ठां विविधं अवस्थानं अनु लक्षीकृत्य स्व

**घृतवान् हि भूत्वा । देवान्गच्छ सुवर्विन्द यजमानाय मह्यम् । [9]इरा भूतिः पृथिव्यै रसो मोत्क्रमीत् ॥ ४४ ॥ [10]देवाः पितरः पितरो देवाः । योऽहमस्मि स सन् यजे । यस्यास्मि न तमन्तरेमि ।**

णमपि तदनुरूपं वितस्थे वितिष्ठते, यस्तवात्मा घृतरूपः तेन आत्मना आत्मन्वान् बलवान् रक्षणवान् भूत्वा देवान् गच्छ तेषां स्थित्यर्थं सुवः स्वर्गं च विन्द लभस्व यजमानाय मह्यं मदर्थम् ॥

[9]कपालोद्वासने—इरा भूतिरिति यजुः ॥ इरा अन्नं भूतिभवनहेतुः प्रजानां पृथिव्या रसः रसवती इरा पृथिव्यास्संबन्धिरसांशः सः मोत्क्रमीत् मा नशत् इत्यनेनाभिप्रायेण त्वां उद्वासयामीति शेषः । 'नेटि' इति वृद्धिप्रतिषेधः ॥

[10]अध्वर्युहोतृप्रवरे जपति—देवाः पितर इति यजुः ॥ 'अन्तरेमि' इति प्रथमावसानम् । 'स्वं हुतम्' इति द्वितीयम् । 'स सन्यजे' इति सर्वान्ते । हे देवाः! पितरः! पातारः प्रजानां हे पितरः देवाः दानादिगुणयुक्ताः यूयं वयं च इदं जानीम इति सामर्थ्याद्गम्यते । योऽहमस्मि यादृशाचारो यादृग्जातीयश्चास्मि स एव सन् यजे युष्मत्प्रसादेन तादृश एव युष्मान्यष्टुमर्हाणि । किञ्च—यस्य अहमपत्यमस्मि यादृशाचारस्य यादृग्जातीयस्य वा तं तादृशं नान्तरेमि नान्तरितं करोमि नोत्सृजामि तादायनिरेव युष्मान्यष्टुमर्हाणि युष्मत्प्रसादात् । यद्वा—

स्वं म॑ इ॒ष्टꣳ स्वं द॒त्तम् । स्वं पू॒र्तꣳ स्वꣳ श्रा॒न्तम् । स्वꣳ हु॒तम् । तस्य॑ मे॒ऽग्निरु॑पद्र॒ष्टा । वा॒युरु॑पश्रो॒ता । आ॒दि॒त्यो॑ऽनुख्या॒ता । द्यौः पि॒ता ॥ ४५ ॥ पृ॒थि॒वी मा॒ता । प्र॒जाप॑ति॒र्बन्धुः । य ए॒वास्मि॒ स सन् य॑-

---

यस्य महाभागस्य साध्वाचारस्य अहमपत्यमस्मि तं अहं नान्तरेमि नान्तरितं करोमि नाच्छादयामि गुणहान्या । अपि तु युष्मत्प्रसादेन सम्यङ्निर्वर्तितयागः तद्गुणानां प्रकाशयिता भूयासम् । यद्वा—यादृशाचारस्य अहमपत्यमस्मि तं नान्तरेमि न त्यजामि सन्तमसन्तं वा तदीयमाचारं अनुप्रपद्ये, तस्य धर्म्यत्वात् । ततश्चैवंकुर्वाणस्य मम यत् इष्टं वषट्कारेण देवेभ्यो दत्तं तत् ममैव स्वं भवतु ममैव भोगाय भवतु युष्मत्प्रसादात् स्वमेव भवतु । दत्तं दक्षिणाद्रव्यादिकं स्वमेव भवतु । पूर्तं पक्वमन्नादि । पितृभ्यो दत्तमेके । स्वमेव भवतु । श्रान्तं तप्तं तपः स्वमेव भवतु हुतं स्वाहाकारेण दत्तम् । यथा एतत् सर्वं एवं भवति तथा यूयं अनुमन्यध्वम् । तस्य तथा कुर्वतः मे अग्निरुपद्रष्टा द्रष्टव्यानां मया सह द्रष्टा अन्तः बहिश्च उपेत्य प्रकाशयिता वायुः उपश्रोता श्रोतव्यस्य मया सह अन्तर्बहिश्च श्रोता । आदित्यश्च अनुख्याता अनुख्यातव्यस्य अनुक्रमेण प्रकाश्यस्य मया सह अनुक्रमेण ख्यापयिता अन्तर्बहिश्च । द्यौः पिता उदकदानात् मम पितृवत्पालयित्री । पृथिवी च मम माता उत्सङ्गे धारणान्मातृस्थानीया । प्रजा-

जे । [11]मा भेर्मा सं विंक्था मा त्वा हिꣳसिषम् । मा ते तेजोऽपंक्रमीत् । भरतमुद्धरे मनुषिं च । अ-

पतिः मम बन्धुः व्यसनेभ्यः उत्तारयिता हितकारी । एतच्च युष्माभिः विदितमस्तु । यस्मादेवं तस्मात् अहं य एवास्मि यादृशकर्मा याद्गायनिः यादृग्जातीयश्चास्मि स तादृश एव सन् यजे अविकलं यष्टुमर्हामि, योग्यतां मे कुरुतेति भावः ॥

[11]पुरोडाशोपस्थाने—मा भेरिति जगती पञ्चपदा ॥ 'भरतम्' इत्यादिना तस्याभिमर्शः । हे पुरोडाश! मा भेः मा भैषीः मामयं भिनत्तीति । बिभेतेर्लुङि 'बहुलं छन्दसि' इतीडभावः । यद्यपि विध्यन्तरं नास्ति तथाऽपि व्यत्ययेन गुणः । 'चवायोगे प्रथमा' इति निघाताभावः । मा च संविक्थाः कम्पिष्ठाः त्वा मा हिंसिषं न हिंसितुं प्रारभे । मा च तव भीतस्य तेजोऽपक्रमीत् माऽपगात्, 'नेटि' इति वृद्धिप्रतिषेधः । अ· भिमर्शे—भरतः भरणात्, औणादिकोऽतच् प्रत्ययः । भरतः यजमानः देवेभ्यो हविर्भरणात् । ब्राह्मणं च भवति—'एष हि देवेभ्यो हव्यं भरति'* इति । मनोरपत्यभूता सर्वाऽपि प्रजा मनुषिः, यथा 'मनुष्वद्भरतवदमुवदमुवत्' इति । तौ अहं उद्धरे उच्छ्रिते स्वाम्यं धारयामि अन्याभ्यः प्रजाभ्यः तवावदानेन । तस्मात् महत्फलमवाप्स्यसि अतो मा भैरिति । केचिदाहुः—भरतः असुरविशेषः हविषां दूषकः तस्य भार्या मनुषिः तावहमुद्धरे ऊर्ध्वं हरामि उत्सारयामि तवावदानेन तस्मात्तवैवायं उपकारः ।

* सं. २-५-९.

वृदानानि ते प्रत्यवदास्यामि । नमस्ते अस्तु मा मा हिꣳसीः । [1]यदवृदानानि तेऽवद्यन् । विलोमाकार्षमात्मनः ॥ ४६ ॥ आज्येन प्रत्यनज्म्येनत् । तत्त आप्यायतां पुनः । [3]अज्यायो यव-

अतो मा भेरिति । अपरा योजना—भरतं अग्निं यजमानं वा उद्धर यागनिर्वृत्त्या ऊर्ध्वं प्रवर्तय । ईमित्यवधारणे समुच्चये वा । अनुषिञ्च अनन्तरं च सिञ्च वृष्टिमुत्पादय । यद्वा—इमां पृथिवीं अनुषिञ्च । इमामित्यस्य वर्णलोपे इमिति । एवं महाफलत्वात् अवदानस्य मा भेरिति । तत्रावदानानि प्रत्यवदास्यामि । यथोक्तं प्रत्येकमवदास्यामि । नमस्ते अस्तु मा हिंसिः प्रतिकूल करणाभावात् ॥

[12]प्रत्यनक्ति—यदवदानानीति ॥ इत आरभ्य चतस्रोऽनुष्टुभः ॥ अवदानान्यवद्यन् अहं तव यद्विलोम प्रतिकूलमकार्षं आत्मनो मम च परंपरया । यद्वा—तवात्मनः शरीरस्य यद्विलोम विकारमकार्षम् । अव्ययपूर्वपदप्रकृतिस्वरत्वे अडागमस्योदात्तत्वात् एकादेशस्य उदात्तत्वम् । एनत् तव विलोम आज्येन प्रत्यनज्मि प्रतिकूलस्वभावमनज्मि यथा वैलोम्यं निवृत्तं स्यात् । किञ्च—तव विलोमनिवृत्तिमात्रमेव न प्रार्थये, अपि तु तत् विकलमङ्गं पुनः भूयोपि आप्यायताम् ॥

[13]प्राशित्रावदाने—अज्याय इति ॥ यवमात्रात् यवप्रमाणात् अज्यायः अवृद्धतरम् । 'वृद्धस्य च' इति ज्यादेशः । यवमात्रमेव

मात्रात् । आव्याधात्कृंत्यतामिदम् । माऽरूंरुपाम यज्ञस्यं । शुद्धँ स्विंष्टमिदꣳ हविः । [14]मनुंना दृष्टां घृतपंदीम् । मित्रावरुंणसमीरिताम् । दक्षिणार्धादसंभिन्दन् । अवंद्याम्येकतोमुंखाम् ॥ ४७ ॥

इदं प्राशित्रं कृत्यतां अवदीयताम् । कुतः प्रदेशात्? आव्याधात् यस्मिन् प्रदेशे देवो यज्ञमविध्यत् तत एव प्रदेशात् कृत्यताम् । कृती छेदने, 'देवा वै यज्ञाद्रुद्रमन्तरायन् स यज्ञमविध्यत्'[1] इति ब्राह्मणं 'रोपयेतद्यज्ञस्य'[1] इत्यन्तम् । माऽरूरुपाम । रूप विमोहने, माऽऽकुलयाम यज्ञस्य यज्ञम् । कर्मणि षष्ठी । तस्मात् यवमात्रमेव अवदेयम् । इदमेव शुद्धं हविः, देवेन स्पृष्टत्वात् । इदमेव च स्विष्टं शोभनयागहेतुः । यथोक्तं— 'स्विष्टं वै न इदं भविष्यति'[1] इति । तस्मादेतावदेव गृह्यतामिति ॥

[14]इडाऽवदाने—मनुनेति ॥ मनुना दृष्टां प्रथमदृष्टां यथा— 'मनुर्ह्येतामग्रेऽपश्यत्'[2] इति । घृतपदीं उदकप्रवृत्तिहेतुं घृतस्यैव वा हेतुं पश्वात्मकत्वात् । यथा—'यदेवास्यै पदाद्घृतमपीड्यत तस्मादेवमाह'[2] इति । कुम्भपद्यादिर्द्रष्टव्यः । मित्रावरुणसमीरितां मित्रावरुणाभ्यां सह प्रेरिताम्, 'मित्रावरुणौ ह्येनां समैरयताम्'[2] इति । ईदृशीं इडां दक्षिणार्धात् पुरोडाशस्य दक्षिणभागात् अवद्यामि अवखण्डयामि असंभिन्दन् असंमिश्रयन् इतरावदानस्थानैः एकतोमुखां एकदिङ्मुखप्रभवाम् ॥

[1] सं. २-६-८. [2] सं. २-६-७.

[15]इडे भागं जुषस्व नः । जिन्व गा जिन्वार्वतः । तस्यास्ते भक्षिवाणस्स्याम । सर्वात्मानस्सर्वगणाः । [16]बर्हि पिन्वस्व । ददतो मे मा क्षायि । कुर्वतो मे मोपदसत् । दिशां क्लृप्तिरसि । दिशो मे कल्पन्ताम् । कल्पन्तां मे दिशः ॥ ४८ । दैवीश्च मानुषीश्च । अहोरात्रे मे कल्पेताम् । अर्धमासा

[15]यजमानपञ्चमानां इडाभक्षणमन्त्रः—इडे भागमिति ॥ हे इडे! नः अस्माकं इमं भागं भक्ष्यमाणं जुषस्व प्रीत्या अनुमन्यस्व । ततः अस्माकं गाः जिन्व प्रीणय अर्वतः अश्वांश्च प्रीणय । तस्याश्च तथा कुर्वाणायास्तव भक्षिवाणः भक्षयितारः । 'अन्येभ्योऽपि दृश्यते' इति वनिप्प्रत्ययः । अन्तोदात्तत्वं च छान्दसम् । स्याम भवेम । सर्वात्मानः अविकलसकलरूपाः सर्वगणाः पुत्रपौत्रादिगणसहिताश्च स्यामेति । यद्वा—सर्वकालं तव भक्षयितारः स्यामेति ॥

[16]बर्हिषदं पुरोडाशमभिमन्त्रयते—बर्हि पिन्वस्वेति । सर्वा त्रिपदा ॥ 'अग्निर्मा दुरिष्टात्'* इत्यत्र व्याख्याता । दिशां क्लृप्तिरसीत्यादि । दिशां दिग्वासिनां जनानां क्लृप्तिः सामर्थ्यं यथावत्वं आत्मलाभः सैव त्वमसि; तद्धेतुत्वात् त्वदुपयोगोपजनितसामर्थ्ये कर्मणि सति वर्षादिना दिग्वासिनां सामर्थ्यलाभ इति कृत्वा । तस्मात् दिशो मे कल्पन्ताम्, त्वदुपयोगात् । किञ्च—

* सं. १-६-३.

मे कल्पन्ताम् । मासा मे कल्पन्ताम् । ऋतवो मे कल्पन्ताम् । संवथ्सरो मे कल्पताम् । क्लृप्तिरसि कल्पतां मे । [17]आशानां त्वाऽऽशापालेभ्यः । चतुर्भ्यो अमृतेभ्यः । इदं भूतस्याध्यक्षेभ्यः॥४९॥ विधेम हविषा वयम् । [18]भजतां भागी भागम् ।

---

मे दिशः प्राच्यादयश्च कल्पन्तां स्ववीर्यकारिण्यो भवन्तु । दैव्यः आदित्यादिकृताः मानुष्यः मनुष्याणां परस्परावस्थानापेक्षासमुपजजनितनिबन्धनाः । एक एव हि ग्रामः विवक्षावशात् प्राच्यः प्रतीच्यश्च भवति । यद्वा—दिशा [शो] देवेन व्यवस्था । दैव्यः प्राजापत्यादिकृताः । मानुष्यः मन्वादिकृताः । अहोरात्रे इत्यादि गतम् । तत्र सर्वत्र क्लृप्तिरसि त्वमेव तत्तत्क्लृप्तिहेतुः, तस्मात् त्वत्प्रसादादेव ममापि कल्पतां दिगादिकम् ॥

[17]चतुर्धा करणे—आशानां त्वेत्यनुष्टुप् ॥ आशानां दिशां सम्बन्धिभ्यः आशापालेभ्यः दिशां नित्यपालकेभ्यः । 'झल्युपोत्तमम्' इति उपोत्तमस्य उदात्तत्वम् । अमृतेभ्यः अमरणेभ्यश्च इन्द्रयमवरुणकुबेरेभ्यः भूतस्य भुवनजातस्य सर्वस्य अध्यक्षेभ्यः स्वामिभ्यः तदर्थसिद्धये व्यापृतेभ्यः वयं हविषा अनेन इदं विधेम परिचरेम । तेषामेवेदं परिचरणं यदनेन ऋत्विजः परिचर्यन्त इति भावः । विध विधाने ॥

[18]दक्षिणतः—भजतामिति यजुः ॥ भागी भागवान् भागार्हः स एवात्र भागं भजताम् । अभागार्हस्तु माऽभक्त भागं मा

माऽभागोऽभक्त । निरभागं भजामः । अपस्पिन्व । ओषधीर्जिन्व । द्विपात्पाहि । चतुष्पादव । दिवो वृष्टिमेरय । [19]ब्राह्मणानामिदꣳ हविः ॥ ५० ॥ सोम्यानाꣳ सोमपीथिनाम् । निर्भक्तोऽब्राह्मणः । नेहाब्राह्मणस्यास्ति । [20]समक्तं बर्हिर् हविषा घृतेन । समादित्यैर्वसुभिस्सं मरुद्भिः । समिन्द्रेण विश्वेभिर्देवेभिरक्ताम् । [21]दिव्यं नभो गच्छतु यत्स्वा-

प्रापत् । ततः वयं अभागं निर्भजामः भागान्निरस्यामः । त्वं चास्माकं अपः कर्माणि उदकानि वा पिन्व वर्धयेत्यादि व्याख्यातं 'ध्रुवक्षितिः'* इत्यत्र ॥

[19]उत्तरतः—ब्राह्मणानामित्यनुष्टुप् ॥ ब्राह्मणानां इदं हविः सोम्यानां सोमार्हाणां सोमपीथिनां सोमपानवतां अन्येषामार्त्विज्याभावात् । तस्मात् अब्राह्मणः अस्माभिः निर्भक्तः निरस्तः । न खल्विह यज्ञे सर्वात्मना अब्राह्मणस्यार्त्विज्यमस्ति ॥

[20]बर्हिषो धातून् संप्रलुप्य ध्रुवायां समनक्ति—समक्तमिति त्रिष्टुभा ॥ अनेन घृतेन हविषा समक्तं एकीकृत्याक्तमस्तु । अनेन समक्तं आदित्यैः वसुभिः मरुद्भिः इन्द्रेण विश्वैर्देवैश्च समक्तमस्तु तत्सम्बन्धार्हमस्तु ॥

[21]अग्नौ प्रहरति—दिव्यमिति पादेन ॥ दिव्यं दिविभवं

* सं. ४-३-४.

ह्राँ । [22]इन्द्राणीवाविधवा भूयासम् । अदितिरिव सुपुत्रा । अस्थूरि त्वा गार्हपत्य ॥५१॥ उपनिषदे सुप्रजास्त्वाय । [23]सं पत्नी पत्या सुकृतेन गच्छताम् । यज्ञस्य युक्तौ धुर्यावभूताम् । संजाना-

यज्ञभः आदित्याख्यं तेजः तद्गच्छतु प्राप्नोतु इदं बर्हिः । स्वाहेति प्रदानार्थः ॥

[22]पत्नी जघनेन गार्हपत्यं उपसीदति—इन्द्राणीवेति । अयं बृहतीविशेषः ॥ इन्द्राणीव इन्द्रस्य पत्नीव अविधवा यावज्जीवं भर्तृमती भूयासम् । अदितिः देवमातेव सुपुत्रा शोभनपुत्रा भूयासम् । पुत्रवती भूयासम् । उभयत्रापि 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । हे गार्हपत्य! त्वां अस्थूरिणं शिरसा वोढव्यानां वोढारं सर्वार्थसाधकम् । उक्तं च—'सर्वं ह्यस्थूरिणाभ्यश्नुते'* इति । तादृशं त्वां उपनिषदे उपेत्य निषीदामि । व्यत्ययेन शः, आत्मनेपदम् । सुप्रजास्त्वाय शोभनापत्यत्वाय । 'नित्यमसिच्' इति समासान्ते छान्दसं दीर्घत्वम् ॥

[23]संपत्नीयहोमः—सं पत्नीति त्रिष्टुप् ॥ पत्या सह पत्नी सुकृतेन सम्यगनुष्ठितकर्मफलेन संगच्छताम् । यज्ञस्य च धुर्यौ धुरो वोढारौ पत्नीयजमानौ सर्वदा युक्तौ धुर्याविव सङ्गतौ अभूतां भवताम् । छान्दसो लुङ्, 'धुरो यड्ढकौ' सञ्जानानौ ऐकमत्यं गतौ अत एव अरातीः शत्रून्विजहतां विजहीताम् ।

* सं. ७-१-१.

नौ विजहतामरातीः । दिवि ज्योतिरजरमारंभेताम् । [24]दश ते तनुवो यज्ञ यज्ञियाः । ताः प्रीणातु यजमानो घृतेन । नारिष्ठयोः प्रशिषमीडमानः । देवानां दैव्येऽपि यजमानोऽमृतोऽभूत् ।

छान्दसमत्वम् । दिवि स्थितं ज्योतिरादित्यात्मकं पुरुषं अजरं नित्यं आरभेतां आभिमुख्येन प्राप्नुताम् ॥

[24]देहपातोत्तरकालं नारिष्ठहोमाः चत्वारः—दश त इति त्रिष्टुप् ॥ हे यज्ञ! तव दश तनुवः शरीराणि याज्ञिया यज्ञसंपादनार्हाः दश प्राणाः तव तनुस्थानीयाः ताः प्रीणातु तर्पयतु यजमानो घृतेन । नारिष्ठयोः देवयोः प्रशिषं प्रकृष्टशासनं ईडमानः स्तुवन् याचमानो वा प्रशासित्रोः तयोः प्रशासने वर्तमान इत्यर्थः । नॄ नये, अतिशयेन नेतारः यजमानाः नारिष्ठाः । 'तुश्छन्दसि' इतीष्ठन् । तेषां संबन्धिनौ देवौ नारिष्ठौ अग्निवायू, अग्न्यादित्यौ, अन्यौ वा कौचित् । 'शासः क्वौ' इतीत्वम् । ईडेर्व्यत्ययेन शप् । अनुदात्तेत्त्वात् लसार्वधातुकानुदात्तत्वम्, 'अदुपदेशात्' इति वा । देवानामपि सम्बन्धिनि दैव्ये स्थाने देवैकयोग्ये । 'देवाद्यञञौ' इति यञ् । तत्रापि अयं यजमानोऽभूत् भवतु । छान्दसो लुङ्, लेटि वा शपो लुक्, 'भूसुवोस्तिङि' इति गुणाभावः । अमृतः अमरणः तत्र वर्ततामिति ॥

[25]यं वां देवा अकल्पयन् ॥५२॥ ऊर्जो भागꣳ शतक्रतू । एतद्वां तेन प्रीणानि । तेन तृप्यतमꣳहहौ । [26]अहं देवानाꣳ सुकृतामस्मि लोके । ममेदमिष्टं न मिथुर्भवाति । अहं नारिष्ठावनुयजामि

[25]यं वामित्यनुष्टुप् ॥ हे नारिष्ठौ! वां युवयोः यं ऊर्जः रसस्य भागं देवाः अकल्पयन् हे शतक्रतू! बहुकर्माणौ तेन वां युवां प्रीणानि यदेतज्जुहोमि, तस्मात् तेन आत्मीयेन भागेन तृप्यतं तृप्तौ भवतं हे अंहहौ! अंहसां हन्तारौ । व्यञ्जनलोपः छान्दसः । यद्वा—अंहानां गतीनां ज्ञातारौ ज्ञानानां वा गन्तारौ । अंहि गतौ, ओ हाङ् गतौ ॥

[26]अहं देवानामिति त्रिष्टुभौ ॥ अहं देवानां संबन्धिनि सुकृतां शोभनकर्मकारिणां यजमानानां लोके स्थाने अस्मि भविष्यामि भूयासं वा । 'आशंसायां भूतवच्च' इति वर्तमानवत्प्रत्ययः । कुत इत्याह मम इदं इष्टं यागः न मिथुः न मिथ्या भवाति । लेट्याडागमः । एतदपि कुत इत्याह—अहं हि नारिष्ठौ देवौ अनुयजामि यागस्यानन्तरं यजामि विद्वान् तयोः महिमानं जानन् । केन भागेनेत्याह—यत् आभ्यां देवाभ्यां भागधेयं इन्द्रः अदधात् व्यदधात्, तेन इमौ यजामि एवमिदं विद्वान्, ततः सुकृतां लोके अस्मीति ॥

विद्वान् । यदाभ्यामिन्द्रो अदधाद्भागधेयम् । [27]अदारसृद्भवत देव सोम । अस्मिन् यज्ञे मरुतो मृडता नः । मा नो विददभि भामो अशस्तिः ॥५३ मा नो विदद्वृजना द्वेष्या या । [28]ऋषभं वाजिनं

[27]अदारसृदिति ॥ हे देव! सोम! त्वं अदारसृत् भवत भव अस्माकं दाराणां पत्नीनां अस्रंसयिता, दारेभ्यो वा अस्रंसयिता, दारेभ्यो वा रेतसोऽस्रंसयिता अदारसृत् 'सोमो वै रेतोधाः'* प्रजासमृद्धिं अस्मात् प्रार्थयते । व्यत्ययेन बहुवचनम् । हे मरुतः! यूयमपि अस्मिन् यज्ञे वर्तमानान् नः अस्मान् मृडत सुखयत । तत. युष्मत्प्रसादभाजः नः अस्मान् भामः क्रोधः माऽभिविदत् आभिमुख्येन मा प्रापत् शत्रूणां क्रोधफलं अस्मासु सङ्क्रान्तं माभूदिति यावत् । विन्दतिर्वादिः, लृदित्वादङ् । भाम क्रोधे । अशस्तिः अकीर्तिश्च अस्मान् माऽभिविददित्येव । मा चास्मान् विदत् वृजना वृजिनं पापं वर्जनीयं वा कर्म । 'सुपां सुलुक्' इत्याकारः । यद्वा— वृजना, वृजिनानि । शेर्लोपः । विदत् इति व्यत्ययेनैकवचनम् । यानि चान्यानि द्वेष्याणि तान्यपि मा अस्मान् विदन् ॥

[28]पार्वणहोमौ—ऋषभमिति द्वौ ॥ प्रथमा पञ्चपदा पङ्क्तिर्यजुरन्ता पौर्णमास्याः । द्वितीया जगती यजुरन्ता त्रिष्टुप्वामावास्यायाः ॥ ऋषभं प्रधानं वाजिनं अन्नवन्तं अन्नसाधनत्वात्,

* सं. २-१-१.

वयम् । पूर्णमासं यजामहे । स नो दोहताꣳ सुवीर्यम् । रायस्पोषꣳ सहस्रिणम् । प्राणाय सुराधसे । पूर्णमासाय स्वाहा । [29]अमावास्या सुभगा सुशेवा । धेनुरिव भूय आप्यायमाना । सा नो दोहताꣳ सुवीर्यम् । रायस्पोषꣳ सहस्रिणम् । अ-

---

हविर्वा। तद्वन्तं वयं पूर्णमासं पर्व पूर्णो माश्चन्द्रोऽस्मिन्निति पूर्णमासः। यजामहे अनयाऽऽहुत्या । स चास्माभिः इष्टः पूर्णमासः नः अस्माकं सुवीर्यं शोभनवीर्ययुक्तं रायस्पोषं धनपुष्टिं सहस्रिणं बहुत्ववन्तं, 'तपस्सहस्राभ्यां विनीनी' । दोहतां दुग्धाम्, ददातु। व्यत्ययेन शप् । प्राणाय सुराधसे शोभनधनहेतवे ईदृशप्राणस्थित्यर्थं रायस्पोषं दुग्धां, स्वाहा स्वाहुतं च इदमस्तु तस्मै पूर्णमासाय । यद्वा—प्राणस्थितिहेतवे सुराधसे पूर्णमासाय स्वाहुतमिदमस्त्विति । 'सोर्मनसि' इत्युत्तरपदाद्युदात्तत्वम् ॥

[29]अमावास्येति ॥ अमा सहवसतः सूर्याचन्द्रमसौ अस्यां इत्यमावास्या । 'अमावस्यदन्यतरस्याम्' पक्षे ण्यत् । सुभगा शोभनधना सुशेवा सुसुखा । उभयत्रापि 'द्व्यचश्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् । दुग्धा धेनुः यथा भूयोऽप्याप्यायते एवं पुनःपुनः आप्यायमाना वर्धमाना वर्धमानधना । सा न इत्यादि तुल्यम् । अपामहेतुत्वात्तेन ताच्छब्द्यम् । अमावास्याया इति विशेषः ॥

पानार्य सुराधसे । अमावास्यायै स्वाहा । [30]अभि स्तृणीहि परिधेहि वेदिम् । जामिं मा हिꣳसीरमुया शयाना । होतृषदना हरितास्सुवर्णाः । निष्का इमे यजमानस्य ब्रध्ने ॥ ५४ ॥

अभीत्वर्यै करोमि क्रमीत्पिताऽऽत्मनं एकतोमुखां मे दिशोऽध्यक्षेभ्यो हविर्गौरूहपत्याकल्पयन्नशास्तिस्सा नो दोहताꣳ सुवीर्यꣳ सप्त च ॥ ५ ॥

[30] होतृषदनैः वेदिमभिस्तृणाति—अभिस्तृणीहीति त्रिष्टुभा ॥ हे बर्हिरोषधे! अभिस्तृणीहि वेदिं अभितः छादय परिधेहि परित आच्छादय वस्त्रेणेव, जामिं साहचर्यात् भगिनीस्थानीयां इमां वेदिं मा हिंसीः अमुया अनया सह शयाना । यद्वा—अमुत्र वेद्यां शयाना । 'सुपां सुलुक्' इति याजादेशः । इदानीं परोक्षवत् स्तूयते—होतृषदनाः होता येषु निषीदति हरिताः हरितवर्णाः सुवर्णाः शोभनच्छायाः इमे यजमानस्य ब्रध्ने परिवृढभोगस्थाने निष्काः अलङ्कारभूताः भविष्यन्ति । तस्मात् इत्थंभूतं त्वं वेदिमभिस्तृणीहि ॥

इति तैत्तिरीयब्राह्मणे तृतीये सप्तमे अच्छिद्रेषु पञ्चमोऽनुवाकः.

[1]परि॑स्तृणीत परि॑धत्ताग्निम्। परि॑हितोऽग्निर्यज॑मानं भुनक्तु। अपा॒ꣳ रस॒ ओष॑धीनाꣳ सुवर्णः। निष्का इमे यज॑मानस्य सन्तु कामदुघाः। अमुत्रामुष्मिन्लोके। [2]भूप॑ते भुव॑नपते। महतो भूतस्य॑ पते। ब्रह्माणं त्वा वृणीमहे। [3]अहं भूप॑तिरहं

[1]दोहनानन्तरकालं संप्रैषः, परिस्तरणमन्त्रो वा—परिस्तृणीतेति पञ्चपदा शक्करी॥ 'सन्तु' इति चतुर्थपादान्तः। प्रैषपुरुषा दर्भा वा उच्यन्ते। परिस्तृणीत परितः छादयत अग्निं परिधत्त परितो धारयत आच्छादयत वा। ततः तथा युष्माभिः परिहितोऽग्निः यजमानं भुनक्तु। ततश्च अपां सारभूताः ते दर्भाः ओषधीनां मध्ये सुवर्णाः अस्य यजमानस्य निष्काः अलङ्कारभूताः कामदुघाश्च सन्तु। अमुत्र परत्र लोके अमुष्मिन् ऐन्द्रादौ यत्रेच्छति भोक्तुम्॥

[2]ब्रह्माणं वृणीते—भूपत इत्यादि यजुः। आद्या वा गायत्री॥ हे भूपते! यागद्वारेण पृथिव्याः पालयितः! भुवनपते! भुवनस्य अन्तरिक्षस्य पालयितः! महतो भूतस्य द्युलोकस्य च पालयितः!। यद्वा—सर्वत्र ब्रह्मणा अभेदेनोच्यते। भुवां पते! सर्वस्य भूतजातस्य पते! भुवनानां लोकानां पते! महतो भूतस्य आकाशादेरपि पते! तादृशं त्वां ब्रह्माणं वयं वृणीमहे॥

[3]अथ वृतो ब्रह्मा जपति—अहमिति यजुः॥ अहं भूपतिः भुवनपतिः महतो भूतस्य पतिः, सोऽहं देवेन सवि-

भुवनपतिः । अहं महतो भूतस्य पतिः ॥ ५५ ॥
देवेन सवित्रा प्रसूत आर्त्विज्यं करिष्यामि । देव सवितरेतं त्वा वृणते । बृहस्पतिं दैव्यं ब्रह्माणम् । तदहं मनसे प्रब्रवीमि । मनो गायत्रियै । गायत्री त्रिष्टुभे । त्रिष्टुब्जगत्यै । जगत्यनुष्टुभे । अनुष्टुक्पङ्क्त्यै । पङ्क्तिः प्रजापतये ॥ ५६ ॥ प्रजापतिर्विश्वेभ्यो देवेभ्यः । विश्वे देवा बृहस्पतये । बृहस्पतिर्ब्रह्मणे ।

त्रा प्रसूतः प्रेरितः उदयादिनाऽनुज्ञातः आर्त्विज्यं ब्रह्मत्वं करिष्यामि । हे देव! सवितः! सर्वस्य प्रेरयितः! एवं त्वामेवैतं ऋत्विग्यजमानाः मां वृणते । सवितारं विशिनष्टि—बृहस्पतिं बृहतां कर्मणां पतिं पालयितारं, सुट्, तलोपश्च । दैव्यं देवानां संबन्धिनं ब्रह्माणं ईदृशं त्वामेव मद्वरणापदेशेन वृणते, तस्मात् त्वमेव बृहस्पतिः कथं नाम वृतस्स्या इति तदर्थं एतदहं मनसे प्रब्रवीमि ख्यापयामि तदुपक्रमत्वात् सर्वप्रवृत्तीनाम् । ततः तत् मनो गायत्रियै प्रब्रवीतु, गायत्री च त्रिष्टुभ इत्यादि यावद्ब्रह्म । वसतिवरणाय प्रवचनं योजनीयम्। अथ ब्रह्म च परमेष्ठी भूर्भुवस्सुवः त्रैलोक्ये प्रब्रवीतु सर्वात्मत्वात्तस्य । यद्वा—त्रैलोक्यात्मकं ब्रह्म स एव बृहस्पतिः, स खलु तादृशो बृहस्पतिः देवानां ब्रह्मा स्वेनैव रूपेण, अहं तु तद्रूपेण वर्तमानो मनुष्याणां ब्रह्मा । एते च मां त्वद्रूपेण वृणते । अतो हे बृहस्पते! त्वमेव यज्ञं गोपाय अहमपि

ब्रह्म भूर्भुवस्सुवः । बृहस्पतिर्देवानां ब्रह्मा । अहं मनुष्याणाम् । बृहस्पते यज्ञं गोपाय । [4]इदं तस्मै हर्म्यं करोमि । यो वो देवाश्चरति ब्रह्मचर्यम् । मेधावी दिक्षु मनसा तपस्वी ॥ ५७ ॥ अन्तर्दूतश्चरति मानुषीषु । [5]चतुश्शिखण्डा युवतिस्सुपेशाः । घृतप्रतीका भुवनस्य मध्ये । मर्मृज्यमाना महते

---

त्वद्रूपेण गोपयामि । एवं देवेन सवित्रा प्रसूतः आर्त्विज्यं करिष्यामि ॥

[4]उत्कराभिग्रहणे जपः—इदं तस्मा इति त्रिष्टुप् ॥ हे देवाः! तस्मै तदर्थं इदं हर्म्यं स्थानं यज्ञार्हं करोमि, कस्मै युष्माकं ब्रह्मचर्यं यश्चरति व्रतपतिः अग्निः । कीदृशः? मेधावी प्रज्ञावान् तपस्वी नित्यतपाः एवंभूतः यः मानुषीषु दिक्षु प्रज्ञाविभागेषु दूतः चरति हिताहितप्राप्तिपरिहारोपायज्ञः वर्तते अन्तः मध्ये मनसा प्रशस्तेनेत्थंभूतः, तस्मै इदं करोमीति ॥

[5]वेदेन वेद्यां संमृज्यमानायां जपति—चतुश्शिखण्डेति त्रिष्टुप् ॥ चतुश्शिखण्डा भूषणस्थानीयैः चतुर्भिः ऋत्विग्भिः युक्ता चतुष्कोणा वा युवतिः आकारेण युवतिसदृशी 'पुरस्ताद्वरीयसी पश्चात्प्रथीयसी मध्ये सन्नततरेवमिव हि योषा' इति श्रुतेः । सुपेशाः सुरूपा । आद्युदात्तः । 'द्व्यचश्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् । घृतप्रतीका घृतमुखा घृतप्रक्रमा प्रथमं

**सौभंगाय । मह्यं धुक्ष्व यजंमानाय कामान्। [6]भूमिर्भूत्वा मंहिमानं पुपोष । ततो देवी वर्धयते पयांꣳसि । यज्ञियां यज्ञं वि च यन्ति सं चं[1] । ओषंधीराप इह शक्करीश्च । [7]यो मा हृदा मनसा यश्च**

तत्र तेषां स्थापनात्, यज्ञद्वारेण वर्षोपक्रमस्थानभूता वा, भुवनस्य यज्ञगृहस्य मध्ये समस्तस्य वा भुवनस्य मध्ये यथोक्तविशिष्टरूपा महते सौभगाय सुश्रीकत्वाय मर्मृज्यमाना शोध्यमाना वेदेन । 'सुभगान्मन्त्रे' इत्यत्र् । 'हृद्भगसिन्ध्वन्ते' इत्युभयपदवृद्धिरस्मिन्विषये नेष्यते । सा त्वं मह्यं यजमानाय कामान् धुक्ष्व देहि ॥

[6]वेद्यां क्रियमाणायां जपति—भूमिर्भूत्वेति त्रिष्टुभम् ॥ इयं वेदिः भूमिः भूत्वा सर्वपृथिवीभावेन वर्तमाना सती महिमानं माहात्म्यं पुपोष पुष्णाति । ततः देवी सर्वपृथिव्यात्मिका इयं वेदिः पयांसि तृणादिनिष्पादनेन वर्धयते उदकानि वा यागद्वारेण । ततोऽस्या महाभागतया यज्ञियाः यज्ञसंपादनार्हाः ओषध्यः आपः शक्कर्यः पशवश्च । 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । इह पृथिव्या यज्ञं वियन्ति च संयन्ति च[1] क्षीरादिरूपेण परिणताः स्वरूपहानाद्विगच्छन्ति दर्भादिरूपेणोपयोगात् स्वरूपेण सङ्गच्छन्ति यज्ञम् ॥

[7]उत्करेऽर्घ्यं निहन्ति—यो मेति त्रिष्टुभा ॥ यो मा हृदा हृद-

[1] माधवीयभाष्यानुरोधेन 'वि च यन्ति सं च' इति पाठः,

वाचा ॥ ५८ ॥ यो ब्रह्मणा कर्मणा द्वेष्टि देवाः । यश्श्रुतेन हृदयेनेष्णता च । तस्येन्द्र वज्रेण शिरश्छिनद्मि । [8]ऊर्णामृदु प्रथमानꣳ स्योनम् । देवेभ्यो जुष्टꣳ सदनाय बर्हिः । सुवर्गे लोके यजमानꣳ हि धेहि । मां नाकस्य पृष्ठे परमे व्योमन् ।

---

यमात्रेण द्वेष्टि यश्च मां मनसा द्वेषणपरेण तात्पर्येण द्वेष्टि, यश्च मां वाचा तादृशपदप्रयोगेण द्वेष्टि । द्वेषहेतुं दर्शयति— ब्रह्मणा ब्रह्मवर्चसेन वेदाध्ययनादिना वा कर्मणा तपोऽतिशयेन श्रुतेन विद्यासंपदा हृदयेन हृदयवत्तया बुद्धिमत्तया । यद्वा— इष्णता एषणकुशलेन हृदयेन । इष्णता कान्त्येत्येके । एवं अनेन अनेन वा भूयो मां द्वेष्टि, हे देवाः! हे इन्द्र! प्राधान्यात् पुनरुपादानं, त्वदीयेन वज्रेण शिरश्छिनद्मि । यद्वा— वज्रस्थानीयेन अनेन स्फ्येन तस्य शिरश्छिनद्मि । इन्द्रस्य वज्रेण शिरश्छिनद्मि हे देवा इत्येके ॥

[8]बर्हिषि आसाद्यमाने जपति—ऊर्णामृद्विति त्रिष्टुभम् ॥ ऊर्णामृदु ऊर्णेव मृदु । उपमानपूर्वपदप्रकृतिस्वरत्वम् । प्रथमानं विस्तारं भजत् स्योनं सुखं देवेभ्यः जुष्टं इष्टं सदनाय आसनाय पर्याप्तं बर्हिः । त्वं सुवर्गे लोके—कीदृशे?—नाकस्य अविद्यमानदुःखस्य स्थानस्य पृष्ठे प्रधाने परमे व्योमन् प्रकृष्टे रक्षके आदित्यान्तरपुरुषे यजमानं मां धेहि स्थापय योजय॥

[9]चतुश्शिखण्डा युवतिस्सुपेशाः । घृतप्रतीका वयुनानि वस्ते । सा स्तीर्यमाणा महते सौभगाय॥५९ सा मे धुक्ष्व यजमानाय कामान् । [10]शिवा च मे शग्मा चैधि । स्योना च मे सुषदा चैधि । ऊर्जस्वती च मे पयस्वती चैधि । इषमूर्जं मे पिन्वस्व । ब्रह्म तेजो मे पिन्वस्व । क्षत्त्रमोजो मे पिन्वस्व । विशं पुष्टिं मे पिन्वस्व । आयुरन्नाद्यं मे पिन्वस्व । प्रजां पशून्मे पिन्वस्व ॥६०॥

[9]स्तीर्यमाणायां वेद्यां जपति—चतुश्शिखण्डेति त्रिष्टुभम् ॥ व्याख्यातप्राया* । विशेषस्तु—वयुनानि कान्तानि वासांसि बर्हिरिदं वस्ते आच्छादयति, सा त्वं महते सौभगाय बर्हिषा स्तीर्यमाणा सा मे यजमानाय कामान् धुक्ष्व ॥

[10]शिवा चेत्यादि यजुः ॥ सा त्वं मे शिवा शान्तोपद्रवा च एधि भव, शग्मा शक्ता च एधि । अत्र गुणसमुच्चयः । तेनाख्यातस्य चयोगाभावात् 'चवायोगे' इति निघातप्रतिषेधाभावः । स्योना सुखा सुषदा सुष्ठु अध्यासनीया ऊर्जस्वती बलवती पयस्वती क्षीरादिमती तद्धेतुत्वात् सा त्वं मे इषं अन्नं ऊर्जं च दुग्धादिरसं पिन्वस्व सिञ्च वर्धय, ब्रह्म अध्ययनादि तेजः ब्रह्मवर्चसादिकं च पिन्वस्व क्षत्रं बलं क्षत्रियजातिं

* ब्रा. ३-७-६[5].

**[11]अस्मिन् यज्ञ उप भूय इन्नु मे। अविक्षोभाय परिधीन्दधामि। धर्ता धरुणो धरीयान्। अग्निर्द्वेषाꣳसि निरितो नुदातै। [12]विच्छिनद्मि विधृतीभ्याꣳ सपत्नान्। जातान्भ्रातृव्यान् ये च जनिष्यमाणाः। विशो यन्त्राभ्यां विधमाम्येनान्।**

---

वा ओजः तेजः बलं वा। विशं वैश्यजातिं प्रजां वा पुष्टिं समृद्धिं आयुः शतसङ्ख्यं अन्नाद्यं अन्नादनसामर्थ्यं प्रजां पुत्रादीन् पशून् गवादीन्॥

[11]परिधिषु परिधीयमानेषु जपति—अस्मिन्यज्ञ इति मध्येज्योतिषं त्रिष्टुभम्। तृतीयस्य पादस्य अष्टाक्षरत्वात्॥ अस्मिन् यज्ञे भूय इत् भूयोभूयः, इदिति क्षिप्रार्थे, पादपूरणे वा। ममापि अविक्षोभाय अविचलनाय परिधीनुपदधामि तव समीपे स्थापयामि। स च तथोपहितोऽग्निः धर्ता सर्वधारणकुशलः धरुणः सर्वैर्धारणीयः धरीयान् अन्येभ्यः धारकेभ्यः अतिशयेन धारयिता, तृन्नन्तात् 'तुश्छन्दसि' इतीयसुन्। ईदृशोऽयमग्निः इतः स्थानात् इतो वा यजमानात् द्वेषांसि द्वेष्याणि रक्षःप्रभृतीनि नुदातै निष्कृष्य नाशयतु। लेटि 'वैतोऽन्यत्र' इत्यैकारः॥

[12]विधृत्योः साद्यमानयोः जपति—विच्छिनद्मीति त्रिष्टुभौ प्राणान्मयि इति गायत्रीं च॥ विविधं पृथक् धार्येते आ-

**अहꣳ स्वानामुत्तमोऽसानि देवाः । विशो यन्त्रे नुदमाने अरातिम् । विश्वं पाप्मानममतिं दुर्मरायुम् ॥ ६ १ ॥ सीदन्ती देवी सुकृतस्य लोके । धृती स्थो विधृती स्वधृती । प्राणान्मयि धारयतम् ।**

भ्यामिति विधृती दर्भविशेषौ ताभ्यां साध्यमानाभ्यां विच्छिनाद्मि नाशयामि सपत्नान् शत्रून् । एवं सामान्येनोक्त्वा द्विप्रकारांस्तान् दर्शयति जातांश्च भ्रातृव्यान् सपत्नान्, ये च जनिष्यमाणाः सपत्नाः तानपि विच्छिनद्मि विशेषेण मूलतो नाशयामि । विशः सर्वप्रजाः यन्त्राभ्यां यमनसाधनाभ्याम् । मन्त्रलिङ्गं च 'विशो यन्त्रे स्थः'* इति । एवंभूताभ्यामाभ्यां भ्रातृव्यान् एनान् विधमामि विविधं पीडयामि । ध्मा शब्दाग्निसंयोगयोः, पाघ्रादिना धमादेशः । ततश्च स्वानां आत्मीयानां जनानां उत्तमः उत्कृष्टः असानि भूयासं हे देवाः । विशो यन्त्रे व्याख्यातम् । नुदमाने नाशयमाने अरातिं शत्रुं विश्वं च पाप्मानं अमतिं रोगम् । अमेरौणादिकोऽतिप्रत्ययः । दुर्मरायुं दुर्मरणहेतुं, औणादिक आयुप्रत्ययः । दुष्टस्य वा मरणस्य प्रापयितारं 'छन्दसीणः' इति उणप्रत्ययः । सीदन्ती अस्मिन् स्थाने सदनानन्तरं सीदन्त्यौ देव्यौ द्योतनवत्यौ सुकृतस्य सुष्ठु कृतस्य कर्मणो लोके स्थाने अस्मिन् सीदन्त्यौ धृती धारयित्र्यौ सर्वस्य विधृती विधृतिसंज्ञके विविधधारणे वा स्वधृती स्वाय-

* सं. १-१-११.

प्रजां मयि धारयतम् । पशून्मयि धारयतम् ।
[13]अयं प्रस्तर उभयस्य धर्ता । धर्ता प्रयाजानामु-
तानूयाजानाम् । स दाधार समिधो विश्वरूपाः ।
तस्मिन्त्स्रुचो अध्यासादयामि । [14]आरोह पथो
जुहु देवयानान् ॥ ६२ ॥ यत्रर्षयः प्रथमजा ये

त्तधारणे । ईदृशौ युवां स्थः । ते युवां मयि प्राणान् च-
क्षुरादीन् प्रजां पुत्रादिकां पशून् गवादिकांश्च धारयतम् ॥

[13]प्रस्तरे साद्यमाने जपति—अयं प्रस्तर इति त्रिष्टुभम् ॥
प्रस्तीर्यत इति प्रस्तरः अयं प्रस्तरः उभयस्य जुहूपभृल्लक्षणस्य
धर्ता धारयिता प्रयाजानां प्रयाजार्थानां अनूयाजार्थानां च आ-
ज्यानां धारयिता सोऽयं समिधः समिदादिकाः प्रयाजदेवताः
विश्वरूपाः विश्वार्थस्थितिहेतून् दाधार धारयति तदीयाज्यधार-
णात् । छान्दसे लिटि तुजादित्वादभ्यासस्य दीर्घत्वम् । तस्मि-
न्नेव महाभागे स्रुच अध्यासादयामि उपरि सादयामि ।
पूजार्थं बहुवचनम् ॥

[14]जुहूं साद्यमानामनुमन्त्रयते—आरोहेति त्रिष्टुभा ॥ हे जुहु!
देवयानान् पथः मार्गानारोह देवा यैर्गच्छन्ति । यत्र ऋषयः
दर्शनवन्तः प्रथमजाः अस्मत्पूर्वजाः ये पुराणाः पुरातनाः व-
सिष्ठादयः नियता वर्तन्ते तान् कर्ममार्गान् आरोह । कीदृशीति
चेत्? हिरण्यपक्षा हितरमणीयपार्श्वा अजिरा गतिमती संभृ-
ताङ्गा सम्यक् निष्पादिताङ्गा । ईदृशी तान् पथ आरुह्य मा

पुराणाः । हिरण्यपक्षाऽजिरा सम्भृताङ्गा । वहासि मा सुकृतां यत्र लोकाः । [15]अवाहं बाध उपभृता सपत्नान् । जातान्भ्रातृव्यान् ये च जनिष्यमाणाः। दोहै यज्ञꣳ सुदुघामिव धेनुम् । अहमुत्तरो भूयासम् । अधरे मत्सपत्नाः । [16]यो मा वाचा मनसा दुर्मरायुः । हृदाऽरातीयादभिदासदग्ने ॥ ६ ३ ॥ इदमस्य चित्तमधरं ध्रुवायाः । अहमुत्तरो भूयासम् ।

---

मामपि वहासि वह । क? यत्र सुकृतां शोभनकर्मकारिणां लोकाः । लेट्याडागमः ॥

[15]उपभृतमनुमन्त्रयते—अवाहमिति पञ्चपदया जगत्या ॥ अहं अनया उपभृता सपत्नान् जातान् जनिष्यमाणांश्च अवबाधे। ततश्च निष्प्रत्यूहमिमं यज्ञं सर्वान् कामान् दोहै दुह्यासम्, सुदुघां शोभनदोहनां धेनुमिव गामिव । 'दुहः कप् घश्च' इति कप् । तथा दुहानस्य मम इदं चास्तु—अहं उत्तरः सपत्नेभ्यः उद्गततरो भूयासं सपत्नाश्च मत् मत्तः अधरे निकृष्टाः भूयासुः । संबन्धिशब्दात् मम सपत्ना इति गम्यते ॥

[16]ध्रुवामनुमन्त्रयते—यो मेति । इयमपि पञ्चपदा जगती ॥ यो मा वाचा मनसा हृदा च अरातीयात् अरातीयति शत्रुमिवाचरति, आचारक्यजन्ताल्लेट्याडागमः । दुर्मरायुः दुष्टमरणकारी अरातीयति माम् । यश्च मां अभिदासत् अभिक्ष-

**अध॑रे॒ मथ्सप॒त्नाः । [17]ऋ॒ष॒भो॑ऽसि शा॒क्व॒रः । घृ॒ता-**
**ची॑ना॒ꣳ सू॒नुः । प्रि॒येण॒ नाम्ना॑ प्रि॒ये सद॑सि सीद ।**
**[18]स्यो॒नो मे॑ सीद सु॒षदः॑ पृथि॒व्याम् । प्रथ॑यि प्र॒ज-**
**या॑ प॒शुभि॑स्सुव॒र्गे लो॒के । दि॒वि सी॑द पृथि॒व्याम॒-**
**न्तरि॑क्षे । अ॒हमु॑त्त॒रो भू॑यासम् ॥ ६४ ॥ अध॑रे॒ म-**

---

पयति हे अग्ने! अस्य दुरात्मनः इदं एवंरूपं चित्तं ध्रुवायाः अधरं अधस्तात् न्यग्भूतं संस्थितं विनष्टप्रायमेव । तस्मात् अहमुत्तर इत्यादि गतम् ॥

[17]ध्रुवायां स्रुवाज्यमवदधाति—ऋषभोसीति परोष्णिहा ॥ ऋषभः प्रधानोऽसि हे स्रुव! शाक्वरः शक्वरीछन्दःप्रभवः शकनशीलो वा घृताचीनां सूनुः पुत्रस्थानीयः ततः रसहरणप्रक्षेपादिकारित्वात् । घृतमञ्चतीति क्विनिपि 'चौ' इति पूर्वपदस्य दीर्घत्वं, अन्तोदात्तत्वं च । स त्वं प्रियेण नाम्ना घृतलक्षणेन प्रिये सदसि स्थाने ध्रुवायां सीद ॥

[18]स्रुवमाज्यस्य पूरयित्वा दक्षिणेन जुहूं प्रस्तरे सादयति—स्योनो म इति जगत्या पञ्चपदया ॥ हे स्रुव! स्योनः मे सुखहेतुः अत्र स्थाने सीद, सुषदः सुष्ठु सादनीयः तादृशेन सुप्रथितेन त्वया अहमपि पृथिव्यां प्रजया पशुभिश्च प्रथयि प्रथितस्स्यां सुवर्गेऽपि लोके प्रथितस्स्याम् । प्रथेः छान्दसे लङि वर्णव्यत्ययेन शपः एत्वं 'बहुलं छन्दस्यमाङ्योगेऽपि' इत्यडभावः । लिङ्येव वा इकारोऽन्त्योपजनः । किञ्च—दिवि प्र-

ध्सपत्नाः । [19]इयꣳ स्थाली घृतस्य पूर्णा । अच्छिन्न-पयाश्शतधार उथ्सः । मारुतेन शर्मणा दैव्येन । [20]यज्ञोऽसि सर्वतश्श्रितः । सर्वतो मां भूतं भविष्यच्छ्रयताम् । शतं मे सन्त्वाशिषः । सहस्रं मे

स्तरस्योपरि द्युस्थानीये त्वं सीद । अहमपि तस्यां दिवि पृथिव्यां अन्तरिक्षे च उत्तरत्वसामान्यात् सपत्नेभ्यः उत्तरो भूयासम् । ते च सपत्नाः मत् मत्त अधरे सन्तु ॥

[19]आज्यस्थालीं—इयं स्थालीति त्रिपदया विराजा ॥ इयं आज्यस्थाली घृतस्य पूर्णा, 'पूरणगुण' इति समासप्रतिषेधेन षष्ठी ज्ञापिता । केन तुल्येत्याह—अच्छिन्नपयाः अक्षीणपयाः अक्षीणोदकः शतधारः अनेकनिर्गमनद्वारः उत्सः उत्स्यन्दनः, तादर्थ्यात्ताच्छब्द्यम् । यद्वा—उत्सः अशोष्यह्रदः । अच्छिन्न-पयाः प्रवाहः मारुतेन कदाऽप्यशोषणीयपयाः । अत एव दैव्येन शर्मणा सुखेन इत्थंभूतः । ईदृशः अस्तु इयं स्थाली ॥

[20]आग्नेयं पुरोडाशमासन्नं अभिमर्शयति—यज्ञोऽसीति पञ्च-पदया त्रिष्टुभा ॥ हे आग्नेय! पुरोडाश! त्वमेव सर्वतः श्रितः सर्वेणापि प्रकारेण सेवितः यज्ञः यज्ञहेतुः असि । अतः तादृ-शेन त्वया सहायेन मामपि भूतं भविष्यच्च पुत्रपौत्रादिकं फलं श्रयतां सेवताम् । किञ्च—मे मम आशिषः प्रार्थनीयाः कामाः शतं सन्तु बहुतरा भवन्तु । तथा सहस्रं बहुतमाः सूनृताः

सन्तु सूनृताः । इरावतीः पशुमतीः । प्रजापतिरसि सर्वतश्श्रितः ॥ ६५ ॥ सर्वतो मां भूतं भविष्यच्छ्रूयताम् । शतं मे सन्त्वाशिषः । सहस्रं मे सन्तु सूनृताः । इरावतीः पशुमतीः । [2]इदमिन्द्रियममृतं वीर्यम् । अनेनेन्द्राय पशवोऽचिकित्सन् । तेन देवा अवतोप माम् । इहेषमूर्जं यशस्सह

---

प्रियाः सत्यात्मिकाः प्रार्थिताधिकप्रदायित्वात् सूनृताधिक्यम् । इरावत्यः बह्वन्नाः पशुमत्यः बहुपशुकाश्च भवन्तु, काः? आशिषः सूनृताश्च । प्रजापतिरसीति । पुरोडाश! प्रजापतिरेव त्वमसि वृष्ट्यादिना सर्वस्थितिहेतुत्वात् । सर्वतः श्रितः इत्यादि । तुल्यम् ॥

[2]भूते साध्यमाने—इदमिति ॥ इदं क्षीरं इन्द्रियं इन्द्रेण जुष्टं अमृतं यागसाधनत्वेन विनाशरहितं वीर्यं वीर्यप्रदम् । अनेन क्षीरेण इन्द्रार्थं पशवोऽचिकित्सन् आरोग्यमकुर्वन् । पशुभिः क्षीराख्ये हविषि सम्पादिते योऽयमिन्द्रियस्य परितोषः सैवानिष्टस्य चिकित्सा । हे देवाः! तेन अनेन पयसा इह अस्मिन्कर्मणि वर्तमानं मामुपावत उपेत्य रक्षत । इहेति तृतीयपादान्तो युक्त इति लक्ष्यते । किञ्च—युष्मत्प्रसादादहं इषं ऊर्जं रसं क्षीरादि यशः कीर्तिं सहः बलं ओजः दीप्तिं च सनेयं भजेयम् । शृतं च इदं मयि श्रयतां पुनःपुनः मां

ओजस्सनेयम् । शृतं मयि श्रयताम् । [22]यत्पृथिवीमचरत्तत्प्रविष्टम् ॥ ६६ ॥ येनासिंञ्चद्बलमिन्द्रे प्रजापतिः । इदं तच्छुक्रं मधु वाजिनीवत् । येनोपरिष्टादधिनोन्महेन्द्रम् । दधि मां धिनोतु । [23]अयं वेदः पृथिवीमन्वविन्दत् । गुहा सतीं गहने

---

भजताम् इन्द्रियवीर्ययोः मयि श्रयणाय । ब्राह्मणं च 'इन्द्रियं वावास्मिन्वीर्यं तदश्रयन्'* इति ॥

[22]दधि साद्यमाने—यत्पृथिवीमिति पञ्चपदया जगत्या ॥ यत् दधि पृथिवीं प्रविष्टमचरत् तृणादिरूपेण पृथिव्यामवर्तत, यद्भक्षणेन गावः समनैषुः, येन च प्रजापतिः इन्द्रे बलमासिञ्चत् स्थापितवान् इन्द्रियं वीर्यं च आनीतवान्, तदिदं सादितं दधि मधु मधुरं वाजिनीवत् विशिष्टगतिमत् विविधविप्रवृत्तिहेतुर्वा भवतु, शुक्रं बीजं प्रजानां वृद्धिहेतुर्भवति, येन उपरिष्टात् शृतावस्थाया अप्यूर्ध्वं महेन्द्रं धिनोत् अप्रीणयत् प्रजापतिः । ब्राह्मणं च—'तदेनमधिनोत्तद्दध्नो दधित्वम्'* इति । तत् दधि मामपि महेन्द्रमिव धिनोतु प्रीणयतु, धिवि प्रीणने, इदित्वान्नुम्, 'धिन्विकृण्व्योर च' इत्युप्रत्ययः ॥

[23]वेदादाने—अयं वेद इति त्रिष्टुप् ॥ अयं वेदः पृथिवीं असुरेभ्यः अन्वविन्दत् अनुक्रमेणालभत । 'वेदेन वै देवाः'† इत्यादि ब्राह्मणम् । गुहा गुहायां आवृते देशे । 'सुपां सुलुक्'

---

* सं. २ ६-३. † सं. १-७-४.

गह्वरेषु । स विन्दतु यजमानाय लोकम् । अच्छिद्रं यज्ञं भूरिकर्मा करोतु । [24]अयं यज्ञस्समसदद्धविष्मान् । ऋचा साम्ना यजुषा देवताभिः ॥६७॥ तेन लोकान्त्सूर्यवतो जयेम । इन्द्रस्य सख्यममृतत्वमश्याम् । [25]यो नः कनीय इह कामयातै ।

---

इति सप्तम्या आकारः । गहने अप्रकाशे गह्वरे दुष्प्रापे देशे सतीं द्रष्टुमप्यशक्यां पृथिवीं वेदः अन्वविन्दत । स तादृशो महानुभावः यजमानाय लोकं प्रकाशवत् स्थानं विन्दतु लभतां दातुम् । तदर्थं किं कर्तव्यमिति चेत्? अच्छिद्रं यज्ञं अविकलं यज्ञं करोतु ततः हस्तस्थो लोक इति । स हि भूरिकर्मा बहुव्यापारः किंनाम न कुर्यादिति ॥

[24]सर्वेषु हविष्षु—अयं यज्ञ इति त्रिष्टुप् ॥ अयं यज्ञः, यज्ञसाधनत्वात् ताच्छब्द्यम्. समसदत् सह सीदति । हविष्मान् हविर्भिः तद्वान् ऋचा साम्ना यजुषा देवताभिश्च सह सीदति । 'अग्न आयाहि वीतय इत्याह रथन्तरस्यैष वर्णः'* इत्युक्तत्वात् साम्नेत्युक्तम् । तेन तादृशेन अनेन सूर्यवतः सूर्यकिरणापहततमिस्रान् लोकान् जयेम । ततः इन्द्रस्य सख्यं समानख्यानतां अमृतत्वं च अश्यां व्याप्नुयाम् ॥

[25]ऐन्द्राग्ने—यो न इति त्रिष्टुप् ॥ इह कनीयः अल्पीयः अल्पतरान्निकृष्टं यः अस्माकं कामयातै कामयेत । लेख्याडा-

---

* सं. २-५-८.

अस्मिन् यज्ञे यजमानाय मह्यम् । अप तमिन्द्राग्नी भुवनान्नुदेताम् । अहं प्रजां वीरवतीं विदेय । [26]अग्ने वाजजित् । वाजं त्वा सरिष्यन्तम् । वाजं जेष्यन्तम् । वाजिनं वाजजितम् ॥ ६८ ॥ वाजजित्यायै संमार्ज्मि । अग्निमन्नादमन्नाद्याय । [27]उपहूतो द्यौः पिता । उप मां द्यौः पिता ह्वयताम् ।

---

गमः । 'वैतोऽन्यत्र' इत्यैकारः । अपि च अस्मिन् यज्ञे वर्तमानाय मह्यं च यजमानाय यः कनीयः कामयेत इमौ इन्द्राग्नी अस्मात् भुवनात् तं अपनुदेतां नाशयतां, अहं तु तत्प्रसादात् वीरवतीं वीर्यवतीं प्रजां विदेय लभेय । 'लिङ्याशिष्यङ्' ॥

[26]अग्निसंमार्गे—अग्ने वाजजिदिति यजुः ॥ हे अग्ने! वाजजित्! अन्नस्य जेतः! तच्छील! वाजं अन्नं जेतुं त्वा सरिष्यन्तं सृत्वा च वाजं जेष्यन्तं ततः जित्वा वाजिनं बह्वन्नं एवं वाजजितं सर्वान्नस्य जेतारं त्वां वाजजित्यायै अन्नजयार्थं सम्मार्ज्मीति । छान्दसः क्यप् । अग्निं अङ्गनादिगुणं अन्नादं अन्नानां अत्तारं ईदृशं त्वां अन्नाद्याय सम्मार्ज्मीत्येव । अन्नादनसमर्थं अन्नाद्यम् । छान्दसो यत् ॥

[27]अन्तर्वेद्याग्नीध्रभागस्य चतुर्धाकरणे जपः—उपहूत इत्यादि यजुः ॥ उपहूतः अनुज्ञातः द्यौः द्युलोकः पिता पितृस्थानीयः वृष्ट्यादिप्रदानेन पालकत्वात् सः द्यौः पिता मामपि उपह्व-

अग्निराग्नींध्रात् । आयुंषे वर्चंसे । जीवात्वै पुण्यांय । उपंहूता पृथिवी माता । उप मां माता पृंथिवी ह्वंयताम् । अग्निराग्नींध्रात् ॥ ६१ ॥ आयुंषे वर्चंसे । जीवात्वै पुण्यांय । [28]मनो ज्योतिंर्जुषतामाज्यंम् । विच्छिन्नं यज्ञꣳ समिमं दंधातु । बृहस्पतिंस्तनुतामिमं नंः । विश्वें देवा इह मांदयन्ताम् । [29]यं तें अग्न आवृश्चामिं । अहं वां क्षिपि-

---

यनाम् । अग्निश्चोपहूतः सः मामप्युपह्वयताम् । किमर्थम्? आग्नीध्रात् आग्नीध्रभागाद्धेतोः । तदपि किमर्थम्? आयुषे अस्माकं आयुराद्यर्थं आयुरादीनि स्युरिति । आयुषे अन्नाय जीवनाय वा । वर्चसे बलाय तेजसे वा । जीवात्वै जीवनौपयाय चिर जीविताय वा, पुण्याय लोकाय वा सर्वस्मै पुण्यफलाय वा । एवं उपहूता पृथिवी माता मातृस्थानीया सर्वार्थनिर्माणव्यापकत्वात् । शिष्टं स्पष्टम् ॥

[28]विच्छिन्नसंधाने मार्जने—मनोज्योतिरिति त्रिष्टुब्विशेषः ॥ 'भूमिर्भूम्ना'* इत्यत्र व्याख्यातः ॥

[29]अनूयाजसमिदाधाने—यं ते अग्न इत्याद्याः तिस्रोऽनुष्टुभः ॥ हे अग्ने! ते तव स्वभूतः अहं यं रिपुं आवृश्चामि सर्वतो नाशयितुं प्रवृत्तः, अहं वा चरन् युष्मान् परिचरन् त्वदीया-

---

* सं. १-५-३.

तश्चरन्॑ । प्र॒जां च॒ तस्य॒ मूलं॑ च । नी॒चैर्दे॑वा॒ नि-वृंश्चत ॥ ७० ॥ [30]अग्ने॒ यो नो॑ऽभि॒दास॑ति । स॒मा॒नो यश्च॒ निष्ट्यः॑ । इ॒ध्मस्ये॑व प्र॒क्षाय॑तः । मा तस्यो-च्छेषि॒ किंच॒न । [31]यो मां॒ द्वेष्टि॑ जातवेदः । यं चा॒हं द्वेष्मि॒ यश्च॒ माम् । सर्वा॒ꣳस्ताँन॑ग्ने॒ संद॑ह । याꣳश्चा॒हं द्वेष्मि॒ ये च॒ माम् । [32]अग्ने॑ वाजजित् । वाजं॑ त्वा ससृ॒वाꣳसं॑म् ॥ ७१ ॥ वाजं॑ जिगि॒वाꣳसं॑म् । वा॒-

निचरन् येन रिपुणा क्षिपितः क्षणहेतुं विषयीकृतोऽस्मि । वर्णविकारश्छान्दसः । क्षिपेर्वा निष्ठायामिडागमः । तस्य दुरात्मनः प्रजां पुत्रादिं मूलं जीवनहेतुं च धनं नीचैः निवृश्चत न्यग्भूतं नाशयत हे देवाः! । एकस्मिन् पूजार्थं बहुवचनम् । सर्वदेवतामयत्वाद्वा ॥

[30]अग्ने यो न इति ॥ व्याख्याता 'जुष्टो दमूनाः'* इत्यत्र ॥

[31]यो मामिति ॥ हे जातवेदः! यः मां द्वेष्टि मया ज्ञातं, यं चाहं द्वेष्मि, तेन ज्ञातमिति सामर्थ्याद्गम्यते, ज्ञातविषयार्थत्वात् पुनर्वचनस्य । हे अग्ने! सर्वानपि तान् संदह । कान्? यांश्चाहं द्वेष्मि ये च मां द्विषन्ति तत्सहकारिणोऽपि सर्वान् ज्ञाताज्ञातस्वरूपान् संदह ॥

[32]द्वितीयेऽग्निसंमार्गे—अग्ने वाजजिदिति ॥ गतं यजुः । भूतप्रत्ययो विशेषः ॥

* ब्रा. २-४-१.

जिनं वाजजितम्। वाजजित्यायै संमार्ज्मि। अ-
ग्निमन्नादमन्नाद्याय। [33]वेदिर्बर्हिश्शृतꣳ हविः।
इध्मः परिधयस्स्रुचः। आज्यं यज्ञ ऋचो यजुः।
याज्याश्च वषट्काराः। सं मे संनतयो नमन्ताम्।
इध्मसंनहने हुते॥ ७२॥ [34]दिवः खीलोऽवततः।
पृथिव्या अध्युत्थितः। तेना सहस्रकाण्डेन। द्विष-
न्तꣳ शोचयामसि। द्विषन्मे बहु शोचतु। ओषधे

[33]इध्मसंनहनप्रक्षेपे—वेदिरिति षट्पदा जगती॥ वेदादयः संनतयः संनमनशीलाः सन्तः मे मदर्थं संनमन्तां मदभिप्रेतफलार्थं पुनःपुनः विधेयीभूय वर्तन्ताम्, यावज्जीवमविच्छेदो यथा भवति कर्मणस्तथा वर्तन्तां स्वयमेव। कर्मकर्तर्यात्मनेपदं, 'न दुहस्नुनमाम्' इति यगभावः। इध्मसंनहने हुते इदमेव निमित्तीकृत्य संनमन्तामिति॥

[34]प्रस्तरतृणप्रहरणे—दिवः खील इति जगती षट्पदा॥ हे तृण! त्वं हि दिवः द्युलोकात् अवततः अधस्ताद्विस्तीर्णः पृथिव्याश्चाध्युत्थितः ऊर्ध्वं स्थितः खीलस्तम्भः धारणस्तम्भस्थानीयः लोकयोः। तेन तादृशेन त्वया। छान्दसं संहितायां दीर्घत्वम्। सहस्रकाण्डेन बहुप्ररोहेण द्विषन्तं शत्रुं शोचयामसि। इदन्तोमसि। स च मे द्विषन् शत्रुः बहु अत्यर्थं शोचतु अहं तु मो मैव शुचम्॥

मो अहꣳ शंचम् । [35]यज्ञ नमस्ते यज्ञ । नमो नमश्च ते यज्ञ । शिवेनं मे संतिष्ठस्व । स्योनेनं मे संतिष्ठस्व ॥ ७३ ॥ सुभूतेनं मे संतिष्ठस्व । ब्रह्मवर्चसेनं मे संतिष्ठस्व । यज्ञस्यर्द्धिमनु संतिष्ठस्व। उपं ते यज्ञ नमः । उपं ते नमः । उपं ते नमः । [36]त्रिष्फलीक्रियमाणानाम् । यो न्यङ्गो अवशिष्यते।

---

[35]शंयुवाके जपः—यज्ञेत्यादि यजुः ॥ हे यज्ञ! तुभ्यं नमः प्रह्वीभावोऽस्तु प्रयोक्ता तव भूयासम् । हे यज्ञ! तुभ्यं नमोनमः पुनःपुनः प्रह्वीभावश्चास्तु । हे यज्ञ! मदर्थं शिवेन निरुपद्रवतया इत्थंभूतः संतिष्ठस्व समाप्तिं गच्छ । स्योनेन सुखेन सुभूतेन शोभननिर्वर्तितेन । ब्रह्मवर्चसेन मन्त्रबलेन । यज्ञस्य यजमानस्य ऋद्धिं फलं अनु लक्षीकृत्य तया वा सह संतिष्ठस्व । लक्षणे 'तृतीयार्थे' इत्येव अनोः कर्मप्रवचनीयत्वम् । 'समवप्रविभ्यः' इत्यात्मनेपदम् । हे यज्ञ! तवापि नमः नमनं मया प्रयोज्यत्वं मामुपगच्छतु मामुपनमेतेति यावत् । सामर्थ्यलभ्या गमनक्रिया । उप ते नमः उप ते नमः इति पौनःपुन्यम् । आदरार्थं वाऽभ्यासः ॥

[36]उत्करे तण्डुलप्रक्षाळननिनयनम्—त्रिष्फलीक्रियमाणानामित्यनुष्टुभा ॥ त्रिष्फलीक्रियमाणानां त्रिः तण्डुलीक्रियमाणानां शुद्धीक्रियमाणानां तण्डुलानां मध्ये यो न्यङ्गः निकृष्टाङ्गः कणादिरूपः स्वल्पतरः । 'नेरनिधाने' इत्युत्तरपदान्तोदात्तत्वम् ।

रक्षसां भागधेयम् । आपस्तत्प्रवहतादितः ॥७४॥ [37]उलूखले मुसले यच्च शूर्पे । आशिश्लेष दृषदि यत्कपाले । अवप्रुषो विप्रुषस्संयजामि । विश्वे देवा हविरिदं जुषन्ताम् । यज्ञे या विप्रुषस्सन्ति बह्वीः । अग्नौ तास्सर्वास्स्विष्टास्सुहुता जुहोमि । [38]उद्यन्नद्य मित्रमहः । सपत्नान्मे अनीनशः । दि-

---

अवशिष्यते यागे अनुपयुक्तो भवति प्रमादात्, हे आपः! तत् रक्षसां भागधेयत्वेन इतः स्थानात् प्रवहतात् प्रवहत । 'तस्य तात्' इति तादादेशः । आप इति पादादित्वात् न निहन्यते । तदिति सामान्यविवक्षया नपुंसकत्वम् ॥

[37]अन्वाहार्यपचने पिष्टलेपहोमः—उलूखल इति त्रिष्टुब्भ्याम् । प्रथमा चतुष्पदा । द्वितीया द्विपदा ॥ उलूखलादिषु यत् आशिश्लेष आश्लिष्टमनुपयोग्यमभूत्, तदवयवान् अवप्रुषः विष्वक् च्युतान् विप्रुषः सर्वान् संयजामि । इदं हविः विश्वेदेवाः जुषन्तां सेवन्ताम् । किञ्च—अस्मिन् यज्ञे पिष्टसम्बन्धिन्यः या अन्या अपि विप्रुषः बह्व्यः उलूखलादिषु श्लिष्टाः ताः सर्वा अपि अग्नावेव स्विष्टाः सुहुताश्च जुहोमि शोभनयागफलप्रदा यथा भवन्ति तथा अग्नौ प्रक्षिपामि । स्वाहेति प्रदानार्थः ॥

[38] 'अगन्म सुवः'* इत्युपस्थानानन्तरं आदित्यमुपतिष्ठते—उद्य-

---

* सं. १-६-६.

वैनान् वि॒द्युता॑ ज॒हि । नि॒म्रोच॒न्नध॑रान्कृधि॥ ७५॥
[39]उ॒द्यन्न॒द्य वि नो॑ भज। पि॒ता पु॒त्रेभ्यो॒ यथा॑ । दी॒-
र्घा॒यु॒त्वस्य॑ हेशिषे । तस्य॑ नो॒ दे॑हि सूर्य । [40]उ॒द्य-

---

न्निति षड्भिरनुष्टुब्भिः ॥ हे आदित्य! मित्रमहः! दुःखात्त्रायक-तेजः! त्वं उद्यन् उदयं गच्छन् अद्यैवाहनि मम सपत्नान् शत्रून् अनीनशः नाशय । छान्दसो लुङ् । तत्क्रममाह— एनान् सपत्नान् दिवा अहनि विद्युता विद्योतमानया भासा जहि नाशय । हन्तेर्जः । अथ निम्रोचन् अस्तं गच्छन् अधरान् निकृष्टान् कृधि कुरु रात्रौ तमसैव पीडितान् कुरु। 'श्रुशृणुपृकृवृभ्यः' इति धिभावश्छान्दसः । शपो लुक् ॥

[39]उद्यन्निति ॥ अद्य अस्मिन्नेवाहनि नः अस्मभ्यं विभज धनादिकं पृथक् पृथक् देहि उद्यन् त्वं तत्रोदयकालमेवाद्य तत्समृद्धिहेतुरस्तु । यथा पिता पुत्रेभ्यो विभजति तथा अ-स्मभ्यं स्नेहेन विभज । किञ्च—दीर्घायुत्वस्यापि त्वं ईशिषे तस्य नेष्टे पिता । हशब्दस्समुच्चये । आयुषोऽन्त्यलोपश्छा-न्दसः । 'अधीगर्थदयेशां कर्मणि' इति षष्ठी । 'ईशस्से' इति इडागमः । तस्मात् हे सूर्य! तस्य दीर्घायुष्ट्वस्य अस्मभ्यं देहि । कर्मणः संप्रदानत्वात् चतुर्थ्यर्थे षष्ठी ॥

[40]उद्यन्निति ॥ हे सूर्य! मित्रमहः! उत्तरां दिवं दिवो मध्यं आरोहन् अद्यैव मे हृद्रोगं मानसीं पीडां हरिमाणं हरिततां शोकप्रभवं वैवर्ण्यं कामिलादीन्वा व्याधीन् नाशय ॥

न्नद्य मित्रमहः । आरोहन्नुत्तरां दिवम् । हृद्रोगं मम सूर्य । हरिमाणं च नाशय । [41]शुकेषु मे हरिमाणम् । रोपणाकासु दध्मसि ॥ ७६ ॥ अथो हारिद्रवेषु मे । हरिमाणं निदध्मसि । [42]उदगादयमादित्यः । विश्वेन सहसा सह । द्विषन्तं मम रन्धयन् । मो अहं द्विषतो रधम् । [43]यो नश्शपाद-

[41]शुकेष्विति ॥ हे सूर्य! मम हरिमाणं हरिततां हृद्रोगनिमित्तां शुकेषु रोपणाकासु शुकशारिकासु च दध्मसि स्थापयामः ये हरिमाणं प्रार्थयन्ते । अथो अपि हारिद्रवेषु हरितालद्रुमेषु मम हरिमाणं निदध्मसि निभृतं स्थापयामः तत्र सुखमास्तां मा मां बाधिष्ट ॥

[42]उदगादिति ॥ अयं आदित्यः विश्वेन सहसा बलेन सह उदगात् उदेति । किं कुर्वन्? मम द्विषन्तं शत्रुं रन्धयन् हिंसन् उदेति । रध हिंसायां, 'रधिजभोरचि' इति नुम् । यस्मात् अयं एवं कुर्वन् उदेति तस्मात् अस्य प्रसादात् अहं मो मैव द्विषतः रधं द्वेषम् । निग्रहक्लेशानुभवो नातःपरं मे भवितेति । उकारोऽवधारणे । रधेः पुषादित्वादङ् ॥

[43]यो न इति ॥ अस्मान् अशपतः अनाक्रोशतः यः शपात् शपेत् । लेट्याडागमः । यश्चास्मान् शपतोऽपि वा शपात् । तस्मै तदर्थं तस्मिन् समर्पयितुं तद्विनाशार्थं वा सर्वं सर्वप्रजा-

शंपतः । यश्चं नश्शपंतश्शपांत् । उषाश्च तस्मैं निम्रुक्कं । सर्वं पापꣳ समूहताम् ॥ ७७ ॥ [44]यो नं-स्सपत्नो यो रणः । मर्तोऽभिदासंति देवाः । इध्म-स्येव प्रक्षायंतः । मा तस्योच्छेषि किंश्चन । [45]अ-वंसृष्टः परापत । शरो ब्रह्मसꣳशितः । गच्छा-

सम्बन्धि पापं समूहतां संहतं कृत्वा तस्मिन्नेव स्थापयताम् । उषाश्च उदयंश्च निम्रुक्क अस्तमयन् च । यद्वा—अहश्च रात्रिश्च—अस्मत्क्रोशपापवत् सर्वस्मिन्नप्यहोरात्रे पापान्येव कुर्वन् नश्यत्विति यावत् ॥

[44]'समिद्धो अग्ने'* इत्युपसमिन्धनानन्तरं आहवनीयमुपतिष्ठते—यो न इत्यनुष्टुप् ॥ यः मर्तः अस्माकं सपत्नः शत्रुः अनर्थचिन्तकः यश्चास्माभिः सह रणः रणकारी भूत्वा अस्मान् अभिदासति उपक्षपयति । रणं करोतीति णिजन्तात् पचाद्यच् वृषादिर्द्रष्टव्यः । हे देवाः! इध्मस्य काष्ठस्येव प्रक्षायतः प्रकर्षेण क्षीयमाणस्य तस्य सम्बन्धि किंचिदपि मोच्छेषि सर्वमपि गृहधनपशुपुत्रादिकं नश्यतु । क्षै जै षै क्षये ॥

[45]अभिचरत उपवेषोद्वासने विकल्पः—अवसृष्ट इत्यनुष्टुप् ॥ हे उपवेष! मया अवसृष्टः क्षिप्तः परापत अपुनरावृत्तो गच्छ शरो भूत्वा शरणशीलः शरो हिंसकः, पचाद्यच् । ब्रह्मसंशितः ब्रह्मणा मन्त्रेण ब्रह्मणैव वा संशितः निशितीकृतः स त्वं गच्छ

* सं. १-६-६.

मित्रान्प्रविंश । मैषां कंचनोच्छिषः ॥ ७८ ॥

पतिः प्रजापंतये तपस्वी वाचा सौभंगाय प॒-
शून्मे पिन्वस्व दुर्मरायुं देवयानानग्नेऽन्तरिक्षेऽह-
मुत्तरो भूयासं प्रजापंतिरसि सर्वतश्श्रितः प्रविष्टं
देवताभिर्वाजजितं पृथिवी ह्वयतामग्निराग्नीध्राद्दू-
श्वत ससृवाꣳसꣳ हुते स्योनेनं मे संतिष्ठस्वेतः
कृधि दध्मस्यूहतामष्टौ च ॥ ६ ॥

[1]सक्षेदं पंश्य । विधंर्तरिदं पंश्य । नाकेदं पंश्य।
रमतिः पनिंष्ठा । ऋतं वरूषिष्ठम् । अमृता या-

---

इतः स्थानात् । ततो गत्वा आमित्रान् शत्रून् प्रविश्य का
त्स्न्र्येन विषयीकुरु । प्रविश्य च एषां अमित्राणां सम्बन्धि
किञ्चिदपि गृहादिकं मोच्छिषः माऽवस्थितं कार्षीः । ऌदित्वादङ् ॥

इति तैत्तिरीयब्राह्मणे तृतीये सप्तमे अच्छिद्रेषु
षष्ठोऽनुवाकः.

---

[1]देवयजनयाचनं प्रतिषिध्य देवता एवोपतिष्ठेतेत्युक्तम्, तत्रेदं यजुः—सक्षेदं इत्यादि ॥ हे सक्ष! अभिभवनशील! शत्रूणां अग्ने! । औणादिकः सहेस्सप्रत्ययः । इदं देवयजनं पश्य अनु- जानीहि विधर्तः! विविधं धारयितः! सर्वस्य वायो! त्वमपि इदं

न्याहुः । सूर्यो वरिष्ठो अक्षभिर्विभाति । अनु द्यावापृथिवी देवपुत्त्रे । दीक्षाऽसि तपसो योनिः । तपोऽसि ब्रह्मणो योनिः ॥ ७१ ॥ ब्रह्मासि क्षत्त्रस्य

पश्य । हे नाक! सुखैकस्थान! आदित्य! त्वमपि इदं पश्य यथेयं देवयजनभूमिः रमतिः रमन्तेऽस्यां देवपितृमनुष्या इति रमतिः । रमेरतिप्रत्ययः । पनिष्ठा च यथा भवति तथा यूयं पश्यत । पनायतिर्व्यवहारकर्मा च असुन्नन्तान्मत्वर्थीयः, तत इष्ठनि विन्मतोर्लुक्, 'टेः' इति टिलोपः । ऋतं यज्ञः तच्च वर्षिष्ठं वृद्धतमं यथा भवति तथा पश्यत । 'प्रियस्थिर' इत्यादिना वृद्धस्य वर्षादेशः । यानि चान्यानि प्राग्वंशसदोहविर्धानोत्तरवेदिप्रभृतीनि अमृता आहुः अमृतत्वहेतून्वा यान्याहुः तान्यपि वर्षिष्ठानि भवन्तु युष्मद्दृष्ट्या । सूर्यश्चायं वरिष्ठः उरुतमः । तेनैव सूत्रेण वरादेशः । अक्षभिः अक्षस्थानीयैः रश्मिभिः 'छन्दस्यपि दृश्यते' इत्यनङ् । विभाति विविधं भाति यथा यागद्वारेण तथा पश्यत । द्यावापृथिव्यौ च यथा तमेव भान्तमनु भातः देवपुत्त्रे देवाः पुत्त्रस्थानीयाः ययोः, तथा पश्यतेति ॥

[2]क्षौममादत्ते—दीक्षाऽसीत्यादि यजुः ॥ हे क्षौम! दीक्षा दीक्षासाधनं त्वमसि । तपसः एकस्थानादेः योनिः कारणं त्वमसि । तच्च तपस्त्वमेवासि तस्यापि कारणत्वात् । ब्रह्मणः ब्रह्मवर्चसस्य कर्मणो वा कारणमसि तच्च ब्रह्म त्वमसि । त

योनिः । क्षत्त्रमस्यृतस्य योनिः । ऋतमसि भूरारभे । श्रद्धां मनसा । दीक्षां तपसा । विश्वस्य भुवनस्याधिपत्नीम् । सर्वे कामा यजमानस्य सन्तु । [3]वातं प्राणं मनसाऽन्वारभामहे । प्रजापतिं यो भुवनस्य गोपाः । स नो मृत्योस्त्रायतां पात्वंहसः-

---

स्यापि कारणत्वात् । क्षत्त्रस्य बलस्य कारणमसि । तच्चापि क्षत्त्रं त्वमसि तस्यापि कारणत्वात् । ऋतस्य यज्ञस्य योनिः कारणं त्वमसि तच्च ऋतं त्वमेवासि । भूः भावयिता सर्वस्य यो यज्ञः । अहं वा भूः यज्ञस्य भावयिता त्वां आरभे गृह्णामि । श्रद्धां चारभे मनसा सह । दीक्षां चारभे तपसा सह । कीदृशीम्? विश्वस्य भुवनस्य भूतजातस्य अधिपत्नीं अधिकं पालयित्रीं यज्ञद्वारेण । ततश्च सम्यक् यज्ञनिर्वृत्त्या सर्वेऽपि यजमानस्य सन्तु सम्पद्यन्ताम् ॥

[3]औदूहणहोमे जपः—वातं प्राणमिति त्रिष्टुप् ॥ वातं सर्वपरिस्पन्दाश्रयं परमात्मानमेव प्राणं प्राणात्मना स्थितं मनसाऽन्वारभामहे अनुक्रमेण परिगृह्णीमः । प्रजापतिं सर्वासां प्रजानां पातारं विशेषेण रक्षितारं यः भुवनस्य भूतस्य स्थावरजङ्गमात्मकस्य गोपाः गोपायिता तं अन्वारभामहे । सः अस्मान् मृत्योः त्रायतां रक्षतु, अंहसश्च पातु । यथा वयं ज्योक् दीर्घकालं जीवाः जीवन्तः जरां अशीमहि पुरुषायुषं जीवि-

हंसः ॥ ८० ॥ ज्योग्जीवा जरामशीमहि । [4]इन्द्रं शाक्कर गायत्रीं प्रपद्ये । तां ते युनज्मि । इन्द्रं शाक्कर त्रिष्टुभं प्रपद्ये । तां ते युनज्मि । इन्द्रं शाक्कर जगतीं प्रपद्ये । तां ते युनज्मि । इन्द्रं शाक्करानुष्टुभं प्रपद्ये । तां ते युनज्मि । इन्द्रं शाक्कर पङ्क्तिं प्रपद्ये ॥ ८१ ॥ तां ते युनज्मि । [5]आऽहं दीक्षामरुहमृतस्य पत्नीम् । गायत्रेण छन्दसा ब्रह्मणा च । ऋतं

---

त्वैवायुषोऽन्तं व्याप्नुयामः । न तु मध्ये समाप्नुयामः । अश्नोतेर्लेटि शपो लुक् ॥

[4]कृष्णाजिनस्यानुदिशं मध्ये च स्पर्शने—इन्द्र शाक्करेति यजुः ॥ हे इन्द्र! शाक्कर! शक्करसंबन्धिन्! । यद्वा—शाक्करः यज्ञः तद्दानभेदेनोच्यते तत्प्रियत्वात् । कृष्णाजिनांशस्य तदभेदेन स्तुतिः । गायत्रीं प्राथम्यात् गायत्रीस्थानीयां त्वां प्रपद्ये गायत्रीवत् यज्ञसाधनभूतं वा त्वां आश्रयामि । तां च गायत्रीं त्वत्संबन्धिनि यागे युनज्मि । एवं त्रिष्टुबादिषु योज्यम् ॥

[5]उपविश्य मध्ये जपति—आऽहमिति त्रिष्टुप् ॥ यजुरेव वा । अहं ऋतस्य यज्ञस्य पत्नीं पालयित्रीं दीक्षामाऽरुहं दीक्षासाधनं चर्म आरूढोऽस्मि गायत्रेण छन्दसा ब्रह्मणा मन्त्रेण च । इदानीं ऋतं मानसं तथ्यं सत्ये वाचिके तथ्ये अधायि स्थापितम् । सत्यं च ऋते अधायि । अविनाभूते

सत्यैऽधायि। सत्यमृतेऽधायि। ऋतं च मे सत्यं चाभूताम्। ज्योतिरभूवꣳ सुवरगमम्। सुवर्गं लोकं नाकस्य पृष्ठम्। ब्रध्नस्य विष्टपमगमम्। [6]पृथिवी दीक्षा ॥ ८२॥ तयाऽग्निर्दीक्षया दीक्षितः। ययाऽग्निर्दीक्षया दीक्षितः। तया त्वा दीक्षया दीक्षयामि। अन्तरिक्षं दीक्षा। तया वायुर्दीक्षया दीक्षि-

---

द्वे अपि मयि वर्तेते ते च ऋतसत्ये मे अभूतां पुनःपुनः भवतां, भूते वा मम स्ताम्। तथा च सति अहं ज्योतिरभूवं परमं ज्योतिरेव संपत्स्ये ततश्च सुवः स्वर्गं अगमं गमिष्यामि। 'आशंसायां भूतवच्च' इति भविष्यति लुङ्। ततश्च सर्वमपि स्वर्गाख्यं लोकं गमिष्यामि। ततः नाकस्य अविद्यमानदुःखस्य आदित्यमण्डलस्य पृष्ठं उपरिभागं ब्रध्नस्य परिबृढस्य आत्मनः विष्टप स्थानं परमात्माख्यं गमिष्यामि येनैक्यं गतः परं ब्रह्म जानाति॥

[6]दण्डं प्रदाय यजमानमन्वारभ्य जपत्यध्वर्युः—पृथिवी दीक्षेत्यादि यजुः॥ पृथिवी दीक्षा दीक्षासिद्धिहेतुः। यद्वा—पृथिव्येव दीक्षा तद्धेतुत्वात्। तया पृथिव्या दीक्षात्मिकया अग्निः दीक्षितः पृथिव्यात्मिकया वा दीक्षया। अथ सः अग्निः यया दीक्षितः तयैव दीक्षया त्वा दीक्षयामि हे यजमान!। एवमन्तरिक्षद्युदिगबोषधिवाक्षु योज्यम्। पृथिवी त्वेत्यादि। हे यज-

तः । यया वायुर्दीक्षया दीक्षितः । तया त्वा दीक्षया दीक्षयामि । द्यौर्दीक्षा । तयाऽऽदित्यो दीक्षया दीक्षितः । ययाऽऽदित्यो दीक्षया दीक्षितः ॥ ८३॥ तया त्वा दीक्षया दीक्षयामि । दिशो दीक्षा । तया चन्द्रमा दीक्षया दीक्षितः । यया चन्द्रमा दीक्षया दीक्षितः । तया त्वा दीक्षया दीक्षयामि । आपो दीक्षा । तया वरुणो राजा दीक्षया दीक्षितः । यया वरुणो राजा दीक्षया दाक्षितः । तया त्वा दीक्षया दीक्षयामि । ओषधयो दीक्षा ॥ ८४॥ तया सोमो राजा दीक्षया दीक्षितः । यया सोमो राजा दीक्षया दीक्षितः । तया त्वा दीक्षया दीक्षयामि । वाग्दीक्षा । तया प्राणो दीक्षया दीक्षितः । यया प्राणो दीक्षया दीक्षितः । तया त्वा दीक्षया दीक्षयामि । पृथिवी त्वा दीक्षमाणमनुदीक्षताम् । अन्तरिक्षं त्वा दीक्षमाणमनु

---

मान! त्वां दीक्षमाणं अनु त्वया दीक्षमाणेन सह पृथिव्यपि दीक्षतां त्वत्सिद्ध्यर्थम् । तृतीयार्थेऽनोः कर्मप्रवचनीयत्वम् । एवमन्तरिक्षद्युदिगबोषधिवागृक्सामयजुस्सु द्रष्टव्यम् । अहश्चेत्यादि । अह-

दीक्षताम् । द्यौस्त्वा दीक्षमाणमनुदीक्षताम् ॥ ८५ ॥ दिशस्त्वा दीक्षमाणमनुदीक्षन्ताम् । आपस्त्वा दीक्षमाणमनुदीक्षन्ताम् । ओषधयस्त्वा दीक्षमाणमनुदीक्षन्ताम् । वाक्त्वा दीक्षमाणमनुदीक्षताम् । ऋचस्त्वा दीक्षमाणमनुदीक्षन्ताम् । सामानि त्वा दीक्षमाणमनुदीक्षन्ताम् । यजूꣳषि त्वा दीक्षमाणमनुदीक्षन्ताम् । अहश्च रात्रिश्च । कृषिश्च वृष्टिश्च । त्विषिश्चापचितिश्च ॥ ८६ ॥ आपश्चौषधयश्च । ऊर्क्च सूनृता च । तास्त्वा दीक्षमाणमनुदीक्षन्ताम् । [7]स्वे दक्षे दक्षपितेह सीद । देवानाꣳ सुम्नो महते रणाय । स्वासस्थस्तनुवा संविशस्व । पितेवैधि

---

रात्र्यभिमानिन्यो देवताश्च त्वा दीक्षमाणमनुदीक्षन्ताम् । त्विषिः दीप्तिः । अपचितिः पूजा । ऊर्क् अन्नम् । सूनृता यज्ञसंपादिनी दैवी वाक् । गतमन्यत् ॥

[7]दीक्षणीयायाः पुरस्तात् अग्न्युपस्थानम्—स्वे दक्ष इति त्रिष्टुप् ॥ हे अग्ने! स्वे आत्मीये स्थाने दक्षे प्रवृद्धे इह सीद दक्षपिता दक्षाः पातारः यजमानाः यस्य तादृशः त्वम् । देवानामपि सुम्नः सुखहेतुः महते रणाय रमणाय । छान्दसो व्यञ्जनलोपः । देवानां वा रमणाय । स्वासस्थः शोभनासन-

सूनव आसुशेवः । [8]शिवो मां शिवमाविश । सत्यं म आत्मा । श्रद्धा मेऽक्षितिः ॥ ८७॥ तपो मे प्रतिष्ठा । सवितृप्रसूता मा दिशो दीक्षयन्तु । सत्यमस्मि । [9]अहं त्वदस्मि मदसि त्वमेतत् । ममासि योनिस्तव योनिरस्मि । ममैव सन्वह हव्यान्यग्ने ! पुत्रः पित्रे लोककृज्जातवेदः । [10]आ-

स्थितः भूत्वा तनुवा शरीरेण प्रवृद्धेन संविशस्व । संविष्टश्च अस्मभ्यं सुशेवः सुसुखः आ समन्तात् एधि भव पिता सूनव इव । 'आद्युदात्तं द्व्यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् ॥

[8]शिवो मेति यजुः ॥ आदौ वा एकपदा गायत्री ॥ शिवः शान्तोपद्रवः त्वं मामपि तादृशं कृत्वा आविश । ततः त्वत्प्रसादात् मम आत्मा स्वभावः सत्यमस्तु सत्यस्वभावः भूयासम् । तथा मम क्षितिः निवासाधारः श्रद्धाऽस्तु श्रद्धायां निवसानि । तथैव मम तपः प्रतिष्ठाऽस्तु तपस्येव बद्धमूलो भवानि । एवञ्च— सवितृप्रसूताः सवित्रैवानुज्ञाता दिशः मा दीक्षयन्तु दीक्षाफलसिद्ध्या मां योजयन्तु सर्वत्र वा मां दीक्षितत्वेन ख्यापयन्तु । इदानीं अहं सत्यमेव परं ब्रह्मास्मि न मर्त्यः ॥

[9]प्रायणीयायाः पुरस्तात् आहवनीयोपस्थाने—अहं त्वमिति त्रिष्टुप् ॥ 'उद्धन्यमानम्'* इत्यत्र व्याख्याता ॥

* ब्रा. १-२-१.

जुह्वानस्सुप्रतीकः पुरस्तात् । अग्ने स्वां योनिमासीद साध्या । अस्मिन्थ्सधस्थे अध्युत्तरस्मिन् ॥ ८८ ॥ विश्वे देवा यजमानश्च सीदत । एकमिषे विष्णुस्त्वाऽन्वेतु । द्वे ऊर्जे विष्णुस्त्वाऽन्वेतु । त्रीणि व्रताय विष्णुस्त्वाऽन्वेतु । चत्वारि मायोभवाय विष्णुस्त्वाऽन्वेतु । पञ्च पशुभ्यो विष्णुस्त्वाऽन्वेतु । षड्रायस्पोषाय विष्णुस्त्वाऽन्वेतु । सप्त सप्तभ्यो हो-

[10]आजुह्वान इति च त्रिष्टुप् ॥ 'प्राचीमनु प्रदिशम्'* इत्यत्र व्याख्याता ॥

[11]सोमक्रयण्यै पादानुमन्त्रणे जपः—एकमिष इत्यादि यजुः ॥ हे सोमक्रयणि! तव एकं पदं इषे अन्नाय विष्णुः अन्वेतु यावदेकपदक्रमणं त्वामनु गच्छतु । विष्णुः व्यापकः देवः त्वा त्वां व्याप्नोतु, तस्यैवायं पदक्रमः भूयादिति भावः । इषे अन्नसमृद्ध्यै । अथ द्वे पदे यावत्पदद्वयक्रमणं विष्णुः त्वां अन्वेतु ऊर्जे रसाय क्षीरादिसमृद्ध्यै । एवं सर्वत्र । व्रताय कर्मसमृद्ध्यै । मायोभवाय प्राणसमृद्ध्यै मयोभूः वातः तत्सम्बन्धी मायोभवः । उत्सादित्वादञ् । पशुभ्यः द्विपाच्चतुष्पाल्लक्षणेभ्यः । रायस्पोषाय धनसमृद्ध्यै । सप्तभ्यः होत्राभ्यः तासां स्वकार्यसामर्थ्याय ॥

* सं. ४-६-५.

त्राभ्यो विष्णुस्त्वाऽन्वेतु। [12]सखायस्सप्तपदा अभूम। सख्यं ते गमेयम्॥ ८१॥ सख्यात्ते मा योषम्। सख्यान्मे मा योष्ठाः। [13]साऽसि सुब्रह्मण्ये। तस्यास्ते पृथिवी पादः। साऽसि सुब्रह्मण्ये। तस्यास्तेऽन्तरिक्षं पादः। साऽसि सुब्रह्मण्ये। तस्यास्ते द्यौः

[12]सप्तमे पदे जपः—सखाय इति यजुः॥ आदौ वा एकपदा गायत्री॥ हे सोमक्रयणि! मम सखा त्वं भव। समानख्यानः जनः सखा। यस्मात्त्वं सप्तपदा मया सह सप्तपदानि त्वया क्रान्तानि अतः सप्तपदपरिच्छिन्नकालवर्तिना संबन्धेन त्वं सखा अस्माकं भव। वयं च सप्तपदाः तव सखायः अभूम। अतः इदानीं सर्वकालं तव सख्यं गमेयं गम्यासं अनेन साप्तपदीनेन सख्येन हेतुना। 'सख्युर्यः' इति यः। गमेः लिङ्याशिष्यङ्। किञ्च—तव सख्यात् सार्वकालिकात् अहं मा योषं पृथक्सिद्धो मा भूवम्। त्वमपि मदीयात् सख्यात् मा योष्ठाः मा वियुक्ता भूः। यौतेर्लुङि सिचि वृद्ध्यभावः छान्दसः, आत्मनेपदं च॥

[13]सुब्रह्मण्यायामाहूयमानायां जपति—साऽसीति यजुः॥ 'सुब्रह्मण्योम्'* इत्यादिः निगदविशेषः। सुब्रह्मण्या सुब्रह्मण्यशब्दवत्त्वात्। हे सुब्रह्मण्ये! सैव पङ्क्तिः पञ्चपदा त्वमसि। यस्यायं पाङ्क्तः यज्ञः तस्याः पङ्क्त्यात्मिकायाः तव पृथिव्ये-

* आ. १-१२.

पार्दः । साऽसि सुब्रह्मण्ये । तस्यास्ते दिशः पार्दः॥ १०॥ परोरजास्ते पञ्चमः पार्दः । सा न इषमूर्जं धुक्ष्व । तेजं इन्द्रियम् । ब्रह्मवर्चसमन्नाद्यम् । [14]विमिमे त्वा पर्यस्वतीम् । देवानां धेनुꣳ सुदुघामनपस्फुरन्तीम् । इन्द्रस्सोमं पिबतु । क्षेमो अस्तु नः । [15]इमां नराः कृणुत वेदिमेत्य । वसुमतीꣳ

व प्रथमः पादः । अन्तरिक्षं द्वितीयः । द्यौः तृतीयः । दिशः चतुर्थः । तव पञ्चमः पादः परोरजाः रजांसि लोकाः तमांसि भूतानि एभ्यः परस्तात् य लोक आदित्यात्मा स पञ्चमः । पारस्करादित्वात् सुट्, राजदन्तादित्वात्परनिपातः । तादृशी त्वं अस्मभ्यं इडादीनि धुक्ष्व देहि ॥

[14]महावेदिं विमिमीते—विमिम इत्यनुष्टुप् । ह्रसितचतुर्था, विवृद्धद्वितीया ॥ हे वेदे! त्वां विमिमे त्रिविधं परिच्छिनद्मि पयस्वतीं हविर्भिः अन्नवतीं वृष्टिहेतुं वा यागद्वारेण, देवानां धेनुं धेनुस्थानीयां धेनुवत् प्रीणयित्रीं हविषामाधारत्वात्, सुदुघां सुष्ठु कामानां दोग्ध्रीम् । 'दुहः कप् घश्च' इति कप् । अनपस्फुरन्तीं प्रातिकूल्यमप्रतिपद्यमानाम् । कैमर्थक्येनेत्याह—अस्माकं सोमं इन्द्रः पिबतु । तेन अस्माकं क्षेमः रक्षाऽस्तु। इन्द्रो वा अस्माकं क्षेमकार्यस्तु ॥

[15]वेदिकरणे जपति—इमां नरा इति । प्रैष इत्यन्ये । इयमतिजगती पञ्चपदा ॥ 'वर्ष्मन् दिवो नाभा पृथिव्याः' इत्येकः

रुद्रवंतीमादित्यवंतीम् ॥ ११ ॥ वर्ष्मन्दिवः । नाभा पृथिव्याः । यथाऽयं यजमानो न रिष्येत् । देवस्य सवितुस्सवे । [16]चतुश्शिखण्डा युवतिस्सुपेशाः । घृतप्रतीका भुवनस्य मध्ये । तस्याꣳ सुपर्णावधि यौ निविष्टौ । तयोर्देवानामधि भागधे-

---

पादः । हे नराः! मनुष्याः इमां वेदिं आगत्य कृणुत । कीदृशीं? वस्वादिभिः तद्वतीं वर्ष्मन् दिवः द्युलोकस्य उच्छ्रायहेतौ द्युलोकादप्युच्छ्रिते वाऽस्मिन् स्थाने पृथिव्याः नाभा नाभिस्थानीये नहनस्थाने वा पृथिव्याः । सप्तम्या डादेशः । यथाऽयं यजमानः न रिष्येत् न हीयेत फलात्तथा कृणुत । कस्त्वमस्मान्नियोक्तुमिति चेत् न ब्रूमः अस्मन्नियोगात्कृणुतेति । अपि तु देवस्य सवितुः सर्वस्य प्रेरयितुः सवे अनुज्ञायां वर्तमानाः कृणुत । स एव युष्मान् कारयतीति । 'सवजनौ छन्दसि' इति सवशब्दोऽन्तोदात्तः ॥

[16]कृतां वेदिमनुमन्त्रयते—चतुश्शिखण्डेति त्रिष्टुभा ॥ पूर्वार्धर्चः 'उद्धन्यमानम्'* इत्यत्र व्याख्यातः । तस्यां तादृश्यां वेद्यां अधि उपरि यौ निविष्टौ सुपर्णौ शोभनपतनौ अग्निश्च मध्यमश्च पर्जन्यः तदधीनप्रवृत्तित्वात् द्वयोः । ततः हवींषि देवेभ्यो वहति कश्चित् । तस्यां हवींषि देवार्थमावहत्यन्यः वृष्ट्या तदुत्पादकत्वात् । तदेवाह—एवं तयोः अधिरूढं देवानां भागधेयम् । एवं वेद्या एव स्तुतिः ॥

---

* ब्रा. १-२-१.

यम् । [17]अप जन्यं भयं नुद । अप चक्राणि वर्तय । गृहꣳ सोमस्य गच्छतम् । [18]न वा उवेतन्म्रियसे न रिष्यसि । देवाꣳ इदेषि पथिभिस्सुगेभिः । यत्र यन्ति सुकृतो नापि दुष्कृतः । तत्र त्वा देवस्सविता दधातु ॥ १२॥

ब्रह्मणो योनिरꣳहंसः पङ्क्तिं प्रपद्ये दीक्षा यया ऽऽदित्यो दीक्षया दीक्षितस्तया त्वा दीक्षया दीक्षयाम्योषधयो दीक्षा द्यौस्त्वा दीक्षमाणमनु दीक्षतामपचितिश्चाक्षितिरुत्तरस्मिन्गमेयं दिशः पादे आदित्यवर्तीं वर्तय पश्चं च ॥७॥

[17]अन्तर्वेद्यां लोष्टमादाय बहिः क्षिपति—अप जन्यामिति गायत्र्या ॥ हे हविर्धान! जन्यं जनेषु सर्वेषु भवं भयं अपनुद नाशय लोष्टनिरसनद्वारेण । चक्राणि परबलानि च अपवर्तय अपगमय । प्रत्येकमुच्यते । एवं युवाभ्यां कृते कर्मसिद्ध्यथ इदानीं अविघ्नेन युवां सोमस्य गृहं गच्छतम् ॥

[18]संज्ञपने परावर्तते यजमानः—न वा उवेतदिति जगत्या ॥ प्रथमोऽर्धर्चः 'ये वाजिनम्'* इत्यत्र व्याख्यातः। यत्र सुकृत एव यन्ति न दुष्कृतोऽपि, तत्र स्थाने देवः सविता त्वा दधातु स्थापयतु ॥

इति तैत्तिरीयब्राह्मणे तृतीये सप्तमे अच्छिद्रेषु सप्तमोऽनुवाकः.

* सं. ४-६-९.

[1]यद॒स्य पा॒रे रज॑सः । शु॒क्रं ज्योति॒रजा॑यत । तन्नः॑ पर्ष॒दति॒ द्विषः॑ । अग्ने॑ वैश्वानर॒ स्वाहा॑ । यस्मा॑द्भी॒षाऽवा॑शिष्ठाः । ततो॑ नो॒ अभ॑यं कृधि । प्र॒जाभ्य॒स्सर्वा॑भ्यो मृड । नमो॑ रु॒द्राय॑ मी॒ढुषे॑ ।

[1]पशोरुपाकृतस्य वाशनादिषु होमः । तत्र सर्वस्यादौ— यदस्य पारे इति ॥ ततः 'यस्माद्भीषा' इत्यादयो नैमित्तिक-विशेषाः मध्ये भवन्ति । ततः 'य इदमकः' इति सर्वत्रान्ते भवति । तत्र प्रथमास्तिस्रोऽनुष्टुभः । 'उदुस्र' इति त्रिष्टुप् । ततः 'यस्मात्' इति पङ्क्तिः चतुष्पदा । प्रथमः पादो विवृद्धः । त्रेपनपला-यनसंज्ञानेषु तिस्रोऽनुष्टुभ एके । 'य इदमकः' इति प्रथमं यजुरेके । तत्र 'यदस्य पारे' इति व्याख्याता 'समितम्'* इत्यत्र ॥

[2]यस्मादित्यादिः वाशने शब्दने होमः ॥ हे पशो! **यस्मात्** दुःखात् कारणात् त्वं **भीषा** भीत्या इत्थम्भूतस्सन् **अवाशिष्ठाः** वाशितमकृथाः । वाशृ शब्दे, दैवादिकः लुङ्यडागमः । त-स्माद्धेतोः अस्माकं **अभयं कृधि** भयं माकृथा इति यावत् । यद्वा—भयहेतोः मरणाद्भीतः त्वं अवाशिष्ठाः, तत एव मरणा-दस्माकं यथा भयं न भवति तथा कुरु । किञ्च—**प्रजाभ्यः सर्वाभ्योऽ**पि स्वस्यै परस्यै च **मृड** सुखय । कर्मणस्संप्रदानत्वाच्च-तुर्थी । **रुद्राय** च युष्माकं स्वामिने **मीढुषे** सेक्त्रे युष्मान् उत्पादि तवते **नमः** स प्रसन्नो भवत्विति । 'मीढ्वान्' इति मिहेर्निपात्यते ॥

* सं. ४-२-५.

[3]यस्मा॑द्भी॒षा न्यष॑दः । ततो॑ नो॒ अभ॑यं कृधि॥१३ प्र॒जाभ्य॒स्सर्वा॑भ्यो मृड । नमो॑ रु॒द्राय॑ मी॒ढुषे॑ । [4]उदु॑स्र तिष्ठ॒ प्रति॑तिष्ठ॒ मा रि॑षः । मेमं य॒ज्ञं यज॑मानं च रीरिषः । सु॒व॒र्गे लो॒के यज॑मान॒ꣳ हि धे॒हि । शं न॑ एधि द्वि॒पदे॒ शं चतु॑ष्पदे । [5]यस्मा॑द्भी॒षाऽवे॑पिष्ठाः प॒लायि॑ष्ठास्स॒मज्ञा॑स्थाः । ततो॑ नो॒ अभ॑यं कृधि । प्र॒जाभ्य॒स्सर्वा॑भ्यो मृड । नमो॑ रु॒-

---

[3]अथ यस्मादिति निषदने शयने ॥ न्यषदः निषण्णवानसि । लृदित्वादङ् । समानमन्यत् ॥

[4]उदुस्रेति निपातने मैत्रावरुणेनोत्थापयति ॥ हे उस्र! गौः उत्तिष्ठ सर्वपशूपलक्षणं उस्रग्रहणम् । प्रतितिष्ठ प्रतिष्ठितो भव मा रिषः मा नशः । इमं च यज्ञं मा रीरिषः मा नीनशः । त्वय्यनुत्थिते हि वैगुण्यात् सर्वं नष्टं स्यात्, तस्मात् शीघ्रमुत्थाय त्वं सम्यक् यागनिर्वृत्त्या सुवर्गे लोके यजमानं धेहि स्थापय । अस्माकं च द्विपदे चतुष्पदे च शं सुखहेतुः एधि भव ॥

[5]यस्मादिति समानं पूर्वेण ॥ अवेपिष्ठाः अकम्पिष्ठाः पलायिष्ठाः संज्ञपनस्थानादपागमः । समज्ञास्थाः अकामतः संज्ञप्तोऽभूः संज्ञपनमन्तरेण भीत्यैवामृथा इति यावत् । अन्तर्भावितण्यर्थात् जानातेः लुङि कर्मण्यात्मनेपदम् । यद्वा—संज्ञानं

द्राय॑ मी॒ढुषे॑ ॥ १४ ॥ [6]य इ॒दमक॑ः । तस्मै॒ नम॑ः । तस्मै॒ स्वाहा॑ । [7]न वा उ॑वे॒तन्म्रि॑यसे । आशा॑नां त्वा॒ विश्वा॒ आशा॑ः । [8]य॒ज्ञस्य॒ हि स्थ ऋ॒त्विया॑ । इन्द्रा॑ग्नी॒ चेत॑नस्य च । हु॒ता॒हु॒तस्य॑ तृप्यतम् । अहु॑तस्य हु॒तस्य॑ च । हु॒तस्य॒ चाहु॑तस्य च । अहु॑-

उत्कण्ठा । 'संप्रतिभ्याम्' इति व्यत्ययेन आध्यानेऽप्यात्मनेपदम्। दुःखातिशयेन मात्राद्युत्कण्ठापरीतोऽभूः । समानमन्यत् ॥

[6]य इदमिति ॥ इदं वाशितादिकं यः अकः अकार्षीत् अचीकरत् तस्मै देवाय नमः पशूनां स्वामिने स्वाहुतं चेदमस्तु तस्मै देवाय ॥

[7]अथ मृतं पशुं अप्सु अभ्यवहरति—न वा उवेतदिति तिसृभिः ॥ 'ये वाजिनम्'[1] इत्यत्र प्रथमा त्रिष्टुप् व्याख्याता। अस्याः प्रतीकग्रहणम् । 'आशानां त्वाशापालेभ्यः' 'विश्वा आशा मधुना' इति चानुष्टुप्त्रिष्टुभौ 'पुनर्नः'[2] इत्यत्र व्याख्याते। प्रतीकग्रहणमत्रानयोः ॥

[8]हुताहुतयोर्मिश्रणे—यज्ञस्य हि इत्याद्याः तिस्रोऽनुष्टुभः । तृतीयया तस्य भक्षणम् । हे इन्द्राग्नी! युवां हि यज्ञस्य ऋत्वियौ प्राप्तकालौ स्थः । अस्मिन्काले युवां स्वामिनौ इति यावत् । चेतनस्य सर्वस्य च स्वामिनौ स्थः । हि यस्मादेवं तस्मात् हुताहुतस्य मिश्रितस्य संयुक्तस्य तृप्यतम् । सु-

[1] सं. ४-६-९. [2] ब्रा. २-५-३.

तस्य हुतस्य च । इन्द्राग्नी अस्य सोमस्य । वीतं पिबतं जुषेथाम् । मा यजमानं तमोऽविदत् । मर्त्विजो मो इमाः प्रजाः । मा यस्सोममिमं पिबात् । सꣳसृष्टमुभयं कृतम् ॥ १५॥

कृधि मीढुषेऽहुतस्य च सप्त च ॥ ८॥

हितार्थयोगे षष्ठीसमासप्रतिषेधेन षष्ठी ज्ञापिता । मिश्रितपानेन तृप्तौ भवतं मिश्रितरसानुभवेन । अथाहुतस्य तृप्यतं, हुतस्य च अवयवरसास्वादनेन च तृप्यतमित्यर्थः । किञ्च—हुतस्य सम्बन्धिनः अहुतस्य हुतसंसर्गेणाहुतावयवस्य यो रसविशेषः तस्य च तृप्यतम् । अहुतस्य च संबन्धिनो हुतस्य अहुतसंसर्गेण हुतावयवस्य यो रसविशेषः तस्य च तृप्यतम् । एवमुक्तप्रकारेण बहुप्रकाररसस्यास्य सोमस्य वीतं कामयेथां पिबतं जुषेथां प्रीयेथां च । कर्मणि षष्ठी । मा यजमानमिति । यजमानं तमः मतिविपर्यासः तन्निमितं पापं वा माऽविदत् मा लब्ध । विन्दतेर्लुङि लृदित्वादङ् । ऋत्विजश्च मा तमोऽविदत् । मैव च इमाः प्रजाः तमोऽविदत् कर्मभ्रेषनिमित्तं पापम् । अथ यश्च इमं सोमं पिबात् तमपि मा तमोऽविदत् । कीदृशं सोमं? उभयमपि हुतमहुतं च संसृष्टं कृतम् । ईदृशं पिबन्तमपि मा तमोऽविदत् ॥

इति तैत्तिरीयब्राह्मणे तृतीये सप्तमे अच्छिद्रेषु अष्टमोऽनुवाकः.

[1]अनागसस्त्वा वयम् । इन्द्रेण प्रेषिता उपे । वायुष्टे अस्त्वꣳशभूः । मित्रस्ते अस्त्वꣳशभूः । वरुणस्ते अस्त्वꣳशभूः । [2]अपां क्षया ऋतस्य गर्भाः । भुवनस्य गोपाश्श्येना अतिथयः । पर्वतानां ककुभः प्रयुतो न पातारः । वल्गुनेन्द्रꣳ ह्वयत ।

---

[1]उपांशोरभिषवमन्त्रः—अनागस इति पङ्क्तिः ॥ हे सोम! वयमनागसः अनपराधाः । तवापराधः, अस्माकं नापराधः, यस्मात् वयं इन्द्रेण प्रेषिताः त्वां उपेम । उपसर्गसामर्थ्यात् क्रियाविशेषलाभः । अत एव वाय्वादयोऽपि तवांशभुवः रसांशस्य भावयितारो भवन्तु । अस्माकं साहाय्यकं प्रतिपद्यन्ताम् । भवतेः ण्यन्तात् क्विपि 'बहुलमन्यत्रापि' इति णिलुक् ॥

[2]खरे सन्नान् ग्राव्णोऽभिमृशति—अपां क्षया इति यजुषा ॥ हे ग्रावाणः अपां क्षयाः उदकस्य गृहभूताः यागद्वारेण वृष्टिहेतुत्वात् । ऋतस्य यज्ञस्य गर्भाः प्रधानसाधनभूताः । भुवनस्य भूतजातस्य गोपाः गोपायितारः । श्येनाः शंसनीयाः क्षिप्रकारिणः । अतिथयः अतिथिवत् सर्वस्य प्रियाः । अत्र 'सुबामन्त्रिते' इति पराङ्गवद्भावात् अपां क्षया इत्यादेः षष्ठ्यामन्त्रितसमुदायस्यामन्त्रितस्वरः । तत्र पूर्वपूर्वामन्त्रितस्य अविद्यमानतया षाष्ठिकमाद्युदात्तत्वम् । सत्यपि सामानाधिकरण्ये विशेषपरत्वाभावात् निषेधाभावः । यद्वा—'विभाषितं विशेषवचने' इति अविद्यमानवत्त्वमेव । शंसनीयाः अतिथय इति विशेष-

**घोषेणामीवाँश्चातयत ॥ १६ ॥ युक्तास्स्थ वहत । [3]देवा ग्रावाण इन्दुरिन्द्र इत्यवादिषुः । एन्द्रमचुच्यवुः परमस्याः परावतः । आऽस्मात्सधस्थात् ।**

---

वाचित्वात्तत्र निघात एव प्रवर्तते । **पर्वतानां ककुभः** प्रधानभूताः । पूर्ववत्स्वरः । **न पातारः** न पातयितारः । 'न भ्राणनपात्' इति नलोपाभावः । ईदृशाः यूयं **प्रयुतः** प्रकर्षेण मिश्रीभूताः सोमेन यूयं, **वग्नुना** श्रुतिसुखेन शब्देन **इन्द्रं** **ह्वयत** आह्वयत । किञ्च—**घोषेण** महता शब्देन **अमीवान्** रोगान् **चातयत** । किञ्च—**युक्ता** नियुक्ता अवहिता वा इह कर्मणि **स्थ** तस्मात् यज्ञमिमं **वहत** सम्यङ्निर्वर्तयत ॥

[3]माध्यन्दिनीयाभिषवानन्तरं ग्राव्णोऽनुमोदते—**देवा** इति यजुषा ॥ एते **ग्रावाण** एव **इन्दुः** चन्द्रश्चेति **देवाः** इन्द्रादयः **अवादिषुः** वदन्ति । इन्दुः सोमः । यद्वा—देवाः व्यवहर्तारः ऋत्विजः यज्ञविदः । ते एवं अवादिषुः—ग्रावाण एव सोमः तदधीनत्वात् अभिषवस्य । स एव अभिषुत्यः सोमः **इन्द्रः** तदधीनस्थितित्वात् तस्य । इन्द्रश्च सर्वलोकस्थितिहेतुरिति । अतः तं **इन्द्रं परमस्याः परावतः** महतो दूरात् द्युलोकतः **आऽचुच्यवुः** आच्यावयन्ति आगमयन्ति ग्रावाणः निजेन शब्देन । 'उपसर्गाच्छन्दसि' इति वतिः, च्यवतेरन्तर्भावितण्यर्थात् छान्दसे लुङि, 'बहुलं छन्दसि' इति शपः श्लुः । 'जुसि च' इति गुणः । परस्मैपदम् । किञ्च—**अस्मात् सधस्थात्**

ओरोरन्तरिक्षात् । आ सुभूतमसुषवुः । ब्रह्मवर्चसं म आऽसुषवुः । समरे रक्षाꣳस्यवधिषुः । अपहतं ब्रह्मज्यस्य । [1]वाक्च त्वा मनश्च श्रीणीताम् ॥ १७॥ प्राणश्च त्वाऽपानश्च श्रीणीताम् । चक्षुश्च त्वा श्रोत्रं च श्रीणीताम् । दक्षश्च त्वा बलं च श्रीणीताम् । ओजश्च त्वा सहश्च श्रीणीताम् । आयुश्च त्वा जरा च श्री-

सहस्थानं सधस्थः पृथिवी, ततश्च आचुच्यवुरित्येव । उरोः विस्तीर्णात् अन्तरिक्षाच्च इन्द्र आऽचुच्यवुः ग्रावाणः । त इमे सुभूतं शोभनजन्मानं सोमं आऽसुषवुः इन्द्रार्थम् । पूर्ववद्गुणः । मम च तेनैव हेतुना ब्रह्मवर्चसं आऽसुषवुः अनुजानन्तु यज्ञद्वारेण । समरे शत्रुकलहे च रक्षांसि अवधिषुः घ्नन्तु । अपि च ब्रह्मज्यस्य ब्राह्मणानां मन्त्राणां वा जेतुः दुरात्मनः रक्षःपतेरपि अपहतं अपहतिरस्तु । भावे निष्ठा । बलं वा तस्य अपहतमस्तु । ज्या वयोहानौ, 'आतोऽनुपसर्गे कः' ॥

[1]दधि श्रीणाति—वाक्च त्वेति यजुषा ॥ वाक्च मनश्च त्वां श्रीणीतां सेवतां, पचेतां वा यागसाधनभावेन नित्यसहभूते त्वयि वर्तेतामित्यर्थः । एवं सर्वत्र । दक्षः उत्साहः । ओजः दीप्तिः । सहः अभिभवितृत्वम् । शृतोऽसि पक्वोऽसि स्वभावत एव कर्मसु च शृतंकृतः निर्वर्तितशोभनपाकः । 'यश्शृतस्स सदेवः'* इति

*सं. २-६-३.

णीताम्। आत्मा च त्वा तनूश्च श्रीणीताम्। शृतो-ऽसि शृतंकृतः। शृताय त्वा शृतेभ्यस्त्वा। [5]यमि-न्द्रमाहुर्वरुणं यमाहुः। यं मित्रमाहुर्यमु सत्यमा-हुः ॥ १८ ॥ यो देवानां देवतमस्तपोजाः। तस्मै त्वा तेभ्यस्त्वा। [6]मयि त्यदिन्द्रियं महत्। मयि

---

दर्शनात्। हे दधिपदार्थ! तं त्वां अहं इदानीं श्रीणामि शृताय श्राणाय पाकविशेषलाभाय। कीदृशाय? शृतेभ्यः ये नाम केचिद्दर्थाः शृताः तेभ्योऽप्यतिशयेन शृतत्वाय त्वां श्रीणामि॥

[5]वषट्कृते जुहोति—यमिन्द्रमित्युपरिष्टाज्ज्योतिषा त्रिष्टुभा ॥ यमेवाग्निमाहुः इन्द्रादीनपि, तदायत्तस्थितिकत्वात्तेषाम्। सत्यं परं ब्रह्म। यश्च देवानां दीप्तिमतां मध्ये देवतमः दीप्तिम-त्तमः तपोजाः बलप्रभवः, नियमसंपाद्यो वा। 'जन सन' इति विट्, 'विड्वनोः' इत्यात्वम्। तस्मै अग्नये तेभ्यश्च इन्द्रादिभ्यः त्वां जुहोमीति शेषः ॥

[6]यजमानो भक्षयति—मयि त्यदिति गायत्र्या, त्रिष्टुगित्यष्टचा च ॥ त्यत् एतत महत् इन्द्रियं मयि धायि धीयताम्। कर्मणि छान्दसो लुङ् 'बहुलं छन्दस्यमाङ्योगेऽपि' इत्यडभावः। एवं दक्षादिषु योज्यम्। दक्षः उत्साहः। क्रतुः प्रज्ञा। उत्तर-क्रतुर्वा। सुवीर्यं शोभनवीर्यं बलम् ॥

दक्षो मयि क्रतुः । मयि धायि सुवीर्यम् । [7]त्रिशुग्घर्मो विभातु मे । आकूत्या मनसा सह । विराजा ज्योतिषा सह । यज्ञेन पयसा सह । तस्य दोहमशीमहि ॥ ११ ॥ तस्य सुम्नमशीमहि । तस्य भक्षमशीमहि । वाग्जुषाणा सोमस्य तृप्यतु । [8]मित्रो जनान्प्रसमित्र । [9]यस्मान्न जातः परो अ-

---

[7]त्रिशुगिति ॥ त्रिशुक् अग्निविद्युदादित्यात्मना त्रेधा भिन्नदीप्तिः **घर्मः** अग्निः मदर्थं **विभातु** मदुपकारायैव त्रिधा भिन्नो दीप्यताम् । मम **आकूत्या मनसा** च **सह,** ते च तद्दीप्त्या दीप्येताम् । **विराजा** अन्नेन **ज्योतिषा** तेजसा सह दीप्यताम् । **यज्ञेन पयसा** क्षीरादिना उदकेन वा **सह** दीप्यताम् । **तस्य** अग्नेः **दोहं** वृष्ट्यादिफलसमृद्धिं वयं **अशीमहि** । **सुम्नं** सुखं च तन्निमित्तं **अशीमहि** । **भक्षं** च सर्वं तस्य प्रसादात् **अशीमहि** व्याप्नुयाम । लिङि छान्दसो विकरणलोपः । **वाक्** मदीया **जुषाणा** प्रीयमाणा **सोमस्य** सोमसदृशस्यास्य **तृप्यतु** ॥

[8]नाभिं प्रत्यभिमृशति—**मित्रो** जनान्यातयतीति, **प्रसमित्र मर्तः** इति च द्वाभ्यां त्रिष्टुब्भ्याम् । 'त्वमग्ने बृहद्वयः'* इत्यत्र च एते व्याख्याते, इह प्रतीकग्रहणमनयोः ॥

[9]षोडश्युपस्थाने—**यस्मान्न जात** इति त्रिष्टुप् ॥ **यस्मात् परः** प्रकृष्टो **जातः** जन्मवान् अन्यो नास्ति । **यश्च भुवनानि** भूत-

---

* सं. ३-४-११.

न्यो अस्ति । य आविवेश भुवनानि विश्वा । प्र-
जापतिः प्रजया संविदानः । त्रीणि ज्योतीꣳषि
सचते स षोडशी । [10]एष ब्रह्मा य ऋत्वियः। इन्द्रो
नाम श्रुतो गणे ॥१००॥ [11]प्र ते महे विदथेऽशꣳ-
सिषꣳ हरी । य ऋत्वियः प्र ते वन्वे । वनुषो ह-

---

जातानि सर्वाणि आविवेश स्थित्यर्थं अनुप्रविवेश । सः प्रजापतिः प्रजया सर्वया संविदानः ऐकमत्यं प्रतिपाद्यमानः सर्वदा अनुकूलस्वभावः त्रीणि ज्योतींषि अग्न्यादीनि सचते समवैति तदात्मना द्योत्यते । स एव प्रजापतिरेव षोडशी ग्रहः । यद्वा—त्रीणि ज्योतींषि ज्योतिष्मन्ति सवनानि एष षोडशिग्रहः सचते त्रिष्वपि सवनेषु ग्रहणात् ॥

[10]एष ब्रह्मेति द्विपदा गायत्री ॥ एष ग्रहः स्वयं ब्रह्मा ऋत्वियः प्राप्तकालः । छन्दसि घस् । इन्द्रो नाम गणे सर्वस्मिन् श्रुतः ख्यातः ॥

[11]प्रते मह इति पुरउष्णिक् ॥ महे महते तुभ्यं त्वदर्थम् । यद्वा—ते तव महतः हरी अश्वः । विदथे यज्ञे प्राशंसिषं प्रशंसामि । छान्दसो लुङ् । किमर्थमित्याह—यस्तव ऋत्वियः प्राप्तकालः मदः तं हर्यतं प्रेप्सितं मदम् । हर्य विक्रान्तौ, औणादिकोऽतच् । तव वनुषः संभजनीयस्य तादृशं मदं प्र वन्वे प्रकर्षेण संभजामि । वन षण संभक्तौ ॥

र्यतं मदंम् । [12]इन्द्रो नामं घृतं न यः। हरिंभिश्चारु सेचंते । श्रुतो गुण आ त्वां विशन्तु । हरिंवर्प- सं गिरंः । [13]इन्द्राधिंपतेऽधिंपतिस्त्वं देवानांमसि। अधिंपतिं माम् । आयुंष्मन्तं वर्चस्वन्तं मनुष्येषु कुरु ॥१०१॥ [14]इन्द्रंश्च सम्राड्वरुंणश्च राजा । तौ ते भक्षं चंक्रतुरग्रं एतम् । तयोरनु भक्षं भक्षया-

---

[12]इन्द्रो नाम इत्यनुष्टुप् ॥ 'जुष्टी नरः'* इत्यत्र व्याख्यातप्राया। घृतं न घृतमिव चारुः प्रियतमोपायः देवः इन्द्रो नाममात्रेण घृतवत्प्रियः हरिभिः अश्वैः चारु शोभनं सेचते समवैति। गणे च सर्वत्र श्रुतः ख्यातः यस्त्वं, तं त्वां हरिवर्पसं ह- रिरूपं मनोहररूपं वा गिरः अस्मदीयाः स्तुतयः आविशन्तु प्राप्नुवन्तु ॥

[13]षोडशिनं जुहोति—इन्द्रेति यजुषा ॥ हे इन्द्र! अधिपते! सर्वस्याधिकं पालयितः! त्वं हि देवानामप्यधिपतिरसि। सः त्वं मामपि मनुष्येषु अधिपतित्वादिगुणकं कुरु ॥

[14]भक्षयति इन्द्रश्चेति पङ्क्त्या ॥ सम्राट् सङ्गतदीप्तिः इन्द्रश्च वरुणश्च राजा दीप्तिमन्तौ देवौ ते भक्षं अग्रे प्रथमं चक्रतुः हे षोडशिन्! त्वां आदौ भक्षितवन्तौ । तयोरनु पश्चादहमपि तव भक्षं भक्षयामि । वाक् जुषाणेति गतम् ॥

---

* ब्रा. २-४-३.

**मि । वाग्जुंषाणा सोमस्य तृप्यतु । [5]प्रजापंतिर्विश्वकर्मा । तस्य मनौ देवं यज्ञेनं राध्यासम् । अर्थेगा अस्य जहितः । अवसानंपतेऽवसानं मे विन्द । [16]नमो रुद्रायं वास्तोष्पतंये । आयंने वि-**

---

[15]विहारे बहिर्वा यदि भयमागच्छेत् तदा होमः—प्रजापतिरिति विपरीता पङ्क्तिः ॥ **प्रजापतिः** प्रजानां पाता **विश्वकर्मा** विश्वं करणीयं यस्य, स एव विश्वं करोति शुभमशुभं च यस्मात् । **तस्य देवं** देवनशीलं **मनः यज्ञेन राध्यासं** तोषयामि अहं **अर्थेगाः** प्रयोजनार्थं तमेव गच्छन् भजमानः । गमेः 'जन सन' इति विट् । 'विड्वनोः' इत्यात्वम् । 'तत्पुरुषे कृति बहुळम्' इत्यलुक् । कः पुनः सोऽर्थ इति चेत्— **अस्य जहितः**, कर्मणि षष्ठी, इमं भयहेतुं **जहितः** स देवः त्यजतु नाशयतु । जहातेर्लेटि वचनव्यत्ययः, 'जहातेश्च' इतीत्वम् । यद्वा—यः प्रजापतिः तस्य मनस्स्थानीयः सदा मनसि स्थितोऽग्निः देवः तं यज्ञेन राध्यासम् । तौ चास्य जहितः त्यजताम् । यद्वा—अस्येत्यस्य विशेषणं अर्थेगा इति । अर्थनिमित्तमागच्छतः अस्य दुरात्मनः भयहेतोरिति षष्ठ्येकवचने रूपम् । इदानीं प्रत्यक्षवदाह—हे प्रजापते! **अवसानपते!** यागसमाप्तेः पातः! अविघ्नेन संपादयितः! मम कर्मणः अविघ्नेन **अवसानं** समाप्तिं **विन्द** लम्भय ॥

[16]अवभृथमवैष्यन् जुहोति—**नमो रुद्रायेति** पङ्क्त्या ॥ **नमः रुद्राय** देवाय **वास्तोष्पतये** गृहग्रामादिस्वामिने **आयने** वास्तौ

द्रवणे ॥ १०२॥ उद्याने यत्परायणे । आवर्तने विवर्तने । यो गोपायति तꣳ हुवे । [17]यान्यपामित्यान्यप्रतीत्तान्यस्मि । यमस्य बलिना चरामि । इहैव सन्तः प्रति तद्यातयामः । जीवा जीवेभ्यो

---

वस्तुं आगमने प्रवेशने विद्रवणे वास्तोरन्यत्र गमने उद्याने उत्थाने अन्यत्र वासार्थं वास्तोः त्यागे परायणे मृत्वा वास्तोः त्यागे च यत् यः गोपायति । 'सुपां सुलुक्' इति लुक् । यश्च आवर्तने गत्वा पुनरागमने विवर्तने वास्तौ विविधं वर्तने च वास्तव्यान् गोपायति रक्षति तं हुवे आह्वयामि आराधयितुं तस्मै वा इदं जुहोमि । शपो लुक् ॥

[17]द्वितीयस्सक्तुहोमः—यानीति त्रिष्टुभा ॥ यानि ऋणानि अपामित्यानि अपमातव्यानि अपाकर्तव्यानि । मयतेः छान्दसः क्यप् । 'मयतेरिदन्यतरस्याम्' इति ल्यपि वर्तते । अप्रतीत्तानि अप्रत्यर्पितानि अनपाकृतानि । ददातेः निष्ठायां 'अच उपसर्गात्तः' इति तत्वम्, 'दस्ति' इति दीर्घत्वम् । एवं ईदृशानि यानि ऋणानि अहमस्मि ऋणैः तद्वानस्मि, ऋणातिशयप्रतिपादनार्थं ताच्छब्द्यम् । यथा 'यददीव्यन्नृणमहं बभूव'* इति । तेन यमस्य बलिना यमस्य करस्थानीयैः तैः मृतेन अवश्यप्रत्यर्पणीयैः चरामि । तत् ऋणं सर्वं, वचनव्यत्ययो वा, तानि ऋणानि इहैव जन्मनि सन्तः वर्तमानाः प्रतियातयामः

---

* आ. २-४.

निर्हराम एनत् । [18]अनृणा अस्मिन्ननृणाः पर॑स्मिन् । तृतीये लोके अनृणास्स्याम । ये देवया॑नां उत पितृयाणाः ॥ १०३ ॥ सर्वान्पथो अनृणा आक्षीयेम । [19]इदमू नु श्रेयोऽवसानमागन्म । शिवे नो द्यावापृथिवी उभे इमे । गोमद्धनवदश्ववदूर्जे-

अपाकुर्मः । पुत्रपौत्रैरपि ऋणं देयमिति प्रतिपादयितुं प्रतियातने बहुवचनम् । कथमित्याह—जीवाः जीवन्त एव वयं जीवेभ्यः जीवद्भ्य एवोत्तमर्णेभ्यः एनत् आत्तं ऋणं सर्वं निर्हरामः नियतमपाकुर्मः अनेन होमेनेति भावः ॥

[18]तृतीयं जुहोति—अनृणा इति त्रिष्टुभा ॥ अस्मिन् मनुष्यलोके परस्मिन् प्रेत्य भोक्तव्ये लोके तृतीये द्युलोके च अनृणाः स्याम । ततश्च ये देवयानाः पन्थानः यैः देवाः प्राप्यन्ते ये च पितृयाणाः तान् सर्वानपि अनृणाः आक्षीयेम आभिमुख्येन प्रतिबन्धरहिताः गच्छेम ॥

[19]उदवसानीयाया देवयजनमध्यवस्यति—इदमिति त्रिष्टुभा ॥ श्रेयः प्रशस्यतरमिदमवसानं यज्ञगृहं नूनं आगन्म आगताः स्म । ततः इदानीं उभे अपि इमे द्यावापृथिव्यौ शिवे सुखहेतू भवतः यागस्य सम्यङ्निर्वृत्त्या । ततश्च गोमत् बहुभिः गोभिस्तद्वत् । धनवत् भूरिधनं, अश्ववत् बह्वश्वं, ऊर्जस्वत् बह्वन्नं, यथातथा सुवीराः शोभनापत्याः वयं वीरैः पुरुषैस्सह अनुसञ्चरेम अनुक्रमेण द्यावापृथिव्योः वर्तेमहि ॥

स्वत् । सुवीरा वीरैरनु संचरेम । [20]अर्कः पवित्रꣳ रजसो विमानः । पुनाति देवानां भुवनानि विश्वा । द्यावापृथिवी पयसा संविदाने । घृतं दुहाते अमृतं प्रपीने । [21]पवित्रमर्को रजसो विमानः । पुनाति देवानां भुवनानि विश्वा । सुवर्ज्योतिर्यशो महत् । अशीमहि गाधमुत प्रतिष्ठाम् ॥ १०४ ॥

चातयत श्रीणीताꣳ सत्यमाहुरशीमहि गणे कुरु विद्रवणे पितृयाणा अर्को रजसो विमानस्त्रीणि च ॥ ९

[20]महाव्रते फलके कूर्चे वाऽधिरुह्याध्वर्युः शस्त्रं प्रतिगृणाति—अर्कः पवित्रं इति त्रिष्टुभा ॥ अर्कः आदित्यः देवानां मध्ये पवित्रं पावनः । रजसः अन्तरिक्षस्य उदकस्य वा निर्माता दापयिता वा । विश्वानि भुवनानि भूतजातानि पुनाति शोधयति । ततः ते पूते द्यावापृथिव्यौ पयसा उदकेन संविदाने ऐकमत्यं गते परस्परं वा संविदाने पयसा इत्थंभूते घृतं उदकं यागद्वारेण दत्तः प्रजाभ्यः ॥

[21]पवित्रमर्क इति मध्येज्योतिस्त्रिष्टुप् ॥ अर्धर्चो गतः । सुवः स्वर्गं ज्योतिः ज्योतिष्मत् यशः अन्नं च महत् तत्प्रसादात् अशीमहि व्याप्नुयाम । उत अपि च गाधं सुस्थिरां प्रतिष्ठां अशीमहि । गाध्यते प्रतिष्ठीयते अस्मिन्निति गाधः, गाधृ प्रतिष्ठायाम् ॥

इति तैत्तिरीय ब्राह्मणे तृतीये सप्तमे
अच्छिद्रेषु नवमोऽनुवाकः.

[1]उदस्तांफ्सीथ्सविता मित्रो अर्यमा । सर्वान्-
मित्रानवधीद्युगेन । बृहन्तं मामकरद्वीरवन्तम् ।
रथन्तरे श्रयस्व स्वाहा पृथिव्याम् । [2]वामदेव्ये
श्रयस्व स्वाहाऽन्तरिक्षे । [3]बृहति श्रयस्व स्वाहा

[1]हविर्धाने पतिते आहवनीये जुहोति—उदस्तांप्सीदिति त्रिप-
दया विराजा यजुरन्तया ॥ उदस्तांप्सीत् उत्तभ्नोतु । स्तन्भेः
छान्दसे लुङि हलन्तलक्षणा वृद्धिः, 'खरि च' इति चर्त्वम् ।
सविता मित्रः अर्यमा च हविर्धानमुत्तब्धं करोतु उत्तम्भनेन
स्थापयतु सर्वांश्च अस्माकं अमित्रान् शत्रून् अवधीत् । हन्ते-
र्लुङि वधादेशः । युगेन योगेन युगपदिति यावत् । यद्वा—
युगेन कालेन वधयोग्येन । अथ मां च बृहन्तं महान्तं यज्ञस्य
अवैगुण्येन अकरत् करोतु । 'कृमृदृरुहिभ्यश्छन्दसि' इति अङ् ।
वीरवन्तं च करोतु । रथन्तरे सामनि तदर्थं श्रयस्व यथा
न पतितः स्याः पृथिव्यां च श्रयस्व । पृथिव्यां हि स्थितः
न ततः अन्यत्र पतति तदर्थं इदं स्वाहुतमस्तु ॥

[2]अनसि पतिते होत्रिये जुहोति—वामदेव्य इति ॥ 'उदस्तांप्सीत्'
इत्यादिः सर्वशेषोऽनुषज्यते । तामनुद्रुत्य अनेन जुहोति । वामदेव्ये
सामनि श्रयस्व ततश्चान्तरिक्ष इव विचलितं वर्तस्व स्वाहुतं चास्तु ॥

[3]आग्नीध्रीये पतिते आग्नीध्रीय एव जुहोति—बृहतीति ॥
बृहति साम्नि श्रयस्व दिवीव सुस्थिरं वर्तस्व, स्वाहुतं चास्तु ।
पूर्ववत् ऋचोऽनुषङ्गः ॥

दि॒वि । [4]बृ॒ह॒ता त्वोप॑स्तभ्नोमि । [5]आ त्वा॑ द॒दे॒ य॒शसे॑ वी॒र्या॑य च । अ॒स्मास्व॑घ्नियां यू॒यं द॑धा॒थेन्द्रि॒यं पय॑ः । [6]यस्ते॑ द्र॒प्सो यस्त॑ उ॒द॒र्षः ॥ १०५ ॥ दैव्य॑ः के॒तुर्विश्वं॒ भुव॑नमावि॒वेश॑ । स नः॑ पा॒ह्यरि॑-

[4]पतितमुत्थापयति—बृहता त्वेति यजुषा ॥ बृहता साम्ना त्वां उपस्तभ्नोमि उत्तम्भयामि । 'स्तन्भुस्तुन्भु' इति श्नुप्रत्ययः ॥

[5]यदि वपा हविरवदानं वा स्कन्देत् तदादत्ते—आ त्वा दद इति द्विपदयोष्णिहा । त्वां आददे गृह्णामि यशसे वीर्याय च हे हविः! । हे अघ्नियाः! गावः! यूयमपि अस्मासु इन्द्रियं पयश्च दधाथ स्थापयत स्कन्दनात् भ्रष्टं पुनरवस्थापयत । यशः अन्नं, पयः क्षीरादि ॥

[6]अथ स्कन्नं स्रुच्यवदाय स्कन्नप्रायश्चित्तं जुहोति—यस्त इति अनुष्टुप्प्रकारेण ॥ दैव्य इति प्रथमपादान्तः । हे हविः! तव यः द्रप्सः सूक्ष्मः अवयवः यश्च उदर्षः उद्भूतोऽवयवः । ऋषी गतौ, घञ् । यश्च तव दैव्यः देवसम्बन्धी केतुः प्रज्ञातोऽप्रस्कन्नः पात्रस्थोऽवयवः स सर्वः विश्वं भुवनं आविवेश विश्वस्य स्थितये हविष्ट्वेन वर्तते । यद्वा—तव द्रप्सः उदर्षश्च दैव्यहेतुभूतास्कन्नस्वभावेन विश्वं भुवनं आविवेश । स त्वं अस्मान् निर्दोषान् पाहि रक्ष । अरिष्ट्यै अहिंसायै स्वाहुतं चास्तु ॥

ष्ट्यै स्वाहा । [7]अनु मा सर्वो यज्ञोऽयमेतु । विश्वे देवा मरुतस्सामार्कः । आप्रियश्छन्दांसि निविदो यजूंषि । अस्यै पृथिव्यै यद्यज्ञियम् । [8]प्रजापतेर्वर्तनिमनु वर्तस्व । अनु वीरैरनु राध्याम गोभिः । अन्वश्वैरनु सर्वैरु पुष्टैः । अनु प्रजयाऽन्विन्द्रियेण ॥१०६॥ देवा नो यज्ञमृजुधा नयन्तु ।

---

[7]व्रतस्य सतः आर्त्विज्यात् निर्हरणे होमः—अनु मेति त्रिष्टुप् ॥ सर्वोऽप्ययं यज्ञः मां अन्वेतु अनुगच्छतु माऽन्यं गमत् । विश्वेदेवादयश्च मामेव अनुयन्तु । सर्वे निगदसिद्धाः । अर्कः ऋक् । निविदः शस्त्रावयवाः यच्चान्यदस्याः पृथिव्यास्सम्बन्धि यज्ञियं यज्ञार्हं तदपि मामन्वेतु मयैव अविगुणः यज्ञः निर्वर्त्यताम् ॥

[8]यद्येककपालः स्कन्देत् परि वा वर्तेत यथास्थानं तं कल्पयति—प्रजापतेरिति शक्वर्या पञ्चपदया ॥ हे एककपाल! प्रजापतेर्वर्तनिं मार्गं नित्यं अविकलं पन्थानं अनुवर्तस्व अनुगम्य वर्तस्व स्वस्थाने तिष्ठेति यावत् । ततः वयमपि वीरैः पुत्रादिभिः गोभिः अश्वैः सर्वैश्चान्यैरपि धनैः पुष्टैः समृद्धैः प्रजया इन्द्रियेण च अनुराध्याम अनुक्रमेण ऋद्धा भूयास्म। देवाश्च अस्मद्यज्ञं ऋजुधा ऋजुना अविगुणेन मार्गेण नयन्तु। छान्दसो धाप्रत्ययः ॥

**[9]प्रति क्षत्रे प्रति तिष्ठामि राष्ट्रे । प्रत्यश्वेषु प्रतितिष्ठामि गोषु । प्रति प्रजायां प्रति तिष्ठामि भव्ये । [10]विश्वमन्याऽभि वावृधे । तदन्यस्यामधिश्रितम् । दिवे च विश्वकर्मणे । पृथिव्यै चाकरं नमः । [11]अस्कान्द्यौः पृथिवीम् । अस्कानृषभो युवा गाः ॥ १०७**

[9]प्रति क्षत्र इति त्रिपदा विराट् ॥ एवं त्वयि आर्जवं भजमाने प्रतिष्ठिते सति अहमपि क्षत्रादिषु **प्रतितिष्ठामि** । भव्यं प्रशस्तभवनं स्वर्गादि । 'भव्यगेय' इति निपात्यते ॥

[10]अनुमन्त्रयते—**विश्वमित्यनुष्टुभा** ॥ **विश्वं** भूतजातं **अन्या** एका द्यौः **अभिवावृधे** आभिमुख्येन वर्धयति वृष्ट्यादिना । अथ **तत्** तया अभिवर्धितं **अन्यस्यां** एकस्यां पृथिव्यां **अधिश्रितं** उपरिश्रितं उपरिस्थितम् । अत एव च **विश्वकर्मणे** कृत्स्नजगदभिवृद्धिकारिण्यै **दिवे च** जगतः धारयित्र्यै **पृथिव्यै नमः अकरं** करोमि । 'कृमृदृ' इत्यङ् । 'एककपालं वै प्रतितिष्ठन्तम्'* इत्यादि ब्राह्मणं भवति ॥

[11]होममन्त्रः—**अस्कानित्यनुष्टुप्** ॥ **द्यौः** वृष्ट्या **पृथिवीं अस्कान्** अनुप्राप्नोति वृष्ट्या तुल्यमिदं स्कन्नं नात्र वृथा स्कन्नमिति । तथा च **युवा वृषभो गाः अस्कान्** रेतोधानाय अनुगच्छति तत्तुल्यमिदम् । स्कन्देः छान्दसे लुङि हलन्तलक्षणायां वृद्धौ 'बहुळं छन्दसि' इतीडभावे हल्ङ्यादिसंयोगान्तलोपौ । इमानि विश्वानि भुवनानि अनेन स्कन्नानि अनुगतानि

* ब्रा. १-६-१.

स्कन्नेमा विश्वा भुवना । स्कन्नो यज्ञः प्रजनयतु । [12]अस्कानजनि प्राजनि । आ स्कन्नाज्जायते वृषा । स्कन्नात्प्रजनिषीमहि । [13]ये देवा येषामिदं भागधेयं बभूव । येषां प्रयाजा उतानूयाजाः । इन्द्रज्येष्ठेभ्यो वरुणराजभ्यः । अग्निहोतृभ्यो देवेभ्य-

---

हविष्ट्वस्यानपगमात् । यज्ञश्च अनेन स्कन्नः अनुगतः प्रजनयतु प्रजा उत्पादयतु हविष्ट्वस्यानपगमात् ॥

[12]अस्कानजनीति गायत्री ॥ यदिदं हविः अस्कान् स्कन्दतिस्म तदिदं हविः अजनि जायते हविष्ट्वमेवास्य संपद्यते नात्र स्कन्नदोषः । प्राजनि प्राजायते प्रजया पशुभिश्च । 'दीपजनबुध' इति कर्तरि चिण् । तिङः परत्वान् मध्यमस्य निघाताभावः, प्रथमस्य तु अपदात्परत्वात् । यस्मात् एवं स्कन्नत्वं गुणायैव, अतः अस्मात् स्कन्नात् हेतोः वृषा सेक्ता आजायते सर्वतः सेचनसमर्थो भवति । वयं च अस्मात् स्कन्नाद्धेतोः प्रजानिषीमहि प्रजया पशुभिश्च समृद्धाः भूयास्म॥

[13]यज्ञस्य विघ्नकरे भये उपजाते सर्वयागद्रव्याणि द्रोणकलशे गृहीत्वा होममन्त्रः—ये देवा इति त्रिष्टुप् ॥ ये देवाः द्युलोकवासिनः येषां देवानां इदं सर्वं पुरोडाशादि भागधेयं बभूव सङ्कल्पितं भवति, येषां च प्रयाजाः अनूयाजाश्च भागधेयं, तेभ्यो देवेभ्यः इन्द्रज्येष्ठेभ्यः इन्द्रप्रधानेभ्यः वरुण-

**स्स्वाहा । [14]उत त्या नो दिवा मतिः ॥१०८॥ अदितिरूत्याऽऽगमत् । सा शन्ताची मयस्करत् । अप स्रिधः । [15]उत त्या दैव्या भिषजा । शं नस्करतो अश्विना । यूयातामस्मद्रपः । अप स्रिधः ।**

---

राजभ्यः वरुणो राजा येषां तेभ्यः अग्निहोतृभ्यः अग्नि-र्होता आह्वाता येषां तेभ्यश्च स्वाहेति । 'ऋतं छन्दसि' इति कबभावः ॥

[14]चमसे ऊर्ध्वपात्रे वा अभक्षिते उन्नीय स्तोत्रैरुपाकृते अयं प्रायश्चित्तहोमः—उत त्या न इति तिस्रः उष्णिहः ॥ उत अपि-नाम त्या सैषा दिवा द्योतनवती अदितिः अखण्डनीया नः अ-स्माकं मतिः ऊत्या रक्षणेन निमित्तेन आगमत् आगच्छतु । सा तादृशी मतिः शन्ताची अनिष्टशमनप्रापिका अस्माकं मयः सुखं करत् करोतु । पूर्ववदङ् । स्रिधः कर्मविस्मरण-निमित्तं पापं अस्माकं शोषणं शरीरादिक्षयं अपकरत् अपाकरोतु अपगमयतु । स्रिवु शोषणे, असुनि छान्दसं रूपम् ॥

[15]उत त्येति ॥ अपि च त्या ते दैव्यौ भिषजौ अश्विनौ । सर्वत्र 'सुपां सुलुक्' इत्याकारः । तौ नः अस्माकं शं सुखं करतः कुरुताम् । लेटि व्यत्ययेन शप् । किञ्च—अस्मत् अस्मत्तः रपः विस्मरणनिमित्तं पापं यूयातां पृथक्कुरुताम् । अप स्रिध इति गतम् ॥

[16]शम॒ग्निर॒ग्निभिं॑स्करत् । शं न॑स्तपतु॒ सूर्यः॑ । शं वातो॑ वात्वर॒पाः ॥ १०९ ॥ अप॒ स्रिधः॑ । [17]तदि॑-त्प॒दं न विचि॑केत वि॒द्वान् । यन्मृ॒तः पुन॑र॒प्येति॑

---

[16]शमग्निरित्यादि ॥ अयं अग्निः आहवनीय अन्यैः अ-ग्निभिः सहास्माकं सुखं करोतु । सूर्यश्च अस्माकं शं यथा तथा तपतु । वातश्च शं यथा तथा वातु अरपाः अदुः-खहेतुः । अप स्रिधः इति गतम् ॥

[17]मार्जयित्वा तं चमसेषु प्रक्षिपति—तदित्पदमिति त्रिष्टुभा॥ तदित् तदेव पदं जीवस्य प्राप्यं स्थानं भवितुमर्हति । किम्? यत् यत्र मृतोपि गतप्राणः जीवः पुनः अनन्तरमेव जीवान् प्राणान् अप्येति अनुप्राप्नोति तत्प्राणवशीकरणमेतत् पदम् । तस्मात् यः विद्वान् आत्मोपासकः परलोकवादी वा इतः अ-न्यत्पदं वीप्सते नूनं सः न विचिकेत न विविच्य जानाति तेन न सम्यङ्निरूपितम् । तस्माद्धित्वा प्राणान् यदि पदान्तरं प्राप्यते, न यावज्जीवः स्यात् । जीव प्राणधारणे, इति स्मर-णात् । 'न जीवो म्रियते'* इति श्रुतेः, मृङ् प्राणत्यागे, इति स्मरणात् । तस्मात्तदेव पदमिति । कित ज्ञाने, छान्दसो लिट् । इदानीममृतत्वमस्य कथमिति चोद्यावसरे वाचोयुक्ति-निबन्धनप्रदर्शनेन मृतत्वाभावं समर्थयते—त्रिवृत् सात्त्विक्याद्याः तिस्रो वृत्तयः यस्य स त्रिवृत् धर्मार्थकामलक्षणप्रवृत्तित्रयवान्वा। त्रिचक्रादित्वादुत्तरपदान्तोदात्तत्वम् । भुवनस्य भूतचक्रस्य गर्भः

---

* छान्दोग्यम्, ६-११-३.

**जीवान् । त्रिवृद्यद्भुवनस्य रथवृत् । जीवो गर्भो न मृतस्स जीवात् । [18]प्रत्यस्मै पिपीषते । विश्वानि विदुषे भर । अरं गमाय जग्मवे । अपश्चाद्द-**

मध्यवर्ती देही **रथवृत्** संसारलक्षणेन रथेन रंहणेन वर्तमानः परवशो नीयमानः तेन वा वृतः छादितः। यथोक्तम्—'तस्मिन् हंसो भ्राम्यते ब्रह्मचक्रे'* इति। तस्मादयं छादितवद्वर्तमानोपि **जीव एव न मृतः** स हि सर्वदा **जीवात्** जीवति। स एव जीवतीति व्यपदेशमर्हतीति। लेट्याडागमः। तद्वृत्तवापि न काचित क्षतिः, अविकृत एव सर्वकालमसीति। अथवा—तदेवात्मीयं पदमनुष्ठेयं कर्म विद्वानपि सन् न त्रिचिकेत न विजानाति यथा संसारे छादितशक्तिः जीवः आत्मानं न जानाति मृत्वा च पुनर्जीवत्वं प्रतिपद्यते तस्य कदाचिदपि न क्षतिः। स हि सर्वदा जीव एव न मृतः। एवं त्वमपीति॥

[18]अथ तस्य होममन्त्रः—**प्रत्यस्मा** इत्यनुष्टुप् ॥ **अस्मै** यजमानाय **पिपीषते** पातुमिच्छते। पीङ् पाने, प्यायतुमिच्छते वा। छान्दसः पीभावः। **विदुषे** ज्ञानवते **विश्वानि** कर्माणि **प्रतिभर** अविकलानि प्रत्यावर्तय अनेन होमेन। **अरंगमाय** पर्याप्तं अन्यूनमेव कर्मणां गन्त्रे। पचाद्यच्। **जग्मवे** पुनःपुनः कर्मणां गन्त्रे। यङ्लुगन्तादौणादिके कुप्रत्यये उपधालोपः। नुगभावश्च। यद्वा—गमनशीलाय कर्मानुष्ठानशीलाय। ताच्छीलिकः कुप्रत्ययः। छान्दसं द्विर्वचनमाद्युदात्तत्वं च। अप-

* श्वेताश्वतरोपनिषत्, १-६.

घृने नरे । [19]इन्दुरिन्द्रमवागात् । इन्दोरिन्द्रोऽपात्। तस्य त इन्दविन्द्रपीतस्य मधुमतः। उपहूतस्योपहूतो भक्षयामि ॥११०॥

उदरूष इन्द्रियेण गा मतिरंरपा अंगात्त्रीणि च ॥१०॥

आहघृने पश्चाद्दाहरहिताय तन्निमित्तस्य कर्मभ्रेषस्याभावात् । 'अन्येभ्योपि दृश्यते' इति दहेः क्वनिपि छान्दसो वर्णविकारः। यद्वा—दघ पालने, अपश्चात्पालयित्रे प्रजानाम्, अपि तु सर्वदा पालयित्रे । यद्वा—प्रथमपालयित्रे न तु पालयित्रन्तरदर्शनोत्तरकालं, पालयितॄणां प्रथमायेत्यर्थः । यद्वा—प्रागेव प्रार्थनायाः पालयित्रे न तु पश्चात् । स एव क्वनिप् । नरे नेत्रे प्रजानाम् । नॄ नये, पचाद्यच्, विभक्तिव्यत्ययः । नृशब्दस्य वा चतुर्थ्येकवचने व्यत्ययेन गुणः । वृषादिर्द्रष्टव्यः ॥

[19]अनवृष्टस्य भक्षणमन्त्रः—इन्दुरिति यजुरन्ता एकपदा त्रिष्टुप् ॥ इन्दुः सोमः अयं अववृष्टः इन्द्रं अनववृष्टं अवागात् अवैतु अवगच्छतु ज्ञात्वा तमेवानुप्रविशतु । तस्य च इन्दोः सोमस्य इन्द्रोऽपात् । कर्मणि षष्ठी । तं इन्द्रः अपिबत् । तस्मात् हे इन्दो! तस्य तादृशस्य तव। इन्द्रपीतस्येत्यादि । व्याख्यातम् * ॥

इति तैत्तिरीये ब्राह्मणे तृतीये सप्तमे अच्छिद्रेषु दशमोऽनुवाकः.

---

* सं. ३-२-६.

[1]ब्रह्म॑ प्रति॒ष्ठा मन॑सो॒ ब्रह्म॑ वा॒चः । ब्रह्म॑ य॒ज्ञाना॑ꣳ ह॒विषा॒माज्य॑स्य । अति॑रिक्तं॒ कर्म॑णो॒ यच्च॒ ही॒नम् । य॒ज्ञः पर्वा॑णि प्रति॒रन्ने॑ति क॒ल्पय॑न् । स्वाहा॑कृ॒ताऽऽहु॑तिरेतु दे॒वान् । [2]आश्रा॑वितम॒त्याश्रा॑वितम् । वष॑ट्कृतम॒त्यनू॑क्तं च य॒ज्ञे । अति॑रिक्तं॒ कर्म॑णो॒ यच्च॒ ही॒नम् । य॒ज्ञः पर्वा॑णि प्रति॒रन्ने॑ति क॒-

[1]अथ दर्शपूर्णमासयोः प्रायश्चित्तहोमा नित्याः—**ब्रह्म प्रतिष्ठेति** द्वे पञ्चपदे शक्वर्यौ ॥ **ब्रह्म** आत्मा कर्मणामपादानम् । यथा—'यत एव यज्ञं प्रयुङ्क्ते । तदेनं प्रतिष्ठापयति'* इति । ईश्वरस्य क्रियाशक्तिः वाताख्यः विश्वोपादानभूतः परमात्मा । तदेव ब्रह्म **प्रतिष्ठा मनसः, वाचः, यज्ञानां,** तत्साधनानां च **हविषां, आज्यस्य** च । तस्मात् अस्य **कर्मणो यदतिरिक्तं** मात्राधिक्येन कृतं **यच्च हीनं** मात्राया ऊनं तत्सर्वं **यज्ञः** यष्टव्यं तदेव ब्रह्म **कल्पयन्** गुणीकुर्वन् फलसाधनसमर्थं कुर्वन् **पर्वाणि** यागकालांश्च **प्रतिरन्** सम्यङ्निर्वर्तितयागतया वर्धयन् अशून्यं कुर्वन् **एति** अविच्छेदेन वर्तते । तदर्थं इयं **स्वाहाकृता** स्वाहाकारेण संस्कृता **आहुतिः देवान् एतु** गच्छतु तेषां स्थितये भवतु ॥

[2]**आश्रावितमिति** ॥ अस्मिन् **यज्ञे** यत् **आश्रावितं** सम्यङ्निर्वर्तिताश्रावणं **अत्याश्रावितं** असमीचीनाश्रावणं **वषट्कृतं** स-

* ब्रा. ३-३-९.

ल्पयन्॑ । स्वाहा॑कृताऽऽहु॑तिरेतु दे॒वान् ॥ १११ ॥
[3]यद्वो॑ देवा अतिपा॒दया॑नि । वा॒चा चि॒त्प्रय॑तं देव॒-
हे॑ड॑नम् । अरा॒यो अ॒स्मा॑ँ अ॒भिदु॑च्छु॒नाय॑ते । अ॒-
न्यत्रा॒स्मन्म॑रुत॒स्तन्निधे॑तन । [4]त॒तं म॒ आप॒स्तदु॒

---

म्यक् वषट्कारेण दत्तं अत्यनूक्तं असमीचीनानुवचनम् । अति-
रिक्तमित्यादि । समानम् । समीचीनकरणमत्र कल्पनं वेदितव्यम्॥

[3]यद्व इति जगती त्रिष्टुब्वा ॥ हे देवाः! मरुतः! युष्माकं
संबन्धि यत् कर्म अहं अतिपादयानि अतिपन्नं यथाकामं
करोमि । अकरणं अन्यथा करणं चातिपत्तिः । कामचारक
रणे लोट् । वाचा चित् वाचा च, सामर्थ्यात् मनसा चेति ग-
म्यते । प्रयतं प्रकर्षेण यतं उपरतम् । यम उपरमे । अत
एव देवहेडनं देवानां क्रोधनम् । यच्चास्मान् अरायः निर्ध-
नान् । 'ऊडिदम्' इति विभक्तेरुदात्तत्वं रैशब्दादपि भवति ।
अभिदुच्छुनायते आभिमुख्येन नाशयति अस्मान्वा अभिलक्ष्य
दुच्छुनेवाचरति । दुच्छुना दारिद्र्यम्, तदिवास्मान् पीडयतीति
यावत् । ईदृशं अतिपन्नं कर्म तत् अस्मत्तः अन्यत्र निधेतन
स्थापयत तत्फलं अस्मासु मा भूत् । दधातेर्लिङि 'लिङ्याशिष्यङ्'
थासुट्, 'अतो येयः' 'तप्तनप्तनथनाश्च' इति तनादेशः ॥

[4]ततं म इति जगती ॥ मम आपः कर्म ततं विस्तीर्णं
यावज्जीवसंकल्पात् । तदेव इदानीं अनेन होमेन पुनः तायते
भूयोपि विस्तीर्यते । किञ्च—स्वादिष्ठा स्वादुतमा धीतिः

तायते पुनः। स्वादिष्ठा धीतिरुचथाय शस्यते। अयꣳ समुद्र उत विश्वभेषजः। स्वाहाकृतस्य समु तृप्णुतर्भुवः। उद्वयं तमसस्परि। उदु त्यं चित्रम्॥ ११२॥ इमं मे वरुण तत्त्वा यामि। त्वं नो अग्ने स त्वं नो अग्ने। त्वमग्ने अयाऽसि प्रजापते।

धारकं हविः। संज्ञायां क्तिन्। उचथाय कर्मणे हविषः समवायाधारत्वात् उचथः। उच समवाये, औणादिकः थप्रत्ययः। यत्र समवैति तदर्थं स्वादिष्ठं भूत्वा अनेन होमेन हविः शस्यते, प्रशस्ततां भजते। यस्मादेवं तस्मात् अयं समुद्रः समुद्रोपममिदं दीयमानं आज्यं, अपि च विश्वभेषजः सर्वानिष्टशमनहेतुः, न तु घृतान्तरवत् कतिपयरोगभेषजम्। तस्य तादृशस्य स्वाहाकृतस्य स्वाहाकारेण प्रदत्तस्य समु तृप्णुत, उकारोऽवधारणे, संतृप्यत, यस्य णुत्वम्। हे ऋभुवः! देवाः!। छान्दसः उवङादेशः। सुहितार्थयोगे षष्ठीसमासप्रतिषेधेन षष्ठ्याः ज्ञापितत्वात् स्वाहाकृतस्येति षष्ठी। उद्वयं तमस इत्यादि नवानां प्रतीका गृह्यन्ते। व्याख्याताश्च ग्रहकाण्डादिषु मन्त्राः। उद्वयं तमसस्परि पश्यन्तः,* उदु त्यं जातवेदसं,† चित्रं देवानां,† इमं मे वरुण श्रुधि,‡ तत्त्वा यामि ब्रह्मणा,‡ त्वं नो अग्ने वरुणस्य,¶ स त्वंनो अग्नेऽवमः,¶ त्वमग्ने अयाऽस्ययासन्,§ प्रजापते न त्वत्**॥

* सं. ४-१-७. ‡ सं. २-१-११. § मं. १-४-१६.
† सं. १-४-४३. ¶ सं. २-५-१२. ** सं. १-८-१४.

[5]इमं जीवेभ्यः परिधिं दधामि । मैषां नु गादपरो अर्धमेतम् । शतं जीवन्तु शरदः पुरूचीः । तिरो मृत्युं दधतां पर्वतेन । [6]इष्टेभ्यस्स्वाहा वषडनिष्टेभ्यस्स्वाहा । भेषजं दुरिष्ट्यै स्वाहा निष्कृत्यै

[5]इमं जीवेभ्य इति त्रिष्टुप् ॥ जीवेभ्यः जीवनार्थं जीवानां वा परिधिं सर्वतः धातारं रक्षकं दधामि स्थापयामि एतद्धो मात्मकम् । अतः एषां अनेन होमेन रक्षितानां जीवानां मध्ये अपरः कश्चिदपि मा गात् मा गमत् । नु इति क्षिप्रार्थे । एतमर्धं पुरुषायुषस्य प्रथमार्धं पञ्चाशद्वर्षलक्षणं आयुष्ट्वेन मा गात् तावत्यायुषि मा मृतेति यावत् । यद्वा—एतमर्धं ऋद्धिं ऋद्धिहेतुम् । वर्णव्यत्ययो वा एतमर्धम् । प्रथमे पक्षे छान्दसमाद्युदात्तत्वम् । किन्तु शतं जीवन्तु शरदः संवत्सरान् पुरूचीः पुरून् बहून्वा नानाविधान् भोगान् अञ्चतीति, नकाराकारयोः लुप्तयोः 'चौ' इति दीर्घत्वम् । अत एव मृत्युं तिरोदधतां विनष्टं कुरुताम् पर्वतेन पर्वणि क्रियमाणेन अनेन होमेन । 'पर्वमरुद्भ्यां तन्' इति तन्प्रत्ययः । पर्वतवदभेद्येन वा ॥

[6]इष्टेभ्य इत्यादीनि यजूंषि ॥ इष्टेभ्यः सम्यग्यागेनाराधितेभ्यः अग्न्यादिभ्यः स्वाहुतमिदमस्तु तृप्त्यतिशयाय । वषडनिष्टेभ्यः ये अनिष्टा वषट्कारेण अनाराधिताः देवाः तेभ्यः इदमेव वषट्कृतं हविरस्तु तदर्थं इदं स्वाहुतं करोमि । भेषजं अनिष्टकारित्वशमनं दुरिष्ट्यै दुरिष्ट्याः प्रमादादिना विगुणा इष्टिः दुरिष्टिः

स्वाहा । दौराध्यैं स्वाहा दैवीभ्यस्तनूभ्यस्स्वाहा ॥ ११३ ॥ ऋद्ध्यै स्वाहा समृद्ध्यै स्वाहा । [7]यत इन्द्र भयामहे । ततो नो अभयं कृधि । मघवञ्छग्धि तव तन्न ऊतये । विद्विषो विमृधो जहि । [8]स्वस्तिदा विशस्पतिः । वृत्रहा विमृधो वशी । वृषेन्द्रः पुर

---

तस्याः स्विष्टं स्वाहुतमिदमस्तु । निष्कृतिः प्रायश्चित्तार्थो होमादिः । तत्सामर्थ्यार्थं स्वाहुतमिदमस्तु ॥

[7]यत इन्द्रेति पथ्या बृहती ॥ हे इन्द्र! यतः मृत्युरोगचोरादेर्हेतोः वयं भयामहे बिभीमः । व्यत्ययेन शप्, आत्मनेपदं च । ततः नः अस्माकं यथा भयं न भवति तथा कृधि कुरु । शपो लुकि, 'श्रुशृणुपृकृवृभ्यः' इति धिभावः । हे मघवन्! तव या ऊतिः रक्षा अनितरसाधारणी तत् तस्याः नः अस्मदर्थं तां रक्षां कर्तुं त्वमेव शग्धि शक्तो वर्तस्व । छान्दसो वर्तमाने लोट्, प्राक्काले वा । त्वदीयरक्षाशक्तेः प्रदर्शनकालोऽयम् । 'ऊतियूति' इति क्तिनः उदात्तत्वम् । किञ्च— विद्विषः शत्रून् विमृधः सङ्ग्रामांश्च जहि विनाशय । 'हन्तेर्जः'॥

[8]स्वस्तिदा इत्यनुष्टुप् ॥ स्वस्तिदा अविनाशस्य दाता विशः विश्वस्याः प्रजायाः पतिः वृत्रहा पापादेर्हन्ता विमृधः विनिवारितसङ्ग्रामः । छान्दसस्समासान्तः, विभक्तिव्यत्ययो वा । वशी जितेन्द्रियः वृषा सेक्ता ईदृशः इन्द्रः अस्माकं पुरः एतु

एतु नः । स्वस्तिदा अभयंकरः । [9]आभिर्गीर्भिर्यदतो न ऊनम् ॥ ११४॥ आप्यायय हरिवो वर्धमानः । यदा स्तोतृभ्यो महि गोत्रा रुजासि । भूयिष्ठभाजो अध ते स्याम । [10]अनाज्ञातं यदाज्ञातम् । यज्ञस्य क्रियते मिथु । अग्ने तदस्य क-

---

अग्रतः रक्षकभावेन वर्तताम् । स्वस्तिदा शोभनं भावं अस्मभ्यं ददत् अभयंकरः भयनिवृत्तेः कर्ता वक्ता वा माभैषीरिति । 'मेघर्तिभयेषु' इति खल्विभीयमानः अभयेऽपि भवति ॥

[9]आभिरिति त्रिष्टुप् ॥ हे हरिवः! अश्ववन्! आभिः अस्मदुक्ताभिः गीर्भिः वर्धमानः त्वं आप्यायय वर्धय । किं? यत् अतः अस्माभिः अनुष्ठितात् कर्मणः ऊनं विकलं आसीत्, तत्सर्वं आप्यायय । यदा त्वं स्तोतृभ्यः स्तोत्रर्थं महि महत् अत्यर्थं सादरं गोत्राणि मेघान् रुजासि वृष्ट्यर्थं भिनक्षि तदा तथा स्तोतृत्ववत्सलः त्वं अस्माकं स्तोतॄणां कर्म संपूरयेति भावः । रुजेर्लेट्याडागमः । अध अत एव वयं ते त्वत्सकाशात् भूयिष्ठभाजः स्याम बहुतमानां धनादीनां लब्धारो भूयास्म ॥

[10]अनाज्ञातमिति द्वे अनुष्टुभौ ॥ अनाज्ञातं शास्त्रमर्यादया अज्ञातं, यच्च आज्ञातं तथा ज्ञातं यज्ञस्य सम्बन्धि कर्म मिथु मिथ्या क्रियते फलसाधनासमर्थं अन्यथा क्रियते अनाज्ञातस्य अनाज्ञातत्वादेव अन्यथा करणम् । ज्ञातस्याप्युपेक्षया अन्यथा

ल्पय । त्वꣳ हि वेत्थ यथातथम् । [11]पुरुषसंमितो यज्ञः । यज्ञः पुरुषसंमितः । अग्ने तदस्य कल्पय। त्वꣳ हि वेत्थ यथातथम् । [12]यत्पाकत्रा मनसा दीनदक्षा न । यज्ञस्यं मन्वते मर्तासः । अग्निष्टद्धोता

---

क्रिया स्यात् । हे अग्ने! तत् सर्वं अस्य कर्मणः सम्बन्धि कल्पय फलसाधनसमर्थं कल्पय अविकलं कुरु । त्वं हि यथातथं वेत्थ, यथात्वं कर्मणः स्वभावः, तस्यानतिवृत्तावव्ययीभावः॥

[11]पुरुषसम्मित इति ॥ पुरुषः विशिष्टदेहश्चेतयिता, तेन सम्मितः तुल्यः यज्ञो नाम यथा पुरुषोऽयं अन्यूनानतिरिक्तविशिष्टावयवारब्धशरीरः एवं यज्ञोऽप्यन्यूनानतिरिक्ताङ्गविशिष्टाङ्गसङ्घातावयववान् । उपमानपूर्वपदप्रकृतिस्वरत्वम् । किञ्च—पुरुषसम्मितः पुरुषेण सम्यङ्निर्वर्तितश्चेत् अयं यज्ञो भवति यज्ञस्वभावभाग्भवति, इतरथा अयज्ञ एव स्यात् । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । यस्मादेवं तस्मात् तस्य यत् न्यूनं तत्कल्पय यज्ञस्वभावानुरूपं कुरु यज्ञत्वाय । त्वं हि यज्ञस्वभावं यथावद्वेत्थ ॥

[12]यत्पाकत्रेति त्रिष्टुप् ॥ पक्तव्यं बालं मनः पाकं तत्प्रकारेण मनसा । स्वार्थिकस्त्राप्रत्ययः । पाकगामिना वा मनसा उपलक्षिताः मर्ताः दीनदक्षाः क्षीणोत्साहाः यज्ञस्य सम्बन्धि यत् कर्म न मन्वते न जानन्ति तत्सर्वं विजानन् सञ्जातवै-

क्रतुविद्विजानन् । यजिष्ठो देवाꣳ ऋतुशो यजा-
ति ॥११५॥

देवाꣳश्चित्रं तनूभ्यस्स्वाहोनं पुरुषसंमितोऽग्ने
तदस्य कल्पय पश्च च ॥११॥

[1]यद्देवा देवहेडनम् । देवासश्चकृमा वयम् ।

---

गुण्यं जानन् क्रतुवित् विगुणस्य क्रतुस्वरूपस्य वेत्ता होता देवानां आह्वानकुशलः यजिष्ठः यष्टृतमः मानुषेभ्यः होतृभ्यः ईदृशः अग्निः देवान् ऋतुशः कालेकाले यजाति यजतु । लेट्याडागमः । 'संख्यैकवचनाच्च' इति शस् । यष्टृशब्दात् 'तुश्छन्दसि' इतीष्ठनि 'तुरिष्ठेमेयस्सु' इति लोपः ॥

इति तैत्तिरीये ब्राह्मणे भट्टभास्करीये तृतीये सप्तमे
अच्छिद्रेषु एकादशोऽनुवाकः.

---

[1]एकविंशत्या दर्भपुञ्जीलैः पावितो यजमानो जपति—यद्देवा इति प्रथमा त्रिष्टुप् ॥ हे देवाः! देवासः! देवनशीलाः! । आज्जसेरसुक् । आदित्याः अदितेः पुत्राः यद्देवहेडनं देवानां क्रोधनं कर्म वयं चकृम कृतवन्तः । संहितायां दीर्घत्वं छान्दसम् । कादिनियमादिडभावः । तस्मात् क्रोधहेतोरपराधात् मा मुञ्चत यूयं, मामुत मामपि एवं नाम असद्भूतं, ऋतस्य

**आ॒दि॒त्या॒स्तस्मा॒न्मा मु॑ञ्चत । ऋ॒तस्य॒र्तेन॒ मामु॒त । [2]देवा॒ जीव॑नका॒म्या यत् । वा॒चाऽनृ॒तमू॑दि॒म । अ॒ग्निर्मा॒ तस्मा॒देन॑सः । गार्ह॑पत्यः॒ प्रमु॑ञ्चतु । दु॒रि॒ता यानि॑ चकृ॒म । क॒रोतु॒ माम॑ने॒नस॑म् ॥ ११६ ॥ [3]ऋ॒तेन॒ द्यावापृथिवी । ऋ॒तेन॒ त्वꣳ सर॑स्वति ।**

---

यज्ञस्यापि ऋतेन अनेन होमेन, तस्यापि यज्ञत्वहेतुत्वादस्य । यद्वा—सत्यस्यापि सत्यभूतेन, सर्वदा मोघत्वाभावात् ॥

[2]देवा इति षड्‌दा जगती ॥ हे **देवाः**! वयं सपुत्रपौत्राः **जीवनकाम्याः** जीवनमात्मन इच्छन्तः । काम्यजन्तात्पचाद्यच् । **यत्** अनृतं **वाचा ऊदिम** उक्तवन्तः **तस्मात्** तन्निमित्तात् **एनसः मां गार्हपत्यः अग्निः प्रमुञ्चतु यानि** चान्यानि **दुरि**तानि दुर्गाणि निमित्तानि कर्माणि सपुत्रपौत्राः **चकृम** । तेनापि कर्मणा **मां अनेनसं करोतु** । मयि शुद्धे मत्सम्बन्धिनस्सर्वे विशुद्धा इति भावः ॥

[3]ऋतेनेत्यनुष्टुप् ॥ हे **द्यावापृथिवी**! हे **सरस्वति**! सर्वा अपि यूयं मां **अंहसः मुञ्चत** । कस्मात्? **ऋतेन** यज्ञेन विगुणेन हेतुना **ऋतात्** प्राप्तात । **यच्च अन्यकृतं** अन्येन निमित्तेन यदतिरिक्तेन कृतं अन्यैर्वा शत्रुभिः अभिचारादिना कृतं पापफलं **आरिम** प्राप्नुयाम तस्माच्च मुञ्चतेति । अर्तेर्लिटि 'ऋच्छत्यृताम्' इति गुणः, 'अत आदेः' इति दीर्घत्वम् ॥

ऋतान्मा मुञ्चताꣳहसः । यदन्यकृतमारिम । [4]सजातशꣳसादुत वा जामिशꣳसात् । ज्यायसश्शꣳसादुत वा कनीयसः । अनाज्ञातं देवकृतं यदेनः । तस्मात्त्वमस्माञ्जातवेदो मुमुग्धि । [5]यद्वाचा यन्मनसा । बाहुभ्यामूरुभ्यामष्ठीवद्भ्याम् ॥ ११७॥ शिश्नैर्यदनृतं चकृमा वयम् । अग्निर्मा तस्मादेनसः । [6]यद्धस्ताभ्यां चकर किल्बिषाणि ।

[4]सजातशंसादिति जगती ॥ सजाताः समानजन्मानः, जामयः भार्याः, ज्यायान् विद्यादिना प्रशस्ततरः, कनीयान् तेनाप्यल्पतरः, एतेषां शंसः स्तुतिः मिथ्यागुणारोपेणाव्याकुलीकरणं तस्माद्धेतोः, अनाज्ञातं बुद्ध्या अननुसंहितं देवकृतं देवविषये मया कृतं यत् एनः पापं तस्मात् अस्मान् त्वं मुमुग्धि हे जातवेदः! जातानां अव्यामोहेन वेदितः! । मुञ्चतेः 'बहुळं छन्दसि' इति शपः श्लुः । केचिदाहुः—विपरीतलक्षणया शंसः आक्रोशः इति, तन्निमित्तात् पापात् मुञ्चत इति योज्यम् ॥

[5]यद्वाचेत्यतिशक्करी सप्तपदा ॥ वागादिभिः यदनृतं पापं वयं चकृम । अग्निर्मेत्यादि गतम् । अष्ठीवद्भ्यां जानुभ्याम् । शिश्नैरिति वचनव्यत्ययेन बहुवचनम् । यद्वा—शिश्नचापलप्रकारैः । गतमन्यत् ॥

[6]यद्धस्ताभ्यामिति त्रिष्टुप् ॥ हस्ताभ्यां यत् यानि किल्बिषाणि, अक्षाणां इन्द्रियाणां वग्नुं वर्जनीयं अगन्तव्यविषयं

अक्षाणां वग्नुमुप जिघ्नमानः । दूरेपश्या च राष्ट्रभृच्च । तान्यप्सरसावनुदत्तामृणानि । [7]अदीव्यन्नृणं यदहं चकार । यद्वाऽदास्यन्थ्संजगारा जनेभ्यः । अग्निर्मा तस्मादेनसः । [8]यन्मयि माता गर्भे सति ॥११८॥ एनश्चकार यत्पिता । अग्निर्मा

उपजिघ्नमानः उपघ्नन् उपगच्छन् विषयभोगसक्तः । यद्वा— विषयमुपशमं कुर्वन् । हन्तेर्व्यत्ययेनात्मनेपदम्, ताच्छीलिको वा चानश्, व्यत्ययेन शपः श्लुः, विकरणत्वेन शः, 'बहुलं छन्दसि' इत्यभ्यासस्येत्वम्, 'गमहन' इत्युपधालोपः, कृदुत्तरपदप्रकृतिस्वरत्वेन 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । अनुदत्तां ऋणानि दूरेपश्या च राष्ट्रभृत् इत्येते अप्सरसौ अनुदत्तां आनुपूर्व्येण यथास्वं प्रत्यर्पयताम् ॥

[7]अदीव्यन्निति शक्करी पङ्क्तिः ॥ अदीव्यन् समीचीनव्यवहारमकुर्वन्, यद्वा—यात्रां निर्वोढुं अशक्नुवन् हिंसित्वा यदृणं अहं चकार, यच्च अदास्यन् अप्रत्यर्पयिष्यन् न प्रतिदास्यते इदानीं तावत् गृह्यतामित्यभिसन्धि कुर्वन् जनेभ्यः आदाय यत्संजगार भक्षितवानस्मि । छान्दसं संहितायां दीर्घत्वम् । अग्निर्मा तस्मादिति गतम् ॥

[8]यन्मयीति षट्पदा जगती ॥ मयि गर्भस्थे सति माता यदेनः परपुरुषसेवादि चकार, पिता यदेनः प्रतिषिद्धमैथुनादि चकार । अग्निर्मेत्यादि गतम् ॥

तस्मादेनसः । [9]यदापिपेष मातरं पितरम् । पुत्रः प्रमुदितो धयन् । अहिंसितौ पितरौ मया तत् । तदग्ने अनृणो भवामि । [10]यदन्तरिक्षं पृथिवीमुत द्याम् । यन्मातरं पितरं वा जिहिंसिम । अग्निर्मा तस्मादेनसः । [11]यदाशसा निशसा यत्पराशसा ॥ ११९ ॥ यदेनश्चकृमा नूतनं यत्पुराणम् । अग्निर्मा

[9]यदापिपेषेति बृहती, पङ्क्तिर्वा ॥ यदहं मातुरुत्सङ्गस्थः मातरं आपिपेष पीडितवानस्मि हस्तपादेन । पितरं च पितुरुत्सङ्गस्थः । पुत्रः दुःखात् पुन्नाम्नः त्राता । क्षान्तिहेतुरयम् । प्रमुदितः हृष्टात्मा धर्माधर्मयोः अज्ञाता । तदपि कुत इत्याह— धयन् स्तनं पिबन् । अवस्थाप्रदर्शनेन अज्ञत्वं दर्शयति । तत् तदा मया तादृशेन पितरौ मातापितरौ अहिंसितौ अनुपद्रुताविव । यद्वा—क्रोधकारिणौ मा भूताम्, तथाऽपि तयोः या क्षान्तिः तदानीं नाभूत् तत्राहं अनृणो भवामि तत्प्रत्युपकाराकरणपापरहितो भूयासं त्वत्प्रसादेन ॥

[10]यदन्तरिक्षमिति शक्करी पद्वदा ॥ यदन्तरिक्षादीनि यजिर्हिंसिम हिंसितवानस्मि तदनिष्टाचरणात् । लोकवासिनो वा गृह्यन्ते । अग्निर्मेत्यादि तुल्यम् ॥

[11]यदाशसेति शक्करी पद्वदा ॥ शसु हिंसायां, आशसा आभिमुख्येन हिंसया निशसा निभृतया हिंसया पराशसा

तस्मादेनसः । [12]अतिक्रामामि दुरितं यदेनः । जहामि रिप्रं परमे सधस्थे । यत्र यन्ति सुकृतो नापि दुष्कृतः । तमारोहामि सुकृतां नु लोकम् । [13]त्रिते देवा अमृजतैतदेनः । त्रित एतन्मनुष्येषु मा मृजे । ततो मा यदि किंचिदानशे । अग्निर्मा तस्मादेनसः ॥ १२० ॥ गार्हपत्यः प्रमुञ्चतु । दु-

अनिवृत्तया हिंसया, एवं यदेनः चकृम । नूतनं इदानींतनं, पुराणं पूर्वस्मिन् जन्मनि भवम् । अग्निर्मेत्यादि समानम् ॥

[12]अतिक्रामामीति त्रिष्टुप् ॥ यद्दुरितं दुर्गतिकारणं एनः पापं तदहं अतिक्रामामि अतिक्रम्य गच्छामि त्वत्प्रसादात् । किञ्च—परमे सधस्थे सहस्थाने अस्मिन् संसारे यन्मयि रिप्रं पापं लिप्तमिव निर्मार्ष्टुं शक्यं तदपि जहामि त्यजामि त्वत्प्रसादात् । ततश्च यत्र यन्ति सुकृत एव न कदाचिदपि दुष्कृतः तं सुकृतामेव सम्बन्धिनं लोकं आरोहामि । नु पूरणं अविघ्नेन वा ॥

[13]त्रित इत्यादि षड्ढा ॥ 'तत एकतोऽजायत'* इत्यत्रोक्तानां एकतादीनां त्रयाणामपि प्रदर्शनार्थं त्रितग्रहणम् । तस्मिन् त्रिते देवाः एतत् एनः पापं अमृजत 'ते देवा आप्त्येष्वमृजत'* इति दर्शनात् । स च त्रितः एतत् पापं मनुष्येषु सूर्याभ्युदितादिषु मामृजे । तुजादित्वादभ्यासस्य दीर्घत्वम् । ततः

* ब्रा. ३-२-८.

रिता यानि चकृम । करोतु मामनेनसम् । [14]दिवि जाता अप्सु जाताः । या जाता ओषधीभ्यः । अथो या अग्निजा आपः । ता नश्शुन्धन्तु शुन्धनीः । [15]यदापो नक्तं दुरितं चराम । यद्वा दिवा नूतनं यत्पुराणम् । हिरण्यवर्णास्तत उत्पुनीत नः।

मां मनुष्यं यदि किञ्चित् पापं आनशे व्याप्नोति, अग्निर्मेत्यादि गतम् ॥

[14]दिवि जाता इत्यनुष्टुप् ॥ या आपः दिवि जाताः द्युलोकप्रादुर्भूताः नित्याः वर्तन्ते । याश्च अप्सु कर्मसु जाताः कर्मजन्याः, अपां स्थानेषु कूपादिषु वा आविर्भूताः । याश्च ओषधीभ्यः आविर्भूताः, रसात्मिकाः । अथो अपि च या अग्निजाः विद्युतो जाताः रविकिरणेभ्यो जाताः वर्ष्याः । तास्सर्वाः आपः अस्मान् शुन्धन्तु शोधयन्तु शुन्धनीः सर्वस्य लोकस्य शोधन्यः ॥

[15]यदाप इति त्रिपदा त्रिष्टुप्, विराड्वा ॥ हे आपः! यद्दुरितं पापं वयं चराम आचराम नक्तं रात्रौ । यच्च दिवा अहनि यन्नूतनं इदानीन्तनं यच्च पुराणं पूर्वमाचराम । यद्वा—नूतनं नवं मदुपज्ञं पापं तत् । पुराणं पूर्वमेव प्रसिद्धम् । ततः तस्मात् पापात् उत्पुनीत उत्कृष्टं शोधयत नः अस्मान् हे हिरण्यवर्णाः! हितरमणीयवर्णाः! उज्ज्वलवर्णा वा॥

[16]इमं मे वरुण तत्त्वा यामि । त्वं नो अग्ने स त्वं नो अग्ने । त्वमग्ने अयाऽसि ॥ १२१ ॥

अनेनसमष्ठीवद्धयाꣳ सति पराशसाऽऽनशोऽग्निर्मा तस्मादेनसः पुनीत नस्त्रीणि च ॥ १२ ॥

यद्देवा गार्हपत्यो यद्धस्ताभ्यां यन्मयि माता यदापिपेष यदन्तरिक्षं यदाशसाऽतिक्रामामि त्रिते देवा दिवि जाता अफ्सु जाता यदाप इमं मे वरुण तत्त्वा यामि त्वं नो अग्ने स त्वं नो अग्ने त्वमग्ने अयाऽसि ॥

[1]यत्ते ग्रावृण्णा चिच्छिदुस्सोम राजन् । प्रिया-

[15]इमं मे वरुणेत्यादि पञ्चानां प्रतीकग्रहणम् । व्याख्याताश्चैता 'इन्द्रं वः'* इत्यादिषु† ॥

इति तैत्तिरीये ब्राह्मणे भट्टभास्करीये तृतीये सप्तमे अच्छिद्रेषु द्वादशोऽनुवाकः.

---

[1]दध्ना पयसा वा मधुमिश्रेण ऋजीषमभिजुह्वति—यत्ते ग्राव्णेति त्रिष्टुभा ॥ हे राजन्! राजनशील! सोम! यत् यानि तव अङ्गानि प्रियाणि प्रियतराणि ग्राव्णा ग्रावभिः जातावेकवच-

* सं. २-१-११. † सं. २-५-१२, मं. १-४-१६.

ण्यङ्गानि स्वधिता परूꣳषि । तथ्संधथ्स्वाज्येनोत वर्धयस्व । अनागसो अधमिथ्संक्षयेम । [2]यत्ते ग्रावा बाहुच्युतो अचुच्यवुः । नरो यत्ते दुदुहुर्दक्षिणे-

नम्, चिच्छिदुः अभिषुण्वन्तः ऋत्विजः पीडितवन्तः । स्वधिता स्वभितानि आत्मनि निहितानि आत्मीयानि परूंषि पर्वाणि चिच्छिदुः इत्येव । यद्वा—स्वधिता स्वधितिना । तृतीयाया याडादेशः । तेन पशोः परूंषि अवयवान् छिन्दन्ति । एवं तव यान्यङ्गानि चिच्छिदुः । तत् तानि संधत्स्व प्रकृतिस्थानि निर्बाधानि स्थापय । आज्येन आज्यसदृशेन मधुना दध्ना वा पयसा वा मिश्रेण संधानप्राप्तानि कुरु । उत अपि च वर्धयस्व भूयः वृद्धतराणि कुरु । ततः वयं अनागसः अनपराधाः अधमित् अत एव हेतोः । छान्दसो मकारोपजनः संहितायां, शब्दान्तरं वा अथेत्यनेन समानार्थम्, 'अव्ययादाप्सुपः' इत्यस्यापवादो वा अम्भावः । संक्षयेम सम्यग्वसेम, क्षि निवासगत्योः ॥

[2]यत्ते ग्रावेति प्रस्तारपङ्क्तिः ॥ हे सोम! देव! देवनशील! तव अङ्गं ग्रावा अश्मा बाहुच्युतः बाहुभ्यां संप्राप्तः संगृहीतः । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । अचुच्यवुः अच्यावयत् अपातयत् । वचनव्यत्ययः, अन्तर्भावितण्यर्थाल्लुङि शपश्श्लुः, 'जुसि च' इति गुणः, 'बहुळमन्यत्रापि' इति वा णिलुक् । प्रहारदार्ढ्यार्थं बाहुच्युत इत्युक्तम् । किंच—यत्तवाङ्गं दक्षिणेन

न । तत्त॒ आप्यायतां तत्ते । निष्ट्यायतां देव सोम । [3]यत्ते॒ त्वचं बिभि॒दुर्यच्च॒ योनिम् । यदा॒स्थाना॒त्प्रच्यु॑तो वेनसि॒ त्मना ॥ १२२ ॥ त्वया॒ तत्सोम गुप्त-

प्रबलेन हस्तेन नरः मनुष्याः ऋत्विजः दुदुहुः रसादानेन रिक्तीकृतवन्तः । प्रपूरणं पूरणनिवृत्तिः प्रस्मरणादिवत् । तत् तवाङ्गं आप्यायतां वर्धताम् । व्याप्त्यर्थं तत्त इति द्विर्वचनम्, सर्वं अङ्गं आप्यायतामिति, यथा—'पुरुष इष्टकामुपादधात्पुरुष इष्टकाम्'* इति । किञ्च—तत्तवाङ्गं सर्वं निष्ट्यायतां पीडनेन विश्लिष्टं पुनः सङ्घीभवतु निरन्तरं निश्चयेन वा । निष्ट्यानार्थं वा द्वितीयं तत्तेग्रहणम् ॥

[3]यत्ते त्वचमिति त्रिष्टुप् ॥ हे सोम! यत् यदर्थं तव त्वचं बिभिदुः विदारितवन्तः ऋत्विजः । यच्च यदर्थं तव योनिं कारणं कन्दमूलं बिभिदुः उत्पाटनेन । यच्च त्वं आस्थानात् उत्पत्तिस्थानात् प्रच्युतः वेनसि स्मरसि उत्कण्ठां करोषि त्मना आत्मन्येव आत्मसाक्षिकमेव, लतासाहचर्यात् तेजितानां आस्थानावाससुखानां स्मरसि । तत् अस्माकं कर्म त्वयैव विस्मृतापकारेण गुप्तं रक्षितं अस्तु कर्मार्थं इदं एभिः कृतं न वृथेति क्षन्तव्योपराध इति यावत् । नः अस्माकं परमे उत्कृष्टे व्योमन् विशेषेण रक्षके स्वर्गे निमित्तभूते सति त्वया सह सा सन्धा तत्संधानं अपकारविस्मृतिलक्षणं असत् अस्तु । अस्तेर्लेट्यडागमः ॥

* ब्रा. १-१-२.

मंस्तु नः । सा नंस्सन्धाऽसंत्परमे व्योमन् । [4]अहाच्छरीरं पयंसा समेत्यं । अन्योऽन्यो भवति वर्णो अस्य । तस्मिन्वयमुपहूतास्तवं स्मः । आ नो भज सदंसि विश्वरूपे । [5]नृचक्षास्सोमं उत शुश्रुगंस्तु । मा नो विहासीद्गिरं आवृणानः । अना-

---

[4]अहादित्यादयः त्रिष्टुभः ॥ अहात् अजहात् अत्यजत् । व्यत्ययेन शपो लुक् । तव अभिषुतस्य शरीरं अन्यः नैजो वर्णः रूपं अजहात् । पयसा दध्ना मधुना च समेत्य यथा अस्य शरीरस्य अन्यः मनोहरः वर्णः भवति जायते, तस्मिन् तथाकरणे वयं उपहूताः त्वयैवानुज्ञाताः यस्मात् तस्मात् तवैव सम्बन्धिनः वयं स्मः । यद्वा—तस्मिन् उपहूताः स्मः भूयास्म तव तस्मिन् कर्मणि । अतः अस्मान् आभज आस्थापय सदसि स्थाने विश्वरूपे सर्वभोग्यफलसमृद्धे ॥

[5]नृचक्षा इति ॥ उत अपि च अयं सोमः नृचक्षाः नृननुग्रहदृष्ट्या सदा पश्यन् । 'गतिकारकयोरपि' इत्यसुन्, 'परादिश्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् । शुश्रुक् अस्तु अस्मद्गिरां श्रोता भवतु । क्विपि छान्दसं द्विर्वचनं, कुक्, अन्त्यविकारश्च । यद्वा—शुश्रूषितव्योऽस्तु । सन्नन्तात् क्विपि अतो लोपे वर्णयोर्विकारः । मा च अस्मान् कदाचिदपि विहासीत् मा त्याक्षीत्, अस्माकं गिरः स्तुतीः आवृणानः संभजमानः स्तुतिभिः प्रसन्नः अभिषवादि अपराधं क्षमतां इति भावः ।

गास्तनुवो वावृधानः। आ नो रूपं वहतु जायमानः ॥ १२३ ॥ [6]उप क्षरन्ति जुह्वो घृतेन । प्रियाण्यङ्गानि तव वर्धयन्तीः । तस्मै ते सोम नम इद्वषट्च । उप मा राजन्थ्सुकृते ह्वयस्व । [7]सं प्राणापानाभ्याꣳ समु चक्षुषा त्वम् । सꣳ श्रोत्रेण

---

ततः अनागाः विस्मृतसकलापराधः तनुवः निजशरीराणि प्रत्यहं वावृधानः वर्धयन् । ण्यन्तात् छान्दसस्य लिटः कानच् । 'तुजादीनाम्' इत्यभ्यासस्य दीर्घत्वम् । 'बहुळं संज्ञाछन्दसोः' इति णिलुक् । नः अस्माकं आ सर्वतः सर्वकार्येषु जायमानः रूपं प्रशान्तं वहतु ॥

[6]उपक्षरन्तीति ॥ हे सोम! राजन्! तव प्रियाणि अङ्गानि जुह्वः स्रुचः उपक्षरन्ति उपेत्य सिञ्चन्तु घृतेन क्षरणैः पयोदधिमधुभिः वर्धयन्त्यः त्वाम् । तस्मै तुभ्यमेव वषट्कारः नमः नमस्कारश्च युज्यते । मया च तथैव तत्क्रियते । अतः मां सुकृते शोभनकर्मफले उपह्वयस्व अनुजानीहि ॥

[7]संप्राणापानाभ्यामिति ॥ हे सोम! राजन्! प्राणादिभिः आत्मीयैः सङ्गच्छस्व यतव शरीरे आस्थितं जातं पाषाणादिविकारजातं तत् शमु शान्तमेव सुखनिमित्तमेव अस्तु । अतः त्वं अस्माकं जानीतात् जानीहि पथीनां पथां सङ्गमने सहगमने मित्रत्व इति यावत् । यद्वा—पथां सङ्गमे तव पथित्वे

गच्छस्व सोम राजन् । यत्त आस्थितꣳ शमु तत्ते अस्तु । जानीतान्नस्संगमने पथीनाम् । [8]एतं जानीतात्परमे व्योमन् । वृकास्सधस्था विद रूपमस्य ॥ १२४॥ यदा गच्छात्पथिभिर्देवयानैः । इष्टापूर्ते कृणुतादाविरस्मै । [9]अरिष्टो राजन्नगदः परेहि ।

---

सङ्गमे अस्माकं जानीतात् हवींषि सामर्थ्यात् गम्यते । यद्वा— पथां सङ्गमेनैषां मनोहरतया अस्मान् जानीहि ज्ञास्यसि उपकृतमेवमेभिरिति । 'बहुळं छन्दसि' इति पथ ईकारः ॥

[8]एतमित्यादि ॥ हे वृकाः! वारकाः रश्मयः! यद्वा—विवृतकान्तयो वृकाः पुण्यात्मानः हे सधस्थाः! सहानेन स्थिताः! 'सधमाधस्थयोः' इति सधादेशः । एतं सोमं परमे व्योमन् विविधरक्षणे स्वर्गे जानीतात् जानीत । 'तस्य तात्' इति तादादेशः । रूपं च अस्य सोमस्य स्पष्टं विद जानीत किं यत्पुण्योऽयमिति । 'विदो लटो वा' इति थस्याकारः । आमन्त्रितयोरविद्यमानत्वात् निघाताभावः । ततः यदा अग्रं पथिभिः देवयानैः गच्छात् गच्छेत् । लेट्याडागमः । तदा अस्मै इष्टापूर्ते इष्टापूर्तफलानि आविष्कृणुतात् आविष्कृणुत त्वया एतानि भोक्तव्यानीति । इष्टं देवानां, पूर्तं पितॄणाम् ॥

[9]अरिष्ट इति ॥ हे राजन्! अरिष्टः केनचिदप्यहिंसितः अरोगश्च सन् परेहि परागच्छ । नमस्ते अस्तु चक्षसे दर्श-

नमस्ते अस्तु चक्षसे रघूयते । नाकमारोह सह यजमानेन । सूर्यं गच्छतात्परमे व्योमन् । [10]अभूद्देवस्सविता वन्द्योऽनु नः । इदानीमह्न उपवाच्यो नृभिः । वि यो रत्ना भजति मानवेभ्यः । श्रेष्ठं नो अत्र द्रविणं यथा दधत् । [11]उप नो मित्रावरुणा-

---

नकुशलाय रघूयते रघ्वीं शीघ्रां गतिं आत्मन इच्छते । कपिलकादित्वात् लत्वविकल्पः, 'शतुरनुमः' इति विभक्तेरुदात्तत्वम् । नाकं अविद्यमानदुःखस्थानं यजमानेन सह आरोह । ततः परमे व्योमन् पुण्यस्थाने वर्तमानं सूर्यं गच्छतात् गच्छ ॥

[10]अभूद्देव इति जगती ॥ इदानीं सोमाराधनानन्तरं नः अस्माकं निर्दोषाणां देवः सविता वन्द्यः अभूत् भवति । यो देवः अह्नः सम्बन्धेन नृभिः मनुष्यैः शूरैः उपवाच्यः उपेत्य वक्तव्यः स्तोतव्यः स्वस्वाभिलषितसिद्ध्ये । तस्मात् अस्माभिरपि अयं देवः वन्द्य इति । कः पुनरस्य विशेष इत्याह— यः रत्नानि रमणीयानि धनानि मानवेभ्यः विभजति उदयादिभिः, स देवः अस्मभ्यं श्रेष्ठं प्रशस्यतमं द्रविणं अत्रैवाहनि यथा दधत् दद्यात् तथा अयं देवः इदानीं वन्द्य इति । लेट्याडागमे 'धोर्लोपो लेटि वा' इति लोपः ॥

[11]उप न इति त्रिष्टुप् ॥ मित्रावरुणौ नः अस्मान् निवृत्तसोमापराधान् इह अहनि उपावतम् । हे सखाया ! समानख्यानौ ! अस्मदर्थं एकमतीभवन्तौ ! । 'सुपां सुलुक्' इत्याकारः ।

विहावतम् । अन्वादीध्याथामिह नस्सखाया । आदित्यानां प्रसितिर् हेतिः । उग्रा शतापाष्ठा घ विषा परि णो वृणक्तु । [12]आ प्यायस्व सं ते॥१२५ त्मना जायमानोऽस्य दधत्पञ्च च ॥१३॥

[1]यद्दिदीक्षे मनसा यच्च वाचा । यद्वा प्राणैश्च-

इह अस्मान् अन्वादीध्याथां अनुक्रमेण सर्वथा दीप्तान् कुरुतम् । दीधीङ् दीप्तिदेवनयोः । ततः युवयोः प्रसादात् आदित्यनां सम्बन्धिनी या प्रसितिः प्रकृष्टबन्धना हेतिः हिंसा दुष्कृतकारिषु भवति । उग्रा उद्गूर्णा शतापाष्ठा बहुपाशा बहुस्पाशा वा । यद्वा—आष्ठा दिशः शतधा आप्या आष्ठा अस्या इति शतापाष्ठा । घेति पूरणः, प्रसिद्धौ वा । विषा व्यापिनी । विषेः इगुपधलक्षणः कः । सर्वा अस्मान् परिवृणक्तु सर्वतो वर्जयतु ॥

[12]आप्यायस्व समेतु ते, सं ते पयांसीति गायत्रीत्रिष्टुभौ ॥ 'मा नो हंसीत्'* इत्यत्र व्याख्याते । इह तु अनयोः प्रतीकग्रहणम्॥

इति तैत्तिरीये ब्राह्मणे भट्टभास्करमिश्रविरचिते तृतीये सप्तमे त्रयोदशोऽनुवाकः.

---

[1]अवभृथे स्नात्वा त्रिरञ्जलिनाऽपो विषिञ्चति—यद्दिदीक्षे इति षड्दया घृ.या । यदहं दिदीक्षे यां दीक्षां कृतवानस्मि 'वाचा

* सं. ४-२-७.

क्षुषा यच्च श्रोत्रेण । यद्रेतसा मिथुनेनाप्यात्मना । अद्भ्यो लोका दधिरे तेज इन्द्रियम् । शुक्रा दीक्षायै तपसो विमोचनीः । आपो विमोक्त्रीर्मयि तेज इन्द्रियम् । [2]यदृचा साम्ना यजुषा । पशूनां चर्मन् हविषा दिदीक्षे । यच्छन्दोभिरोषधीभिर्वन-

मे वाग्दीक्षताम्'* इत्यादिदीक्षितवादादिनिगमलक्षणं व्रतम् । मनआदिभिः दीक्षा तद्विषये नियतत्वम् । रेतसा दीक्षा तस्य स्कन्दनान्निवृत्तिः । आत्मना दीक्षा पुरुषार्थान्निवृत्तिः । एवं यां दीक्षां कृतवानस्मि तस्या दीक्षायाः **विमोक्त्रीः** विमोक्त्र्यः मां विमुञ्चन्त्यः **आपः मयि तेजः इन्द्रियं** च **दधिरे** दधतां स्थापयन्तु । ताभिः एवं च दीक्षायाः मुक्तोऽहं तेजस्वी इन्द्रियावांश्च भवामीति भावः । कः पुनरपां विशेष इत्याह—**अद्भ्यो** हि हेतुभ्यः सर्वे **लोकाः** लोकवासिनः **तेजः इन्द्रियं** च दधते । तस्मात् ता एव **शुक्राः** निर्मलाः **तपसः** उपसदश्च **विमोचनीः** सम्यगनुष्ठाप्य तत उत्तारयित्र्यः मां दीक्षायाः विमुञ्चन्तु, ता एव हि ईदृश्या दीक्षाया विमोक्तुं क्षमाः, **तेजः इन्द्रियं** च मयि दधत्विति ॥

**यदृचा** इत्यष्टिः षड्वा ॥ यत् अहं ऋगादिभिः **दिदीक्षे** । यच्चाहं **पशूनां** चर्मणि कृष्णाजिनादौ दिदीक्षे । यच्च **हविषा** पयआदिना दिदीक्षे । यच्च **छन्दोभिः** गायत्र्यादिभिः । यच्च

* आप. श्रौ. सू.

स्पतौ । अद्भ्यो लोका दधिरे तेज इन्द्रियम्॥१२६
शुक्रा दीक्षायै तपसो विमोचनीः । आपो विमो-
क्त्रीर्मयि तेज इन्द्रियम् । [3]येन ब्रह्म येन क्षत्त्रम् ।
येनेन्द्राग्नी प्रजापतिस्सोमो वरुणो येन राजा ।
विश्वे देवा ऋषयो येन प्राणाः । अद्भ्यो लोका
दधिरे तेज इन्द्रियम् । शुक्रा दीक्षायै तपसो वि-
मोचनीः । आपो विमोक्त्रीर्मयि तेज इन्द्रियम् ।
[4]अपां पुष्पमस्योषधीनाꣳ रसः । सोमस्य प्रियं
धाम ॥१२७॥ अग्नेः प्रियतमꣳ हविस्स्वाहा ।

---

ओषधीभिः दर्भपुञ्जीलैः यच्च वनस्पतौ वनस्पतिविषये दण्डा-
दिना दिदीक्षे । ततः मां आपः मुञ्चन्तु । अद्भ्यो लोकाः
इति समानम् ॥

[3]येन ब्रह्मेति ॥ ब्रह्मादीनि लोकान्तानि मां प्रपेदिरे ।
यद्वा—येन कारणेन ब्रह्मादीनि लोकान्तानि तेजः इन्द्रियं
च अद्भ्यो दधिरे, तस्मात् ताः मां दीक्षाया विमुच्य तेज
स्विनं इन्द्रियवन्तं च कुर्वन्त्विति । गतमन्यत् ॥

[4]आर्त्विज्येन सोमं भक्षितवतः होममन्त्राः—अपां पुष्पम-
सीत्यादीनि यजूंषि ॥ हे आज्य! अपां पुष्पं वृष्ट्याः परि-
णतिरसि तृणनिष्पत्त्यादिक्रमेण वृष्टिजन्यत्वात् । ओषधीनां

अपां पुष्पंमस्योषंधीनाꣳ रसंः । सोमंस्य प्रियं धामं । इन्द्रंस्य प्रियतंमꣳ हविस्स्वाहां । अपां पुष्पंमस्योषंधीनाꣳ रसंः । सोमंस्य प्रियं धामं । विश्वेषां देवानां प्रियतंमꣳ हविस्स्वाहां । [5]वयꣳ सोंम व्रते तवं । मनंस्तनूषु पिप्रंतः । प्रजावंन्तो

---

रसः रसपरिणामोऽसि, तृणादिभक्षणेन गोभ्यो जातत्वात् । सोमस्य प्रियं इष्टं धाम जन्म त्वमसि । सोमस्यैवेदं जन्म प्रियतमं यदाज्यं नामेति भावः । किञ्च—अग्नेरपि प्रियतमं हविरसि । तं त्वां स्वाहाकृतं करोमि सोमभक्षणनिमित्ताधर्मशोधनार्थम् । उत्तरे अनेनैव गते । इन्द्रस्य, विश्वेषां देवानां, इति विशेषौ ॥

[5]आज्यशेषं भक्षयति—वयं सोमेति गायत्र्या ॥ सोम! तव व्रते कर्मणि वर्तमानाः मनश्च तनूषु शरीरेषु शरीरविषयेऽपि पिप्रतः प्रीणयन्तः तनुवत्सु वा मनुष्येषु मनःप्रीतिं कुर्वन्तः तनुविषयं मनः पालयन्तो वा भवन्तः वयं सर्वदा प्रजावन्तः पुत्रपौत्रादिसमन्विता एव अशीमहि भुञ्जीमहि भोगान् । व्यत्ययेनात्मनेपदं, शपो लुक् । यद्वा—तनूषु पिप्रतः भजमानाः मनोरथं सर्वं अशीमहि अश्नुवीमहि । पिपर्तेश्शतरि 'अर्तिपिपर्त्योश्च' इत्यभ्यासस्येत्त्वम्, 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम्, 'अदभ्यस्तात्' इत्यदादेशः ॥

अशीमहि ॥१२८॥ [6]देवेभ्यः पितृभ्यस्स्वाहा । सोम्येभ्यः पितृभ्यस्स्वाहा । कव्येभ्यः पितृभ्यस्स्वाहा । [7]देवास इह मादयध्वम् । सोम्यास इह मादयध्वम् । कव्यास इह मादयध्वम् । [8]अनन्तरिताः पितरस्सोम्यास्सोमपीथात् । [9]अपैतु मृत्युरमृतं न आगन् । वैवस्वतो नो अभयं कृ-

---

[6]दक्षिणाग्नौ होमः—देवेभ्य इति यजूंषि ॥ देवेभ्यः देवनशीलेभ्यः पितृभ्यः सोम्येभ्यः सोममर्हद्भ्यः । सोममर्हतीति यः । कव्येभ्यः कव्यवद्भ्यः कव्यभुग्भ्यः स्वाहुतं इदमस्तु ॥

[7]जघनेन तमग्निं दक्षिणाग्रेषु दर्भेषु दधि ददाति—देवास इति यजुर्भिः ॥ आमन्त्रितानां पादादित्वात् षाष्ठिकमाद्युदात्तत्वम् । मादयध्वं तृप्यत, हे पितरः! देवादिलक्षणाः! । मद तृप्तियोगे, चुरादिः ॥

[8]उपतिष्ठते अनन्तरिता इति यजुषा ॥ सोम्याः पितरः सोमपीथात् सोमपानात् अनन्तरिताः अव्यवहिताः यथोचितं उपचिताः भवन्तु । सोमपीथानामुपचितेन सोमस्य पानेन तृप्यन्त्विति यावत् ॥

[9]द्वादशाहे पत्न्या दीक्षितेषु दीक्षानन्तरं समन्वारब्धेषु गार्हपत्ये होमः—अपैतु मृत्युरिति जगती, त्रिष्टुब्वा ॥ अपैतु अपगच्छतु मृत्युः अमृतं अमृतत्वं नः आगन् आगच्छतु । छा-

णोतु । पर्णं वनस्पतेरिव ॥ १२१॥ अभि नश्शीयतां रयिः । सचतां नश्शचीपतिः । [10]परं मृत्यो अनु परेहि पन्थाम् । यस्ते स्व इतरो देवयानात्। चक्षुष्मते शृण्वते ते ब्रवीमि । मा नः प्रजां री-

---

न्दसे लुङि 'मन्त्रे घस' इति च्लेर्लुक् । 'मोनो धातोः' इति नत्वम् । वैवस्वतश्च अस्माकं अभयं कृणोतु करोतु मरणभयं मा कार्षीदित्यर्थः । किञ्च—वनस्पतेः पक्कं पर्णमिव नः अस्मान् अभिलक्ष्य रयिः धनं शीयतां अयत्नेन निपततु स्वयमेव अस्मत्पार्श्वे आगच्छतु । शद्लृ शातने, पाघ्रादिना शीयादेशः । यद्वा—अभिशायनं उपरिशयनं पुनःपुनर्वृद्धिः । यथा वनस्पतेः पर्णानां पुनःपुनः प्ररोहः एवं अस्माकं रयिः उपर्युपरि अस्मासु शीयतां उपचीयतां इति यावत् । व्यत्ययेन श्यन् । अयादेशाभावश्च । अपि च शचीपतिः इन्द्रश्च अस्माकं अस्मान्वा सचतां समवैतु ॥

[10]पत्नीवर्जितेषु दक्षिणाग्नौ होमः—परं मृत्यो इति त्रिष्टुप् ॥ हे मृत्यो! परं अन्यं पन्थानं मार्गं यत्र वयं न वर्तामहे तमेव मार्गं अनुपरेहि अपरावृत्त अनुगच्छ । कीदृशः पुनरसावित्याह—यस्तव स्वः स्वभूतो मार्गः देवयानादितरः तमनुगच्छ । वयं हि देवयाने स्थिताः । तस्मात् अस्मन्मार्गं मा गा इति । चक्षुष्मते साधुदर्शिने शृण्वते उक्तं आदरेण गृह्णते, यस्मात् इत्थं असि । तस्मात् तुभ्यं इदं ब्रवीमि—

रिषो मोत वीरान्। [11]इदमू नु* श्रेयोऽवसानमागन्म। यद्गोजिद्धनजिदश्वजिद्यत्। पूर्णं वनस्पतेरिव। अभि नश्शीयता᳒ रयिः। सचतां नश्शचीपतिः ॥ १३० ॥

वनस्पतावद्ध्यो लोका दधिरे तेज इन्द्रियं धामाशीमहीवाभि नश्शीयता᳒ रयिरेकं च ॥ १४ ॥

सर्वान् यद्विष्षण्णेन वि वै याः पुरस्ताद्देवा देवेषु परि स्तृणीत सक्षेदं यदस्य पारेऽनागस उ-

---

अस्माकं प्रजां पुत्रादिकां वीरांश्च अन्यान् पुरुषान् मा रीरिषः मा नीनशः। यद्वा—परं पन्थानं अनुपरेहीति। ननु परस्मिन्नेव पथि तिष्ठन् चौर्येणैव अस्मदीयां प्रजां हरेदिति संभावयन्नाह—चक्षुष्मते स्वयमेव निरूपकाय शृण्वते अपराधान् श्रुत्वा तदनुरूपं दण्डकारिणे तुभ्यं ब्रवीमि माऽस्माकं प्रजां अन्यायेन रीरिषः मा च वीरान् इति ॥

[11]आहवनीये जुहोति—इदमू नु श्रेय इति जगत्या त्रिष्टुभा वा ॥ इदमु इदमेव नः अस्माकं श्रेयः प्रशस्यतरं अन्येभ्यः

---

* सायणीयभाष्यानुसार्येष पाठः. भट्टभास्करीयभाष्यानुसारी तु 'इदमू नः' इति पाठः संभाव्यते। क्वचित् लिखिते मुद्रिते च कोशे 'इदमू नुः' इत्यप्युपलभ्यते.

दस्तांफ्सीद्ब्रह्म प्रतिष्ठा यद्दैवा यत्ते ग्रावृण्णा यद्दि-
दीक्षे चतुर्दश ॥ १४ ॥

सर्वान्भूतिमेव यामेवाफ्स्वाहुतिं व्रतानां पर्ण-
वल्कस्सोम्यानामस्मिन् यज्ञेऽग्रे यो नो ज्योग्जी-
वाः परोरजाः प्रतेमहे ब्रह्म प्रतिष्ठा गार्हपत्यस्त्रि-
ꣳशदुत्तरशतम् ॥ १३० ॥ सर्वान् वै—शचीपतिः ॥

हरिः ओम् तत्सत्.

---

गृहेभ्यः अवसानं यागगृहं आगन्म आगताः स्मः । छान्दसे लुङि 'मन्त्रे घस' इति च्लेर्लुक् । यदिदं गोजित् गवां जेतृ लाभहेतुः, धनजित् प्रीणनानां वस्त्राणां जेतृ, अश्वाजित् महार्घाणामश्वानामपि लाभहेतुः तस्मात् अवसानान्तरात् इदं प्रशस्यतरम् । पर्णं वनस्पतेरित्यादि सुबोधम् ॥

इति श्रीभट्टभास्करमिश्रविरचिते यजुर्वेदभाष्ये
तृतीयेऽष्टके सप्तमप्रश्ने चतुर्दशोऽनुवाकः.

अच्छिद्रप्रश्नस्समाप्तः.

हरिः ओम्.